[ विक्रमार्कचरितम् ]

# द्वात्रिंशत्पुत्तलिकासिंहासनम् ।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा,

**श्रीमज्जीवानन्द-विद्यासागर-सङ्कलितम्**

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां परिवर्त्तितं परिवर्द्धितञ्च ;

ताभ्यां कृतया

विस्तृताभिनवटीकया सहितं प्रकाशितञ्च ।

तृतीयसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

इं १९३८ ।

 मूल्यं षडाणकाधिकं रौ

# सूचीपत्रम् ।

# द्वात्रिंशत्पुत्तलिकासिंहासनम्। *

अथ मङ्गलाचरणम्।

चतुर्मुखमुखाम्भोज-वनहंसवधूर्मम।
मानसे रमतां नित्यं सर्व्वशुक्ला सरस्वती ॥ १ ॥
श्रीपुराणपुरुषं पुरातनं पद्मसम्भवमुमासुतं मया।
सुप्रणम्य सुभगां सरस्वतीं विक्रमार्कचरितं विरच्यते ॥ २ ॥

---

* द्वात्रिंशच्च ताः पुत्तलिकाः द्वात्रिंशत्पुत्तलिकाः, ताभिर्युतञ्च तत् सिंहासनम्; [ शाकपार्थिवादित्वात् उत्तरपदलोपिसमास. ]।

ग्रन्थस्य निर्विघ्नपरिसमाप्तेः विघ्नविनाशनाय च ग्रन्थादौ शिष्टपरम्परापरिप्राप्तं वाग्देवीप्रसादयाचनरूपं मङ्गलमाचरति, चतुर्मुखेति।—चतुर्मुखस्य ब्रह्मणः, मुखान्येव अम्भोजवनानि पद्मवृन्दानि, तत्रस्था हंसवधूः हंसीस्वरूपा, सर्वशुक्ला सर्वावयवेषु शुक्लवर्णा परिशुक्ला च, सरस्वती वाग्देवी, मम मानसे मनसि मानससरसि च, नित्य सदा, रमता विहरतु, मानसे सरसि पद्मवनेषु हंसीव या ब्रह्मणो मुखकमलेषु श्रुतिरूपेण विहरति, सा सर्वशुक्ला सरस्वती मम हृदये नित्य वसतु इति निष्कर्ष.। पथ्यावक्त्रं वृत्तं,—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥१॥

कृतेऽपि मङ्गलाचरणे भूयो मङ्गलाचरणेन विघ्नबाहुल्यस्य नाशो भवेत्, इति पुनरपि मङ्गलमाचरन् ग्रन्थाभिधेयमाह, श्रीपुराणेति।—पुरातन सनातनमित्यर्थः, श्रीपुराणपुरुषं विष्णु, पद्मसम्भवं पद्मयोनि ब्रह्माणम्, उमासुत गौरीपुत्रं गणेशं, सुभगा षडैश्वर्य्यशालिनीं, सरस्वतीं वाग्देवीञ्च, सुप्रणम्य सुष्ठु नमस्कृत्य, मया ग्रन्थकृता, विक्रमार्कस्य राज्ञ विक्रमादित्यस्य, चरितं चरितात्मकं काव्य, विरच्यते निबध्यते। रथोद्धता वृत्त,—"रान्नराविह रथोद्धता लगौ" इति लक्षणात्। प्रस्तारादिविस्तृतिस्तु अस्मत्कृताया छन्दोमञ्जरीनूतन-व्याख्याया द्रष्टव्या ॥२॥

## अथ अवतरणिका। *

श्रीकैलासशैलशिखरे समासीनं परमेश्वरं जगदम्बिका समवदत्,—

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा॥ ३॥

अतः कालापनयनार्थं काऽपि सकललोकचित्तचमत्कारिणी कथा कथनीया" इति। ततः परमेश्वरः पार्व्वतीं प्रति आह,—भोः प्राणेश्वरि! श्रूयतां,—सकलहृदयहारिणी कथा मया कथ्यते।—

[ इति अवतरणिका ]।

---

अवतरणिका—अवतरति ग्रन्थोऽनया [अव+तॄ—करणे ल्युट्, ततः टित्त्वात् ङीप् पुनः स्वार्थे कः, के परे अणो ह्रस्वत्वे समुदायात् टाप्], ग्रन्थप्रस्तावार्थम् आद्योपोद्घातरूपा सङ्गतिः, "आभासः" इत्याख्या इति यावत्।

कथाऽवतारणकारणमाह, काव्यशास्त्रेति।—काव्यशास्त्राणां विनोदेन आलोचनाजनितामोदेन, प्रशस्ता धीः येषां तेषां धीमतां ["भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः॥" इति नियमात् प्रशंसायां मतुप्। "तदस्यास्त्यस्मिन्निति मतुप्" ( ५। २। ९४ पा० ) इति सूत्रवृत्तौ कारिका] बुद्धिमतां जनानां, कालः समयः, गच्छति अतिवाहितो भवति, तु किन्तु, मूर्खाणाम् अज्ञानां, व्यसनेन मृगयादिना, पैशुन्यादिना च इत्यर्थः, [तच्च कामजक्रोधजभेदेनाष्टादशविधम्, तथा च मनुः,—"मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥" इति, "पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" इति च ७म अध्या० ४७। ४८ श्लोकौ] निद्रया शयनेन, कलहेन वृथाविवादेन वा, कालो गच्छतीति पूर्व्वेण सम्बन्धः। दिवानिद्राया एव व्यसनान्तर्गतत्वात् अत्र सामान्येन निद्रापदोपलम्भनात् न पुनरुक्तिः। पथ्यावक्त्रं वृत्तम्॥ ३॥

# अथ भर्तृहरेः वैराग्यकथा।

"अस्ति समस्तवस्तुविस्मितदेवा (क) गुणपराभूतपुरन्दरनिवासा (ख) उज्जयिनी नाम नगरी। तत्र सामन्तसीमन्तिनीसीमन्तसिन्दूरारुणितचरणकमलयुगलो (ग) भर्तृहरिर्नामराजाऽभूत्। सकलकलाप्रवीणः, समस्तशास्त्राभिज्ञश्च (घ) तस्यानुजो विक्रमादित्यनामा स्वविक्रमपरिहृतवैरिविक्रमोऽभूत (ङ)। तस्य भ्रातुर्भर्तृहरेर्भार्य्या रूपलावण्यादिगुणविनिर्जितसुराङ्गना (च) अनङ्गसेना नामाभूत्।

---

(क) उज्जयिनीं वर्णयति, समस्तेति।—समस्तैः वस्तुभिः विस्मिताः देवाः यस्यां सा।

(ख) गुणेत्यादि।—गुणैः पराभूतः पुरन्दरनिवासः इन्द्रभवनं स्वर्ग इत्यर्थः यया सा।

(ग) भर्तृहरिं विशेषयति, सामन्तेति।—सामन्तसीमन्तिनीनां मित्रराजमहिषीणां, सीमन्ते शिरःस्थितद्विफालबद्धकेशवर्त्मनि, स्थितेन सिन्दूरेण, अरुणितं रञ्जितं चरणकमलयुगलं यस्य सः।

(घ) विक्रमादित्यं विशेषयति, सकलेत्यादि।—सकलासु सम्पूर्णासु, चतुःषष्टिविद्यास्वित्यर्थः, कलासु सङ्गीतादिविद्यासु, प्रवीणः विचक्षणः। समस्तशास्त्राभिज्ञः,—निखिलवेदादिशास्त्रपारदर्शी।

(ङ) स्वविक्रमेति।—स्वविक्रमेण निजपराक्रमेण, परिहृतः विनाशितः, वैरिविक्रमः शत्रुप्रभाव. येन सः।

(च) अनङ्गसेनां विशेषयति, रूपेत्यादि।—रूपं नयनगोचरसौन्दर्य्यविशेषः, तथा च,—"अङ्गान्यभूषितान्येव केनचिद्भूषणादिना। येन भूषितवद्भान्ति तद्रूपमिति कथ्यते॥" इति। लावण्यं—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युज्ज्वलमणुक्तलक्षणसौन्दर्य्यभेदश्च, ते आदिनो येषां तथाविधैः गुणैः, विनिर्जिताः पराभूताः, सुराङ्गनाः देववध्वः यया सा।

तस्मिन् नगरे ब्राह्मणः कश्चित् सकलशास्त्रविचक्षणः, विशेषतो मन्त्रशास्त्रवित्, परं दरिद्रो मन्त्रानुष्ठानेन भुवनेश्वरीमतोषयत्। तुष्टा सा ब्राह्मणमवादीत्,—"भो ब्राह्मण! तव मन्त्रानुष्ठानेन भक्त्या च प्रसन्नाऽस्मि, वरं वृणीष्व"। ब्राह्मणेनोक्तं,—"यदि मे प्रसन्नाऽसि, तर्हि मां जरामरणवर्जितं कुरुष्व" इति।

ततो देव्या दिव्यमेकं फलं दत्तं, भणितञ्च,—"भोः पुत्र! फलं भक्षय, जरामरणरहितो भविष्यसि" इति। तदा ब्राह्मणस्तत् फलं गृहीत्वा, भवनं प्रत्यागत्य देवतार्चनादिकं विधाय, यावत् फलं भक्षयति, तावत् मनस्येवं बुद्धिरभूत्—"किमिति (क) अहं तावद्दरिद्रः अमरो भूत्वा कस्योपकारं करिष्यामि? परं बहुकालं जीविनाऽपि भिक्षाऽटनमेव कार्य्यम्; अतः परोपकारिणः पुरुषस्य एतत् फलं श्रेयसे भवति; यतः, यस्तु विज्ञानविभवादिगुणैर्युक्तः क्षणमपि जीवति, तस्यैव जीवितं सफलं भवति। तथा चोक्तम्,—

यत् जीवति क्षणमपि प्रथितो मनुष्यो
विज्ञान-शौर्य्य-विभवादिगुणैः समेतः।
तत् तस्य जीवितमिह प्रवदन्ति सन्तः
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते॥ ४॥

---

(क) किमिति—वितर्के।

परोपकारादिसद्गुणवतामेव जीवनं सफलं, नान्येषामिति प्रमाणयन्नाह, यदिति।—विज्ञानं शास्त्रज्ञानं, ("विज्ञानं शिल्पशास्त्रयोः" इत्यमरः) शौर्य्यं पराक्रमः विभवः सम्पत्, तदादिगुणैः तत्प्रभृतिगुणैः, समेतः समन्वितः, प्रथितः विख्यातः, मनुष्यः नरः, इह अस्मिन् जगति, यत् क्षणमपि जीवति सन्तः पण्डिताः, तस्य विज्ञानादिगुणवतः, तत् क्षणजीवनमेव, जीवितं प्रवदन्ति चिरजीवनतया वर्णयन्ति; गुणिनस्तु मृता अपि गुणस्थित्या एव आकल्पजीविन इति भावः। तदेव समर्थयते, काक इति।—काकोऽपि वायसश्च, (अपिशब्दस्यार्थे, अन्येऽपि जीवा इत्यर्थः) चिरं जीवति, बलिं परदत्तान्नाद्युपहारञ्च, भुङ्क्ते भक्षयति, ["भुजोऽनवने" (१।३।६६ पा०) इति तङ्]॥

यज्जीव्यते यशसा धर्म्म-सहितं तद्धि जीवितम्।
बलिं कवलयन् क्लिश्यन् चिरञ्जीवति वायस: ॥ ५ ॥

अपिच।—

यस्मिन् जीवति जीवन्ति बहव: स तु जीवति।
वयांसि किं न कुर्व्वन्ति चञ्च्वा स्वोदरपूरणम्? ॥ ६ ॥

किञ्च।—

क्षुद्रा: सन्ति सहस्रश: स्वभरणव्यापारपूर्णोदरा:
स्वार्थो यस्य परार्थ एव स पुमानेक: सतामग्रणी:।
दुष्पूरोदरपूरणाय पिबति स्रोत:पतिं वाड़वो
जीमूतस्तु निदाघसंहृतजगत्सन्तापविच्छित्तये" ॥ ७ ॥

---

परोपकारकरणाभावात् तस्य जीवनं निष्फलमिति भाव:। वसन्ततिलकं वृत्तं, तल्लक्षणं यथा,—"उक्ता वसन्ततिलका त-भ-जा ज-गौ ग:" इति ॥ ४ ॥

अमुमेवार्थं प्रकारान्तरेणाह, यदिति।—यशसा कीर्त्त्या, धर्म्मेण धर्म्मानुष्ठानेन च, सहितं [क्रियाविशेषणमेतत्] यत् जीव्यते, लोकेनेति शेष:, तद्धि तदेव, जीवितं जीवनपदवाच्यं भवति, नान्यदित्यर्थ:। बलिं परदत्तान्नं, कवलयन् भक्षयन्, क्लिश्यन् क्लेशं प्राप्नुवन्, वायस: काक:, चिरं बहुकालं, जीवति, तन्निष्फलमित्यर्थ:। पथ्यावक्त्रं वृत्तम् ॥ ५ ॥

अस्मिन्नेवार्थे श्लोकान्तरमवतारयति, यस्मिन् इति।—यस्मिन् जने, जीवति सति, बहव: अनेके जना:, जीवन्ति जीविकामर्ज्जयन्ति, स तु जीवति तस्यैव जीवनं सार्थकमित्यर्थ:। वयांसि पक्षिण:, चञ्च्वा त्रोट्या, स्वोदरपूरणं निजोदरपूर्त्तिं, किं न कुर्व्वन्ति?—अपि तु कुर्व्वन्त्येव। तेन न कश्चिदर्थ: सिध्यति इति भाव:। वृत्तं पूर्व्ववत् ॥ ६ ॥

परोपकारिणां सत्तमानां स्वोदरपूरणमपि परप्रयोजनसाधनाय, इति विवक्षुराह, क्षुद्रा इति।—स्वभरणव्यापारेण निजपोषणकार्य्येण, पूर्णं पूरितं, ["वा दान्तशान्त-पूर्ण—" (७।२।२७ पा०) इति णिजन्तपूरधातो: निष्ठायां पाक्षिक: निपात:] उदरं यै: ते निजोदरपूरणमात्रव्यापारिण इति भाव:, क्षुद्रा: नीचा:, सहस्रश: बहुसहस्राणि, सन्ति वर्त्तन्ते, परन्तु यस्य पुंस:, परार्थ: परप्रयोजनमेव, स्वार्थ: स्वप्रयोजनतया बोध्य:, एक: केवल:, स तादृश:, पुमान् पुरुष:, सतां साधूनाम्, अग्रणी: अग्रगण्य: भवति।

इति विचार्य्य, "एतत् फलं राज्ञे दीयते चेत्, स राजा जरामरणवर्जितो भूत्वा सर्वोपकारकर्त्ता भविष्यति" इति सञ्चिन्त्य, तत् फलं गृहीत्वा राजसमीपमागत्य,—

"अहीनां मालिकां बिभ्रत् तथा पीताम्बरं दधत्।
हरो हरिश्च भूपाल! करोतु तव मङ्गलम्" ॥ ८ ॥

इत्याशीर्वादपूर्वकं राजहस्ते फलं दत्त्वाऽब्रवीत,—"भो राजन्! देवतावरप्रसादलब्धम् (ज) इदमपूर्वफलं भक्षय, जरामरणवर्जितो भविष्यसि"। राजा च तत्फलं गृहीत्वा, तस्मै बहून् अग्रहारान् (झ) दत्त्वा विसृज्य विचारयति स्म,—"अहो! ममैतत्फलभक्षणादमरत्वं भविष्यति। मम अनङ्गसेनायाम् अतीव प्रीतिः, सा मयि जीवत्येव मरिष्यति, तदा

---

पूर्वोक्तवाक्यद्वय यथासङ्ख्य दृष्टान्तद्वयेन द्रढयति, दुष्पूरेत्यादि।—बाडवः समुद्रजलवर्त्ती वह्निः, ("बाडवो वडवानल" इत्यमरः) दुष्पूरस्य दुःखेन पूरणीयस्य, [इति खलन्त'] उदरस्य पूरणाय, स्रोतःपति समुद्रं, पिबति पीत्वा स्वोदरं पूरयति, न तु कमपि परोपकारं करोति, तु किन्तु, जीवनस्य उदकस्य मूतः पटबन्ध, [पृषोदरादित्वात् साधु, "मूत स्यात् पटबन्धेऽपि" इति रुद्रः] जीमूतः मेघः, निदाघेन ग्रीष्मतापेन, [निपूर्व्वस्य दहधातोः घञि हस्य "न्यङ्क्वादीनाञ्च" (७।३।५३ पा०) इति न्यङ्क्वादित्वात् कुत्वम्] सन्तप्तस्य क्लिष्टस्य, जगतः लोकस्य, सन्तापविच्छित्तये सन्तापनाशाय, स्रोतःपति पिबति इति पूर्वेण सम्बन्धः। शार्दूलविक्रीडित वृत्त,—"सूर्य्याश्वै, यदि म, स-जौ स-त त-गा शार्दूलविक्रीडितम्" इति लक्षणात ॥ ७ ॥

आशीर्व्वादश्लोकमाह, अहीनामिति।—हे भूपाल! हे राजन्! अहीना सर्पाणां, मालिका माला, बिभ्रत् धारयन्, हरः शिवः, अर्द्धाङ्गहरः इत्यर्थात्, तथा तद्वत्, अर्द्धाङ्गे इत्यर्थः, पीताम्बर पीतवस्त्र, दधत् परिदधानः, हरिः विष्णुः अर्द्धाङ्गहरिश्च, हरिहरमूर्त्तिः इति भावः, तव मङ्गल शुभ करोतु। पथ्यावक्त्र वृत्तम् ॥ ८ ॥

(ज) देवतेति।—देवतायाः वररूप प्रसादः अनुग्रहः, तेन लब्धं प्राप्तं, दैवानुग्रहप्राप्तम्।

(झ) अग्रहारान्—ग्रामान्।

तस्या वियोगदु:खं सोढं न शक्नोमि। तस्मादिदं फलं मम प्राणप्रियायै अनङ्गसेनायै दास्यामि" इत्यनङ्गसेनाम् आहूय दत्तवान्।

तस्या अनङ्गसेनाया: कश्चिन्माथुरिको दास: प्रियतमोऽभूत्; सा च विचार्य्य तस्मै फलं ददौ। तस्य माथुरिकस्य काचित् दासी प्रियतमाऽऽसीत्, तस्यै स प्रादात; तस्या अपि कस्मिंश्चिद्गोपालके प्रीति:, सा तस्मै दत्तवती; तस्यापि कस्याञ्चिद् गोमयधारिण्यां प्रीति:, सोऽपि तस्यै प्रायच्छत्। तत: सा गोमयधारिणी ग्रामाद्बहिर्गोमयं धृत्वा, गोमयभाजनं शिरसि निधाय, तदुपरि तत् फलं निक्षिप्य, यावद्राजवीथ्यामागच्छति, तावद्राजा भर्त्तृहरि: राजकुमारै: सह विहारार्थं बहिर्गत:। तं दृष्ट्वा अप्रार्थितयाऽपि तया तस्मै सानन्द तत्फलं स्वयमर्पितम्; राजाऽपि तदादाय सत्वरं गृहमागत:।

ततो ब्राह्मणमाकार्य्य (ञ) अवादीत्,—"भो ब्राह्मण! त्वया यत् फलं दत्तं, तादृशमन्यत् फलं सत्यं न लभ्यते किम्?" ब्राह्मणेनोक्तं,—"भो राजन्! तत् फलं देवतावरप्रसादलभ्यं दिव्यं, तादृशमन्यत् नास्ति। राजा तु साक्षादीश्वर:, तस्याग्रे अनृत न वाच्यम्; स देवतेव निरीक्षणीय:। तथा चोक्तम्,—

सर्व्वदेवमयो राजा ऋषिभि: परिकीर्त्तित:।
तस्मात् तं देववत् पश्यन् अलीक न वदेत् सुधी:" ॥ ८ ॥

---

(ञ) आकार्य्य—आहूय ["हूतिराकारणाऽऽह्वानम्" इत्यमर]।

व्यङ्गवाक्यार्थप्रथयिती ब्राह्मण. राजसमीपे अनृतकथनस्य निषिद्धतां प्रदर्शयितुं शास्त्रोक्त्या स्वयमेव राज्ञ: सर्व्वदेवमयत्व प्रमाणयति, सर्वेति।—राजा नृप, सर्व्वदेवमय सकलदेवतारूप', इति ऋषिभि मुनिभि:. परिकीर्त्तित: कथित., (तथा च मनु:,—"इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च। चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वती.॥ यस्मादेषा सुरेन्द्राणा मात्राभ्यो निर्म्मितो नृप:। तस्मादभिभवत्येष सर्व्व-

ततो राज्ञा भणितं,—"तादृशं फलं दृश्यति कश्चित्, तत्कथं सम्भवति ?" ब्राह्मणोऽब्रवीत,—"तत् फलं भक्षितं वा, न वा ?" राजाऽभणत्—"न मया भक्षितं, मम प्राणवल्लभायै अनङ्गसेनायै दत्तम्"। ब्राह्मणेनोक्तं,—"तां पृच्छतु, तत् फलं किं कृतम् ?" इति।

ततो राजा तामाकार्य्य, "तत् फलं किं कृतम् ?" इति शपथं कारयित्वाऽपृच्छत्। तयोक्तं,—"माथुरिकाय दत्तम्" इति। ततः स आकारितः (ट) पृष्टः, "दास्यै दत्तम्" इति अकथयत्, दासी गोपालकाय, गोपालकः गोमयधारिण्यै। ततो राजा च प्रतप्य परमविषादं गत्वा इमौ श्लोकौ अपठत्,—

"यां चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या
धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥ १० ॥

---

भूतानि तेजसा ॥' इति (७ अध्या० ४।५ श्लोकौ) तस्मात् कारणात्, तं राजानं, देववत् देवमिव, पश्यन् विचारयन्, सुधी बुद्धिमान् जनः, अलीकं मिथ्याःवाक्यं, न वदेत् न कथयेत्। सत्यवाक्यमेव राजसन्निधौ वक्तव्यमिति भावः। वृत्तं पूर्व्वमुक्तम् ॥ ९ ॥

(ट) आकारितः,—आहूतः। [आङ्पूर्व्वकात् कारयतेः निष्ठा]।

मत्स्याः अत्यासक्तिं चिन्तयतो राज्ञः वैराग्योदयमाह, यामिति।—यां सततं चिन्तयामि भावयामि, सा मयि विरक्ता अपगतरागवती, सा च मच्चिन्तितेति शेषः, अन्यं जनम् इच्छति कामयते, स तदिष्टो जनः, अन्यस्यां भार्य्यां, सक्तः अनुरागवान्, अस्मिन् अन्या नारी, अस्मत्कृतेऽपि मदर्थमपि, परितुष्यति प्रीतिमनुभवति, अतः ताञ्च नारीं, तञ्च पुरुषं, मदनं कामञ्च, इमाञ्च मयि सम्भावितानुरागां काञ्चिदन्यां, माञ्च धिक्। संसारोऽयं धिक् कार्य्य इति भावः। वसन्ततिलकं वृत्तं, लक्षणं प्रागुक्तम् ॥ १० ॥

रूपे मनोहारिणि यौवने च वृथैव पुंसामभिमानवृद्धिः।
नतभ्रुवां चेतसि चित्तजन्मा प्रभुर्यदेवेच्छति तत् करोति॥११॥

अहो! स्त्रीचित्तं केनापि हर्त्तुं न शक्यते!! तथा चोक्तम्,—

'अश्वप्लुतं माधवगर्जितञ्च स्त्रीणां चरित्रं पुरुषस्य भाग्यम्।
अवर्षणं चाप्यतिवर्षणञ्च देवो न जानाति कुतो मनुष्यः? ॥१२॥
गृह्णन्ति विपिने व्याधा विहङ्गं चलितस्थितम्।
सरिद्धृतवती नावं न स्त्रीणां चपलां गतिम्' ॥ १३ ॥

स्त्रीणां मनोरञ्जने रूपयौवनादिगर्व्वः अकिञ्चित्करः, तास्तु कामवशगा एव यथेप्सिताचारवत्य:, इत्यर्थं श्लोकमाह, रूपे इति।—मनोहारिणि हृदयग्राहिणि, रूपे सौन्दर्य्ये यौवने तारुण्ये च, पुंसां जनानां, वृथा निष्फलैव, अभिमानवृद्धिः अहङ्कारोदय:, भवति। चित्तजन्मा कामः, नतभ्रुवां नारीणां, चेतसि मनसि, प्रभुः अधिपतिः, स यदेव इच्छति, तदेव करोति, ताः कारयतीत्यर्थः, [ अन्तर्भावितणिच्प्रत्ययार्थः ]। कामस्येच्छानुरूपमेव स्त्रियः आचरन्ति, न तु तासां धनमानादिविचारसामर्थ्यम् इति भावः। वृत्तमुपजातिः। एतन्नामान्तरं भेदान्तरञ्चाभिनवायां पिङ्गलसूत्रव्याख्यायां छन्दोमञ्जरीव्याख्यायाञ्च विवेचितमस्माभिः ॥११॥

स्त्रीचरितं सर्वेषामेव बुद्धेरविषयम् इति वक्तुं शिष्टोक्तिमाह, अश्वप्लुतमिति।—अश्वानां वाजिनां, प्लुतं गतिविशेषं, माधवे वैशाखे, गर्ज्जितं मेघगर्ज्जनं, [ कदा भविष्यतीति निश्चयाभावात् अनियतं ] स्त्रीणां रमणीनां, चरितं स्वभावं, पुरुषस्य नरस्य, भाग्यम् अदृष्टं, तथा अवर्षणम् अनावृष्टिम्, अतिवर्षणम् अतिवृष्टिञ्च एतत्सर्वं देवोऽपि न जानाति सम्यक् नावबुध्यते, मनुष्यः कुतो जानाति? नैव जानातीत्यर्थः। [ अश्वप्लुतमित्यादौ "शूरस्य शस्त्रं कृपणस्य वित्तं मनोरथं दुर्जनमानवानाम्। स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः? ॥" इति पाठो ग्रन्थान्तरे दृश्यते ]। वृत्तमुपजातिः ॥ १२ ॥

सर्वथैव स्त्रीचरितं दुर्ज्ञेयम्, इत्यर्थं श्लोकान्तरमाह, गृह्णन्तीति।—व्याधाः शाकुनिकाः, विपिने अरण्ये, [ अत्र विपिनपदेन विहङ्गानाम् अरण्यवासितया ग्रहणाशक्यत्वं, गृहपोषितानामवलानाञ्च सुखग्राह्यत्वं ध्वन्यते ] चलितस्थितं चपलगतिमित्यर्थः, विहङ्गं पक्षिणं, गृह्णन्ति गृहीतं शक्नुवन्ति, सरित् नदी, नावं नौकां,

किञ्च,—

बन्ध्यापुत्रस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च।
स्याद् दैवात् न तु नारीणां मनःशुद्धिर्मनागपि॥ १४॥

अपि च—

सुखदुःखजिता ये हि जीवन्ति योगिनः सदा।
नूनं तेऽपि हि मुह्यन्ति न स्त्रीणां चेष्टितं विदुः॥ १५॥

---

क्षेपणादिना वायुवेगेन वा प्रतिस्रोतःसञ्चालिताम् अतश्चपलगतिमिति भावः, धृतवती धारयायास, जलस्रोतोवेगबाहुल्येन तामवरुन्धन्तीत्यर्थः, परन्तु स्त्रीणां प्रमदानां, चपला चञ्चला, गति मनोवृत्तिमित्यर्थः, न कोऽपि धारयति वशीकर्त्तुं शक्नोति। स्त्रीचेतसो नियतप्रबलचपलतया केषामपि न ग्रहणयोग्य तदिति भावः; तथा हि,—"लक्ष्मीः पयोगमाश्रमुः कुलटेव कुतूहलात्। अन्तिकेऽपि स्थिता पत्युश्छलेनान्य निरीक्षते॥" इति स्मरणात्। पथ्यावक्त्रं वृत्तम्। एतदारभ्य एकोनविंशतिश्लोकपर्य्यन्तमेतद्वृत्तमिति ज्ञेयम्॥ १३॥

दैववशादसम्भवोऽपि सम्भवितुमर्हति, न तु स्त्रीचेतसो नैर्म्मल्यसम्भावना, इति दर्शयति, बन्ध्येति।—बन्ध्यापुत्रस्य अपुत्रासुतस्य, नितान्तमसम्भावनीयस्य इति भावः, राज्यश्रीः राजत्व, गगनस्य आकाशस्य, पुष्पश्रीः कुसुमशोभा च, असम्भाविनी सत्यपि, दैवात् दैवयोगात्, कदाचिदित्याशयः, चेत् स्यात् भवेत्, तथाऽपि, नारीणां कामिनीनां, मनःशुद्धिः चित्तस्य पवित्रता, मनाक् स्वल्पाऽपि, न तु भवति। सर्व्वथाऽतिकलुषितचेतसो योषित इति भावः॥ १४॥

विरागिणोऽपि स्त्रीभिराकृष्यन्ते, का कथा विषयासक्तानाम् ? इति वक्तुमाह, सुखेति।—ये हि योगिनः तपस्विनः, सदा सततं, सुखदुःखजिता सुखदुःखे जिते वशीभूते यैः तादृशाः, [ "वाऽऽहिताग्न्यादिषु" ( २।२।३७ पा० ) इति आहिताग्न्यादित्वात् निष्ठान्तस्य पाक्षिकः परनिपातः। "सुखदुःखजितः" इति पाठे—सुखदुःखोपपदाज्जयतेः क्विप् तुगागमश्च इति सिद्धम् ] अर्थात् सुखदुःखनिरपेक्षाः, जीवन्ति प्राणान् धारयन्ति, तेऽपि तादृशमहापुरुषा अपि, नूनं निश्चितं, मुह्यन्ति मोहं प्राप्नुवन्ति, रमणीनामङ्गसौन्दर्य्य-विलासादिकं दृष्ट्वा इति शेषः, यतः तेऽपि स्त्रीणां कामिनीनां, चेष्टितम् आचरणं, न विदुः न जानन्ति, हि निश्चये। योगिनामप्यज्ञेयं स्त्रीचरितं, का कथा सामान्यनराणामिति भावः॥ १५॥

अन्यच्च,—

स्मरोत्सर्गमनुप्राप्य वाञ्छन्ति पुरुषान्तरम्।
नार्य्यः सर्व्वाः स्वभावेन वदन्तीत्यमलाशयाः॥ १६॥

तथा च,—

विनाऽञ्जनेन मन्त्रेण तन्त्रेण विनयेन च।
वञ्चयन्ति नरं नार्य्यः प्रज्ञाधनमपि क्षणात्॥ १७॥

कुलजातिपरिभ्रष्टं निकृष्टं दुष्टचेष्टितम्।
अस्पृश्यं रमणप्राप्तं मन्ये स्त्रीणां प्रियं नरम्॥ १८॥

गौरवेषु प्रतिष्ठासु गुणेषु साधुसंसदि।
धृता अपि विसृज्यन्ते दोषपङ्के स्वयं स्त्रियः॥ १९॥

---

एकपुरुषसन्मुक्ता अपि रमण्यः स्वभावत एव पुनः पुरुषान्तरसम्भोगमाकाङ्क्षन्ते, इत्यर्थे शिष्टोक्तिं प्रदर्शयति, स्मरेति।—सर्वाः सकलाः, नार्य्यः कामिन्यः, स्वभावेन स्वभावत एव, स्मरोत्सर्गं कामकार्य्यम् अनुप्राप्य लब्ध्वा, पुरुषान्तरम् अन्यपुरुषं, वाञ्छन्ति अभिलष्यन्ति, इति एतद्वाक्यम्, अमलाशयाः निर्म्मलचेतसः जनाः, वदन्ति कथयन्ति। "गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम्" इत्याद्यनुरूपोक्तेः॥ १६॥

स्त्रीणां मोहनी शक्तिरचिन्त्यपूर्व्वा इत्याह, विनेति।—नार्य्यः रमण्यः, अञ्जनेन इन्द्रजालशास्त्रोक्तमोहनकज्जलेन, मन्त्रेण वशीकरणादिमन्त्रेण, तन्त्रेण शास्त्रोक्तनियमेन, विनयेन नम्रतया च, विना ऋते प्रज्ञाधनं धीसम्पन्नमपि, किं पुनः मूर्खम्? नरं पुरुषं, क्षणात् अल्पकालेनैव, वञ्चयन्ति प्रतारयन्ति। अन्ये पुनर्मोहनकज्जलादिना वशीकरणद्रव्येण स्तुतिवादेन च साधारणं जनमपि बहुकालतः प्रतारयितुं शक्नुवन्ति, स्त्रियस्तु मोहनकज्जलादिकं विना कर्कशव्यवहारेण प्रज्ञावन्तमपि क्षणादेव प्रतारयन्ति, अतः तासामलौकिकं प्रतारणकौशलमिति भावः॥ १७॥

कामिनीनामनुरक्तौ पात्रापात्रविवेकाभावं दर्शयितुमाह, कुलेति।—कुलजातिपरिभ्रष्टं कुलेन आभिजात्येन, वंशमर्य्यादयेति यावत्, जात्या ब्राह्मणत्वादिधर्म्मेण च, परिभ्रष्टं हीनं, परित्यक्तमित्यर्थः अत एव निकृष्टं नीचं, दुष्टचेष्टितं दुराचारम्, अस्पृश्यं स्पर्शायोग्यं, घृणितमपीत्यर्थः रमणप्राप्तं रतिप्रदं, नरं मनुष्यं, स्त्रीणां रमणीनां, प्रियं प्रीतिपात्रं, मन्ये सम्भावयामि॥ १८॥

कथमपि योषितां चरित्रोत्कर्षविधानं न सम्भवतीति दर्शयितुमाह, गौरवेष्विति।

एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति च नरान् न तु विश्वसन्ति।
तस्मान्नरेण कुलशीलवता सदैव
नार्य्यः श्मशानसुमना इव वर्जनीयाः ॥ २० ॥

न वैराग्यात् परं भाग्यं न बोधात् परमः सखा।
न हरेरपरस्त्राता न संसारात् परो रिपुः" ॥ २१ ॥

इत्येतानि पद्यानि पठित्वा परमं वैराग्यं गतः, विक्रमार्कं राज्ये अभिषिच्य च स्वयं वनं जगाम।

[ इति भर्त्तृहरेर्वैराग्यकथा ]।

---

—गौरवेषु गुरुत्वेषु इत्यर्थं, प्रतिष्ठासु यशस्करपदेषु, गुणेषु सुजनादिगुणिसंसर्गेषु, मानुसदसि सज्जनसभायां, धृताः स्थापिता अपि, स्त्रियः योषितः, दोषपङ्के दोषकर्द्दमे, स्वयं विसृज्यन्ते आत्मनैव निपतन्ति [ कर्म्मकर्त्तरि लट् ]। न तासां चित्तशुद्धिः सम्भवतीति भावः ॥ १९ ॥

स्त्रीणां कपटव्यवहारप्रदर्शनपुरःसरं तासु वैराग्यमेव सताम् उचितम् इति वक्तुमाह एता इति।—नार्य्यः स्त्रियः, वित्तहेतोः धननिमित्तं, हसन्ति स्मितं कुर्व्वन्ति च, रुदन्ति क्रन्दन्ति च, नरान् पुरुषान्, विश्वासयन्ति आत्मानं प्रति विश्वासिनः कुर्व्वन्ति, न तु तान् पुरुषान् विश्वसन्ति प्रतियन्ति, तस्मात् कारणात्, कुलशीलवता सद्वंशजेन सुशीलेन च, नरेण पुरुषेण, एता एवंविधाः रमण्यः, श्मशानसुमना इव श्मशानस्थकुसुममिव, [ "असुमनस्समासिकतावर्षाणां बहुत्वञ्च" ( स्त्री० अधि० २९ सू० ) इति लिङ्गानुशासने पाणिनिवचनात् पाक्षिकमेकवचनम् ] सदा एव निरन्तरमेव, वर्ज्जनीयाः परित्याज्याः। वसन्ततिलकं वृत्तम् ॥ २० ॥

इत्थं स्त्रीचरित्रविचारणया राज्ञः ज्ञानवैराग्योदयात् तत् प्रशंसति, नेति।—वैराग्यात् विषयवितृष्णायाः, परं श्रेष्ठं, भाग्यम् अदृष्टं, नास्ति, बोधात् ज्ञानात्, अन्यः ज्ञानं वर्ज्जयित्वा इत्यर्थः, परमः श्रेष्ठः, सखा मित्रं, नास्ति, हरेः श्रीविष्णोः, अपरः अन्यः भिन्न इत्यर्थः, त्राता रक्षकः, नास्ति, संसारात् वासनायाः, परिजनासक्तेरित्यर्थः, परः अधिकः, रिपुः शत्रुश्च नास्ति। [ अत्र सर्व्वत्र "अन्यारात्" ( २।३।२९ पा० ) इति भेदकपरशब्दयोगे पञ्चमी ]। पथ्यावक्त्रं वृत्तम् ॥ २१ ॥

# अथ विक्रमादित्यस्य सिंहासनप्राप्तिकथा।

ततः राजा विक्रमादित्यः देव ब्राह्मणानाथ-दीनार्त्त-कुब्ज-पङ्ग्वादीनां मनोरथान् पूरयन् प्रजाः सम्यगपालयत्। परिचारकादीनां सन्तोषमुत्पादयन् मन्त्रि-सामन्तादीनां वचन-परिपालनेन च मनोऽहरत्। एवं सकलानुरञ्जनेन राजा राज्यं करोति स्म।

ततः एकदा कश्चिद्दिगम्बरः (ठ) राजसमीपमागत्य,—

"लीलया मण्डलीकृत्य भुजङ्गान् धारयन् हरः।
देयाद्देवो वराहश्च तुभ्यमभ्यधिकां श्रियम्" ॥ २२ ॥

इति आशीर्वादपूर्व्वकं राज्ञो हस्ते फलं दत्त्वा अब्रवीत्,—"भो राजन्! अहं कृष्णचतुर्द्दश्यां महाश्मशाने अघोरमन्त्रेण हवनं (ड) करिष्यामि; तत्र त्वया उत्तरसाधकेन (ढ)

---

(ठ) दिगम्बरः,—दिक् शून्यमेव अम्बरं वस्त्रं यस्य सः, नग्नावधूत इत्यर्थः।

आशी श्लोकमाह, लीलयेति।—लीलया स्वेच्छया, भुजङ्गान् सर्पान् मण्डलीकृत्य मण्डलाकारान् कृत्वा, धारयन् उद्वहन्, भूषणीकुर्व्वन्नित्यर्थः, हरः शिवः, देवः दिव्य-शक्तिसम्पन्नः, वराहः वराहरूपी विष्णुश्च, तुभ्यं भवते, अभ्यधिकां प्रचुरां, श्रियं सम्पदं, देयात् ददातु। निष्कृष्टव्यङ्ग्यभावस्तु—यथा हि भगवान् मृत्युञ्जयः कालरूपिणं भुजङ्गं मण्डलयित्वा धृतवान्, तथा त्वमपि आत्मशत्रून् मयस्य, निःसपत्नो भूत्वा भवन्तं जिघांसुं मामपि निपातयिष्यसि, यथा च वराहमूर्त्तिधारी नारायणः प्रलयपयोधेः धरामुद्धृत्य स्थापितवान्, तथा त्वमपि धरां सुस्थिरां करिष्यसि इति। एतच्चोपरिष्टाद्व्यक्ती-भविष्यति। पथ्यावक्त्रं वृत्तम् ॥ २२ ॥

(ड) अघोरमन्त्रो यथा सिद्धनागार्ज्जुनकक्षपुटे निधिवशीकरणाख्यषोडशपटले—"ओँ क्रां क्रीं क्रूं अघोर तर तर प्रस्फुर प्रस्फुर प्रकट प्रकट धनेशाय कह कह सम सम जात जात दह दह पातय पातय ओँ क्रौं क्रौं क्रूं अघोराय फट्" इति। हवनं—होमम्।

(ढ) उत्तरसाधकेन—पृष्ठपोषकेण, सहकारिणा इति यावत्।

भवितव्यम्"। राज्ञा च प्रतिज्ञातम्। तस्य तेन प्रसङ्गेन राज्ञो वेतालः प्रसन्नो जातः, अष्टौ महासिद्धयश्च (ण) प्राप्ताः। भूतले विक्रमस्य सादृश्यं न कोऽपि बभार। त्रिभुवने अस्य कीर्त्तिरनर्गला (त) गङ्गेव प्रवहति स्म।

अत्रान्तरे सुरलोके देवेन्द्रो विश्वामित्र-तपःशङ्कितः रम्भामुर्वशीञ्च आहूय अवादीत्,—"भवत्योर्मध्ये नृत्ये गीते च या अतिप्रवीणा, सा विश्वामित्र-तपोभङ्ग-कारणाय तत्तपोवनं गच्छतु; या विश्वामित्र-तपोविनाशिनी, तस्यै पारितोषिकम् अहं दास्यामि"। इत्येतत् वचः श्रुत्वा रम्भया भणितम्,— "अहं नृत्ये प्रवीणा"। उर्व्वश्या भणितं,—"देव! यथा-शास्त्रदृष्टं नृत्यं जानामि" इति। तयोर्विवादे जाते, निर्णयार्थं देवसभा समाहूता आसीत्। प्रथमं रम्भानृत्यमभवत्; द्वितीय-दिवसे उर्व्वश्या नृत्यमभूत्। ततः सर्वोऽपि देवगणः उभयोर्नृत्यं दृष्ट्वा सन्तोषमगमत्। "इयमत्यन्तं नृत्ये कुशला" इति न कश्चित् निर्णयं चकार। तस्मिन्नवसरे नारदेनोक्तं,—"भो देवराज! भूतले विक्रमादित्योऽस्ति, स सकलकलाऽभिज्ञः, विशेषतः सङ्गीतनृत्यविद्याविचक्षणः। स एवैतयोर्विवादनिर्णयं करिष्यति" इति।

ततो महेन्द्रेण विक्रमादित्याह्वानार्थम् उज्जयिनीं प्रति मातलिः (थ) प्रेषितः। ततो विक्रमस्तेनाहूतोपस्थितः नमस्कृत्य सम्मानपूर्व्वकमुपवेशितः। तदनन्तरं पुनरपि नृत्यावसरो

(ण) महासिद्धयः,—महत्य, श्रेष्ठतमाः, सिद्धयः अणिमादय इत्यर्थः, तथा चोक्तं महीधरेण मन्त्रमहोदधेरष्टमतरङ्गे ११२ श्लोके,—"अणिमा महिमा चापि लघिमा गरिमेशिता। वशिता चाथ प्राकाम्य प्राप्तिरित्यष्टसिद्धयः॥" इति।

(त) अनर्गला—निराबाधा।

(थ) मातलिः,—इन्द्रसारथिः।

मण्डित: (द)। प्रथमं रम्भा रङ्गे स्थिता नृत्यमकरोत्। द्वितीय-दिवसे उर्व्वशी रङ्गमधिष्ठिता यथाशास्त्रं नृत्यमकार्षीत्। तत: विक्रमादित्येन उर्व्वशी प्रशंसिता, जयोऽपि दत्त:। इन्द्रेण भणित,—"कथमस्यै जयो दत्त: ?" विक्रमेण भणित,—"देव ! नृत्ये प्रथममङ्गसौष्ठवं प्रधानम्। तथाचोक्तं नृत्यशास्त्रे,—

अनुच्चनीचं चरतामङ्गानां चलपादता।
कटिकूर्परशीर्षाक्षि-कर्णानां समरूपता ॥ २३ ॥
रम्या प्रथितविश्रान्तिरुरसश्च समुन्नति:।
अभ्यासागर्हित: पाद: सौष्ठवं नृत्यवेदिनाम् ॥ २४ ॥

अन्यच्च,—नर्त्तक्या रङ्गोचितावस्थानविशेष: (ध) प्रकाश-नीय:। उक्तश्चावस्थानविशेषो नृत्यशास्त्रे,—

---

(द) नृत्यावसर:—नृत्यस्थानं, रङ्ग इति यावत्। मण्डित:,—भूषित:।

नृत्यशास्त्रोक्तमङ्गसौष्ठवं विवृणोति, अनुच्चेत्यादि द्वाभ्याम्।—अनुच्चनीचम् उच्चञ्च नीचञ्च उच्चनीचे उन्नतावनते, ते न भवत. इत्यनुच्चनीच, सममित्यर्थ:, यथा तथा चरता चलता. नृत्यतामित्यर्थ', नृत्यवेदिना नृत्यपारदर्शिनां, चलपादता चञ्चलपाद-विन्यास', कट्या मध्याङ्गस्य, कूर्परस्य हस्तमध्यसन्धिस्थानस्य, शीर्ष: मस्तकस्य, अक्षि-कर्णाना चक्षुषो: श्रवणयोश्च, समरूपता समानत्व, रम्या मनोज्ञा, प्रथितविश्रान्ति: प्रथिते प्रसिद्धे नृत्यशास्त्रोक्तविरतियोग्यसमाख्यतालसमानकाले इत्यर्थ:, विश्रान्ति: नृत्य-विराम:, उरस वक्षस:, समुन्नति' औन्नत्यञ्च, अभ्यासेन पुन पुनरावर्त्तनेनापि, अगर्हित: अनिन्दित', तालशुद्धित. शोभमान इत्यर्थ., पाद: पादविन्यासश्च, अङ्गाना सौष्ठवम् अङ्गसौष्ठवसञ्ज्ञं नृत्यप्रधानाङ्गम् आहुरिति शेष:। तथा च भरतकृतनाट्यशास्त्रेऽपि— "शोभा सर्व्वैव नित्य हि सौष्ठवं समुपाश्रिता। न हि सौष्ठवहीनाङ्ग: शोभते नाट्यनृत्ययो. ॥ अचञ्चलमकुब्जञ्च सन्नगात्र तथैव च। नात्युग्रचलपादञ्च सौष्ठवाङ्गं प्रयोजयेत् ॥ कटी-कर्णसमा यत्र कूर्परोऽंसशिरस्तथा। समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥" इति (१० अध्याये ८७—८९ श्लोका:) ॥ २३ । २४ ॥

(ध) रङ्गेति।—रङ्गे नाट्यभूमौ, उचित: योग्य:, य: अवस्थानविशेष: अवस्थान-नैपुण्यम्।

चतुरस्रत्वसहितौ समपादौ लताकरौ।
प्रारम्भे सर्व्वनृत्यानामेतत् सामान्यमुच्यते॥
यथा ह्यन्यैर्नैव दृश्यं तथा ह्यस्या वपुर्भवेत्॥ २५॥
दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।

नृत्यारम्भे रङ्गे अङ्गस्थानप्रकारमाह, चतुरिति।—चतुरस्रत्वसहितौ चतस्रः अस्रयोऽस्य इति चतुरस्रं तस्य भावः तेन सहितौ, नाट्यशास्त्रोक्तहस्तसन्निवेशविशेषयुक्तौ इत्यर्थः, [तथा च चतुरस्रलक्षणं भरतोक्तं यथा नाट्यशास्त्रे,—"वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ खटकामुखौ। समानकूर्परांऽसौ तु चतुरस्रौ प्रकीर्त्तितौ॥" इति (९म अध्याये १६३ श्लोकः)। "सुप्रातसुश्व सु" (५।४।१२० पा०) इत्यादि सूत्रेण अजन्तनिपातनात् तालव्यमध्योऽयं साधु, दन्त्यमध्यत्वे चतुरस्त्रिरित्येव स्यात्, तालव्यमध्यस्यैव निपातनस्येष्टत्वात्] समौ च पादौ चरणौ, [समपादलक्षणं यथा नाट्यशास्त्रे भरतः—"स्वभावरचितौ भूमौ समस्थानश्च यो भवेत्। समपादः स विज्ञेयः स्वभावाभिनयाश्रयः॥" (९म अध्याये २३७ श्लोकस्य परार्द्धं, २३८ श्लोकस्य पूर्व्वार्द्धञ्च) इति] लताकरौ—नृत्यशास्त्रोक्ततिर्य्यक्प्रसारितहस्तौ, [तथा च भरतेनोक्तं नाट्यशास्त्रे तल्लक्षणं यथा,—तिर्य्यक्प्रसारितौ चैव पार्श्वस्थौ तथैव च। लताख्यौ च करौ ज्ञेयौ नृत्याभिनयनं प्रति॥" (९म अध्याये १७५ श्लोकः) इति] सर्व्वनृत्यानां प्रारम्भे एतत् सामान्यं साधारणम्, उच्यते कथ्यते, नृत्यवेदिभिरिति शेषः। (तथा च उक्तं सामान्यलक्षणं वसन्तराजीये,—"अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ। आरम्भे सर्व्वनृत्यानामेतत्सामान्यमिष्यते॥" इति)। यथा हि अस्याः नर्त्तक्याः, वपुः शरीरम्, अन्यैर्नैव दृश्यं दर्शनीयं भवति, तथा तादृशं हि, भवेत्॥ २५॥

नृत्यकाले अङ्गस्थापनप्रकारं दर्शयति, दीर्घाक्षमिति।—वदनम् आननं, दीर्घाक्षं दीर्घे आयते, अक्षिणी लोचने यस्य तत्तथोक्तं, विशालनयनमित्यर्थः, ["बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति षच्] शरदिन्दुकान्ति शरदिन्दोः शरच्चन्द्रस्य कान्तिरिव कान्तिर्यस्य तत्, शरच्चन्द्रसदृशं प्रसन्नमित्यर्थः, बाहू भुजौ, अंसयोः स्कन्धयोः, नतौ नमितौ, उरः वक्षःस्थलं, यद्यपि बृहदिति शेषः, तथाऽपि निविडोन्नतस्तनं निविडौ घनौ उन्नतौ तुङ्गौ, स्तनौ यत्र तथाभूतं सत् सङ्क्षिप्तं सङ्कुचितमिव, तुङ्गपीनस्तनत्वात् स्तनयोरवकाशमात्रमेव अस्ति, शेषः किमपि नास्त्येव इत्यर्थः; उन्नतस्तनाभ्यां बृहतोऽपि अल्पीभावकरणात् तथाभूतमिति भावः, पार्श्वे उरःपार्श्वद्वय

मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसः श्लिष्टं तथा स्वं वपुः ॥ २६ ॥

नृत्यावस्थानविशेषः स्मरणीयः,—

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्।
पादाङ्गुष्ठाऽऽलुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्याद् वामा स्थगयतितरां कान्तिमत् पादयुग्मम् ॥२७॥

---

प्रहृष्टे इव श्लक्ष्णीकृते इव भवतः, मध्यः कटिदेशः, पाणिमितः मुष्टिग्राह्यः, जघनं श्रोणिपुरोभागः, नितम्बि मांसलनितम्बवत्, [ पर्व्वतसानुयुक्तमिति च ध्वन्यते ] पादौ चरणौ, अरालाङ्गुली अराला, आकुञ्चिता अङ्गुलयः ययोः तौ तादृशौ, नर्त्तयितुः नृत्याचार्य्यस्य यथैव यादृश एव मनसः छन्दः अभिप्रायः तथा तादृशं, स्वं वपुः निजदेहं श्लिष्टं संहतं यादृशाङ्गसौष्ठवे सति नर्त्तनं मनोज्ञं भवति तथा ज्ञातमित्यर्थः। पुत्तलिकानृत्यप्रदर्शकः पुत्तलिकाया अङ्गानि यथा स्वेच्छावशात् द्रष्टॄणां मनोहराणि करोति, नर्त्तकीना तथैव करणीयमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

नृत्यप्रकारं वर्णयति, वाममिति।—वामा सुन्दरी, नर्त्तकीति भावः, सन्धिस्तिमितवलयं सन्धौ मणिबन्धे स्तिमितं निःशब्दं वलयं कङ्कणं यस्य तादृशं वामं सव्यं, हस्तं करं, नितम्बे श्रोण्यां, न्यस्य वक्राकारमनोहरं निधाय, द्वितीयं दक्षिणहस्तं, श्यामाविटपसदृशं प्रियङ्गुलताशाखासदृशं, ( "फलिनी गौरागिरिका श्यामा कान्ता प्रियङ्गुका" इति वाहटः ) स्रस्तमुक्तं स्रस्तं शिथिलं यथा भवति तथा मुक्तं विसृष्टं, प्रसारितमित्यर्थः, कृत्वा विधाय, पादाङ्गुष्ठेन आलुलितं चालितं, कुसुमं पुष्पं रङ्गविचित्रमित्यर्थः, यत्र तस्मिन्, कुट्टिमे स्फटिकादिखचितस्थले, रत्नशिलापट्टे निबद्धे इत्यर्थः, ( 'कुट्टिमोऽस्त्री निबद्धा भूः" इत्यमरः ) पातिते व्यापारिते, अक्षिणी नेत्रे यस्मिन् कर्म्मणि तत्तथोक्तं, सन्निविष्टनयनं यथा स्यात्तथा इत्यर्थः, कान्तिमत् सुन्दरं, पादयुग्मं चरणयुगलं, नृत्यात् नर्त्तनात्, स्थगयतितरां विरामयति। [ "नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम्" इति मालविकाऽग्निमित्रधृतपाठः,—तत्र ऋज्वायतार्द्धम् ऋजु अवक्रम्, आयतं दीर्घम्, अर्द्धं शरीरार्द्धभागः यस्मिन् तत्, अस्याः नर्त्तक्याः, स्थितम् अवस्थानं, नृत्यात् नर्त्तनात् अतितराम् अत्यर्थं कान्तं मनोहरं, भवतीति शेषः ]। मन्दाक्रान्ता वृत्तं,
'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भ-नौ तौ गयुग्मम्" इति लक्षणात् ॥ २७ ॥

किं बहुनोक्तेन ?—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥२८॥

एवं नृत्यशास्त्रोक्तलक्षणयुक्ता नर्त्तकी प्रशंसिता मयोर्वशी" ।

---

नृत्यकाले भावविशेषमाह, अङ्गैरिति ।—अन्तर्निहितवचनैः अन्तः अभ्यन्तरे निहितं स्थापितं, वचनं पदं येषु तैः, अन्तर्निविष्टवाक्यैः, वचनमन्तरेणापि विक्षेपविशेषेण वयाविधैरिव इत्यर्थः, अङ्गैः शिरोहस्तादिनाट्यशास्त्रोक्तषड्भिरवयवैः सम्यक् स्पष्टम्, अर्थः गीतार्थः, सूचितः प्रकटितः, नाट्यशास्त्रोक्तत्रयोदशविधशिरःकम्पनादिव्यापाराणामभ्यासपाटवेनानुमापित इत्यर्थः, ("मुखेनालपयेद्गीतिं हस्तेनार्थं प्रदर्शयेत्" इत्याद्युक्तेः) भवतीति शेषः, तथा च पादन्यासः चरणनिक्षेपः, लयः नृत्यगीतवाद्यानामेकतानतारूपसाम्यम्, (तालान्तरालवर्त्ती यः कालोऽसौ लय ईरितः" इत्युक्तेः) अनुगतः प्राप्तः, अभ्यासपटुतया लयातिक्रमेण न पुनः पादक्षेप इति भावः, रसेषु शृङ्गारादिषु अभिनेयगतरसेषु वा, तन्मयत्वं तदाविर्भावव्यञ्जनाय तत्स्वरूपत्वम्, शृङ्गाररसात्मकनृत्ये शृङ्गारस्वरूपता, हास्यरसात्मकादिनृत्ये च हास्यादिरसस्वरूपता इत्याशयः, शाखा आङ्गिकनृत्यविशेष एव योनिः कारणं यस्य सः, आङ्गिकनृत्यजनित इत्यर्थः (तथा चोक्तं भरतेन नाट्यशास्त्रे,—'त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा । तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ शिरोहस्तकटीवक्षःपार्श्वपादसमन्वितः । अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसङ्ग्रहः ॥ तस्य शिरोहस्तोरःपार्श्वकटीचरणानि षडङ्गानि । नेत्रभ्रूनासाऽधरकपोलचिबुकान्युपाङ्गानि ॥ अस्य शाखा च नृत्यञ्च तथैवाङ्कुर एव च । वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ आङ्गिकन्तु भवेच्छाखा—" इति ८ अध्या० ११श श्लोकतः १५श श्लोकस्यैकपादान्तम्)"शाखा तु नृत्यहस्तानां या माला चित्रनर्त्तने" इति वा, अथवा,—शाखा अङ्गुलयः, ताभ्यः समुद्भवः यस्य सः शाखायोनिः, ("पञ्चशाखः शयः पाणिः" इत्यमरः), अभिनयः प्रयोगः, प्रसारणाऽऽकुञ्चनविस्तारादिरित्यर्थः, यथोक्तं—"प्रयोगो यस्तु नाट्यादेर्भवेदभिनयो हि सः" इति, मृदुः सुकुमारः, तद्विकल्पानुवृत्तौ तस्य अभिनयस्य विकल्पो भेदस्तस्याः अनुवृत्तिः अनुसृतिः तस्यां, यद्वा,—तस्य अभिनेयनायकादेः, विकल्पानां नाट्यशास्त्रोक्ताङ्गहारादिविकल्पादीनां, [यदुक्तं नाट्यशास्त्रे भरतेन,—"करणैरिह

ततो महेन्द्रः सन्तुष्टः सन् विक्रमार्कं वस्त्रादिना सम्भाव्य महार्घं वररत्नखचितं (न) सिंहासनं तस्मै ददौ। तत्सिंहासने खचिता द्वात्रिंशत् पुत्तलिकाः सन्ति। तासां शिरसि पदं दत्त्वा तत् सिंहासनमध्यासितव्यम् (प)। तदतिमनोहरं सिंहासनमिन्द्राज्ञाञ्च गृहीत्वा विक्रमार्को निजां पुरीमगमत्। तदनन्तरं शुभे मुहूर्त्ते शुभे लग्ने सिंहासनमधिष्ठाय राज्यं करोति स्म।

[ इति विक्रमादित्यस्य सिंहासनप्राप्तिकथा ]।

---

# अथ विक्रमादित्यमहाप्रयाणम्।

---

ततोऽनन्तरं वर्षेषु बहुषु गतेषु, प्रतिष्ठाननगरे शालिवाहनः सार्द्धवर्षद्वयकन्यायां शेषनागेन्द्रादुत्पन्नः। उज्जयिन्यां भूकम्पधूमकेतु-दिग्दाहाद्युत्पाताः राज्ञा जनैश्च दृष्टाः। ततो विक्रमादित्यो दैवज्ञान् आहूय अवादीत्,—"भो दैवज्ञाः! किमेतदुत्पाताः

---

सयुक्तैरङ्गहार इति स्मृतः। एतेषामेव वक्ष्यामि हस्तपादविकल्पनम्॥" (४ अध्या० ३२ श्लोक ) इति ] अनुवर्त्ती अनुकारी, भावं अभिनीयमानो निर्वेदादि, विषयात् आश्रयात्, प्रकृतात् स्थायिन इत्यर्थः, भावं पूर्व्वाभिनीत सञ्चारिणं, नुदति प्रेरयति, [ नुदतीत्यत्र तुदति इति पाठे—भावः अभिप्राय, विषयात् अन्यस्मादिति शेष, भावं हृदय, तुदति आकर्षति, विषयान्तरसंसर्गराहित्येन स्वप्रवण करोति इत्यर्थ ] रागबन्ध, रञ्जकत्वयोग स एव पूर्वं यादृशस्तादृश एव, अथवा,—रागबन्धः भरतोक्तनाट्यशास्त्रे यादृश, तथाविध एव। पूर्ववद्वृत्तम्॥ २८॥

(न) वरेति।—वरैः श्रेष्ठैः, रत्नैः मणिभिः, खचितं निबद्धम्।

(प) अध्यासितव्यम्—अधिष्ठातव्यम्। [ "अधिशीङ्स्थासां कर्म" (१।४।४६ पा० ) इति सिंहासनस्य कर्मसंज्ञा ]।

राज्ञा जनैश्च प्रतिदिनं दृष्टा. भवन्ति ? एतेषां फलं किम् ? कस्य अनिष्टं कथयन्ति ?" तैरुक्त,—"देव ! अयं भूकम्पः सन्ध्याकाले जातः ; अतः राज्ञोऽनिष्टं सूचयति। तथा च नारदीये,—

अनिष्टदः क्षितीशानां भूकम्पः सन्ध्ययोर्द्वयोः ।
राज्ञां विनाशपिशुनो धूमकेतुरुदाहृतः ॥
दिग्दाहः पीतवर्णश्चेत् क्षितीशानां भयप्रदः" ॥ २९ ॥

इति दैवज्ञवचनं श्रुत्वा राजा तु पुनरब्रवीत्,—"भो दैवज्ञाः ! मया तपसा सन्तोषित ईश्वरः प्राह,—'भो राजन् ! प्रसन्नोऽस्मि, पर्य्यायेण (फ) अमरत्वं याचस्व' इति। तदा मया भणितं—'भो देव ! सार्द्धवर्षद्वयकन्यायां पुत्रो यदि भविष्यति, तस्मात् मम मरणमस्तु नान्येन'। ईश्वरेण 'तथाऽस्तु' इति भणितम्। तर्हि तादृशं कुतो जनयिष्यति ?" दैवज्ञेरुक्तं,—"देव ! दैवी सृष्टिरचिन्त्या, तादृशः कस्मिन्नपि देशे उत्पन्नो भविष्यति ; तथा च द्रक्ष्यसि"।

ततो राजा वेतालमाहूयैतत् सर्व्वं तस्मै निवेद्याब्रवीत्,—"भो यक्ष ! त्वं सर्व्वत्र पृथ्वीमध्ये परिभ्रमन्नेवंविधः कस्मिन् देशे कस्मिन् नगरे समुत्पन्न इति निश्चित्य स्थानं ज्ञात्वा, झटिति समागच्छ"। ततो वेतालो महाप्रसाद इति वीटिकां(ब) गृहीत्वा,

---

सायन्तनभूकम्पस्य राजानिष्टसूचकत्वे प्रमाणमाह, अनिष्टद इति।—द्वयो सन्ध्ययो प्रात-साय-सन्ध्ययो. जात. भूकम्प'. क्षितीशाना राज्ञाम्, अनिष्टद अनिष्टकारी भवति, धूमकेतु राज्ञा विनाशपिशुन' विनाशसूचक.. भवति। (अनुरूपोक्ति माघे १ सर्गान्ते यथा,—'शत्रूणामनिश विनाशपिशुन: क्रुद्धस्य चैद्य प्रति। व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥" इति) दिग्दाह चेत् यदि, पीतवर्ण स्यात् तदा क्षितीशाना भयप्रद: राज्ञा भयजनक भवति ॥ २९ ॥

(फ) पर्य्यायेण—प्रकारेण, प्रकारान्तरेण इत्यर्थ.।

(ब) महाप्रसादः,—महाऽनुग्रहस्वरूपः, इति—अस्मात् कारणात्, वीटिका—

कुशद्वीपादिद्वीपानालोक्य जम्बूद्वीपं प्रत्यागत्य, प्रतिष्ठाननगरं प्रविश्य कुम्भकारगेहे कञ्चिन्माणवकं (भ) काञ्चन कन्यकाञ्च क्रीड़मानां दृष्ट्वा अपृच्छत्,—"अहो। युवां परस्परं किं प्रभवतम्?"(म) तदा कन्ययोक्तम्—"अयं मम पुत्रः"। वेतालेनोक्तं,—"तव पिता कः?" तदा कोऽपि ब्राह्मणो दर्शितः। ततो वेतालः ब्राह्मणमपृच्छत्—"केयम्?" इति। ब्राह्मणेनोक्तम्,—"इयं मम कन्या, अस्याः पुत्रोऽयम्"। तच्छ्रुत्वा विस्मयं गतो वेतालः पुनर्ब्राह्मणमब्रवीत्,—"भो ब्राह्मण! कथमेतत्?" ब्राह्मणेनोक्तं,—"देवानां चरितमगोचरम् (य); अस्यां शेषनागेन्द्रः सङ्गममकरोत्, तस्मादस्यां जातः पुत्रोऽयं शालिवाहनः" इति।

तच्छ्रुत्वा वेतालः सत्वरम् उज्जयिनीम् आगत्य राज्ञे विक्रमादित्याय सर्वमपि वृत्तान्तमकथयत्। राजा तस्मै पारितोषिकं दत्त्वा खड्गमादाय प्रतिष्ठाननगरं गतः यावत् खड्गेन शालिवाहनं हन्तुं प्रवृत्तः, तावत् तेन दण्डेन ताडितः प्रतिष्ठाननगरादुज्जयिन्यां पतितः वेदनामसहमानः शरीरं विससर्ज।

[इति विक्रमादित्यमहाप्रयाणम्] ३

---

सज्जितताम्बूलस्वरूपा राज्ञा सादरमर्पितामिति भाव.। [राजानो हि प्रसन्ना. सन्तः प्रसादसूचक ताम्बूल प्रयच्छन्ति इत्यार्यसरणि.। एतदवलम्बनेनैव महाकवि-श्रीहर्षेणापि नैषधचरितावसाने स्वपरिचयप्रसङ्गेनोक्त,—"ताम्बूलद्वयमासनञ्च लभते य. कान्यकुब्जेश्वरात्" इति]।

(भ) माणवक—बालकम् ("बालस्तु स्यान्माणवकः" इत्यमर.)।

(म) प्रभवत—जायेथाम्, एकस्या मातुर्गर्भे किं युवयोः जन्म इत्यर्थः।

(य) अगोचरं—दुर्ज्ञेयम्।

# अथ सिंहासननिक्षेपणम् ।

अथ तस्य राज्ञः सर्वाः स्त्रियोऽग्निप्रवेशं कर्त्तुं प्रवृत्ताः। तदा मन्त्रिभिर्विचारितं,—"राजा अयमपुत्रः, किं कर्त्तव्यम् ?"

भट्टिना (र) उक्तं,—"विचार्य्यताम्, आसां स्त्रीणां मध्ये काचित् यदि गर्भिणी भवेत् ?" ततो विचार्य्यमाणे, एका सप्तमासगर्भिणी निश्चिता समभवत्। तदा सर्वैर्मन्त्रिभिर्मिलित्वा गर्भाभिषेकः कारितः (ल); मन्त्रिणस्तु स्वयं राज्यं पालयितुं प्रवृत्ताः। तदिन्द्रदत्तं सिंहासन तथैव शून्यमासीत्।

एकदा सभामध्ये अशरीरिणी वाक् (व) आसीत्,—"भो मन्त्रिणः! यः स्वयं राज्यं पालयितुमेतस्मिन् सिंहासने उपवेष्टुञ्च योग्यः, तादृशो राजा नास्ति; तर्हि सुक्षेत्रे निक्षिप्यतामिदं सिंहासनम्"। तच्छ्रुत्वा सर्वैर्मन्त्रिभिरतिपवित्रक्षेत्रे तत् सिंहासनं निक्षिप्तम्। निक्षेपानन्तरं बहूनि वर्षशतानि गतानि।

[ इति सिंहासननिक्षेपणम् ]।

# अथ भोजराजस्य सिंहासनोद्धारकथा।

अथ काले भोजराजः राज्यं प्राप। तस्मिन् राज्यं कुर्वति, एकदा कश्चित् ब्राह्मणो यत्र सिंहासनं निक्षिप्तं, तत् क्षेत्रं क्रष्टा

(र) भट्टिना—तदाख्यप्रधानमन्त्रिणा।

(ल) गर्भेति।—गर्भस्य—भ्रूणस्य, अन्तरस्थशिशोरित्यर्थः, अभिषेकः,—"सुरास्त्वामभिषिञ्चन्तु" इत्यादिमन्त्रेण अधिकारप्राप्त्यर्थं शान्त्यर्थञ्च अनेकतीर्थाहृतैर्जलैर्विविधाभिरौषधिभिश्च सेचनं कारितः, गर्भमुद्दिश्य महिषीमेव स्नापयामासुरिति भावः।

(व) अशरीरिणी वाक्—दैववाणी।

यवादीनवपत्। तस्मिन् क्षेत्रे महत् फलमभूत्। स ब्राह्मणः यत्र तत् सिंहासनं निक्षिप्तं तदुच्चस्थानमिति मत्वा, पक्षिणाम् उत्थापनार्थं (अ) तदुपरि मञ्चं कृत्वोपविश्य पक्षिण उत्थापयति।

ततः एकदा भोजराजो विहारं कर्त्तुं सकलराजकुमारैः समवेतस्तत्क्षेत्रसमीपं यावद्गच्छति, तावन्मञ्चोपरिस्थितेन ब्राह्मणेनोक्तं,—"भो राजन्! एतत् क्षेत्रं सम्यक् फलितमस्ति, ससैन्यः समागत्य यथेच्छं भुज्यताम्; अश्वेभ्यश्चणका (ब) दीयन्ताम्। अद्य मज्जन्म सफलमभूत्, यतो भवान् ममातिथिर्जातः; ईदृशः प्रस्तावः कदा सम्पद्यते?" तच्छ्रुत्वा स राजा ससैन्यः क्षेत्रमध्ये प्रविष्टः। अथ ब्राह्मणोऽपि मञ्चकादवरुह्य राजानं क्षेत्रमध्यस्थितं भणति,—"भो राजन्! किमयमधर्म्मः क्रियते!! इदं ब्राह्मणक्षेत्रं विनाश्यते त्वया? जनैः यदि अन्यायः क्रियते, प्रतीकारार्थं तुभ्यं निवेद्यते, त्वमेवान्यायं कर्त्तुं प्रवृत्तः!! इदानीं को वा निवारयिष्यति? उक्तञ्च,—

"गजे कण्डूगरिष्ठे च राज्ञि हारिणि वा पुनः।
पापकृत्सु च विद्वत्सु नियन्ता जन्तुरत्र कः?" ॥ ३० ॥

---

(अ) उत्थापनार्थम्—उड्डायनाय ताडनार्थमित्यर्थः।

(ब) चणका,—शस्यविशेषाः, "छोला" इति भाषा।

राज्ञि प्रजास्वहारिणि तस्य निवारकः कोऽपि नास्ति इति विशदयितुमाह, गजे इति।—गजे करिणि, कण्डूगरिष्ठे गात्रघर्षणपरायणे सति, राज्ञि नृपे च, हारिणि प्रजाना धनहरे सति, विद्वत्सु पण्डितेषु च, पापकृत्सु पापकारिषु सत्सु, [ यद्यपि "सुकर्म्मपापमन्त्रपुण्येषु कृञः" (३।२।८९ पा०) इति सूत्रे पापशब्दात् कृञ्धातोः अतीते एव क्विप्-विधानमस्ति तथाऽप्यत्र ताच्छील्ये क्विपि व्याख्यासौकर्य्यं भवति इति विवेच्यम् ] अत्र भुवि. कः जन्तु. पुनः को जनो वा, नियन्ता निवारको भवेत्? गजस्य प्रभूतबलशालित्वात्, नृपस्य सर्वाधीश्वरत्वात्, विदुषाञ्च पापज्ञत्वात् न कोऽपि एतेषां निवारणसमर्थ. इति भावः। पथ्यावक्त्रं वृत्तम्॥ ३०॥

भवान् धर्म्मशास्त्राभिज्ञश्च, ब्राह्मणद्रव्यं कथं नाशयति? ब्रह्मस्वमेतत विषम्। तथाहि,—

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्" ॥३१॥

इति तेनोक्तं श्रुत्वा राजा यावत् क्षेत्राद्बहिः सपरिवारो निर्गच्छति, तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारूढो ब्राह्मणो वदति,—"भो राजन्! किमिति गम्यते? क्षेत्रं साधु फलितमस्ति, यावनालकदण्डान् (स) अश्वादयो भक्षयन्तु, उर्वारुकफलानि (ह) सन्ति, उपभुज्यन्ताम्"। पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्ये प्रविशति, तावत् पक्ष्युत्थापनार्थं मञ्चादवरुह्य स पुनस्तथैव अभणत्।

ततो राजा स्वमनसि विचारयति,—"अहो आश्चर्य्यम्! यदा अयं ब्राह्मणो मञ्चमारोहति, तदाऽस्य चेतसि 'दातव्यं' 'भोक्तव्यम्' इति बुद्धिरुत्पद्यते, यदा अवतरति, तदा दीनबुद्धि-

विषादपि ब्रह्मस्वस्यापकारकत्वातिशयं दर्शयितुं तन्न विषवारोपणं प्रमाणयति, नेति।—विषं कालकूटादि, न विषं न तादृशमत्यन्तकरम् इति पण्डिताः आहुः कथयन्ति, ब्रह्मस्वं ब्राह्मणद्रव्यं, विषं सर्व्वापेक्षया तीव्रविषमित्यर्थः, उच्यते कथ्यते। विषम्, एकाकिनम् अनन्यसङ्गम् एकमेव जनम्, ["एकादाकिनिच् चासहाये" (५।३।५२ पा०) इति आकिनिच् प्रत्ययः] हन्ति विनाशयति, परन्तु ब्रह्मस्वं, पुत्रपौत्रकं तद्वंशोत्पन्नमपि, हन्ति। व्रत पूर्वमुक्तम् ॥ ३१ ॥

(स) यावनालेति।—यावनालकाना "जनार" "मकाइ" "भुट्टा" इति च नामभिः ख्यातशस्यभेदाना, "देधान" इति ख्यातशस्यभेदाना वा, दण्डान् काण्डान्।

(ह) उर्वारुकफलानि—कर्कटीफलानि। यद्यपि—"वसन्ते सर्वशस्याना जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥" इत्युक्त्या यवचणकादीना तदा सद्भावेन भोजराजस्य क्षेत्रदर्शनसमयः वसन्त एव प्रतीयते, तथा प्रावृषि जायमानयो. यावनाल कर्कटीफलयोरपि तत्रैवोत्पत्तिदर्शनमिति दिव्यसिंहासनस्य अलौकिकप्रभावेण परस्परविभिन्नकालोत्पन्नपदार्थानामपि एकदैकत्रोत्पत्तिरूपविचित्रसमावेश आसीदिति दर्शयितुमेव कविना एतदुपनिबद्धमित्यवधेयम्।

भवति; तदहं मञ्चमारुह्य पश्यामि" इति मञ्चमारुरोह। भोजराजस्य चेतसि तदा वासना एवमभूत्,—"विश्वस्यार्त्तिः परिहरणीया, सर्व्वस्य लोकस्यापि दारिद्र्यं सम्यक् निवारणीयं, दुष्टा दण्डनीयाः, सज्जनाः पालनीयाः, प्रजा धर्मेण रक्षणीयाः, किं बहुना,—अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यति, तदपि देयम्" इति आनन्दपरिपूर्णः पुनर्विचारयति,—"अहो! एतत् क्षेत्रमस्य एवंविधां बुद्धिमुत्पादयति। उक्तञ्च,—

जले तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः॥ २२॥

कथमेतत्क्षेत्रस्य माहात्म्यं ज्ञायते?" इति विचार्य्य ब्राह्मणमाहूय अवादीत्,—"भो ब्राह्मण! तवैतस्मात् क्षेत्रात् कियल्लाभो भवति? अहमेतत् क्षेत्रं क्रेतुमिच्छामि"। ब्राह्मणेनोक्तं,—"भो राजन्! सकलकुशलेन त्वया अविदितं किमपि नास्ति, यदर्हति तत् करोतु। राजा नाम साक्षाद्विष्णोरवतारभूतः, तस्य दृष्टिर्यस्योपरि पतति, तस्य दैन्यदुर्भिक्षादयो नश्यन्ति। राजा हि साक्षात् कल्पवृक्षः, (क) स त्वं मम दृष्टेर्गोचरोऽभूः, अद्य मम दैन्यदारिद्र्यादीनामवसानं जातं, क्षेत्रं कियत्?"

ततो राजा ब्राह्मणं धनधान्यादिना परितोष्य तत् क्षेत्रं

---

क्षेत्रस्य एवंविधोदारबुद्धिजनकत्वे वस्तुशक्तेः कारणत्वं प्रदर्शयितुं शिष्टोक्तिमाह, जले इति।—जले पतितं तैलं, खले खलजने निहितं गुह्यं गोपनीयवाक्यं, पात्रे योग्यपात्रे दानं, प्राज्ञे विद्वज्जने कथितं शास्त्रञ्च, मनाक् स्वल्पमपि, स्वयम् आत्मना, वस्तुशक्तितः आधारस्य सामर्थ्यात्, विस्तारं विस्तृतिं, याति प्राप्नोति। "प्रकर्षमाधारवशा गुणानाम्" इति भावः॥ २२॥

(क) कल्पवृक्षः,—अर्थिमनोरथपूरकत्वात् कल्पतरुरिव।

गृहीत्वा मञ्चकाधः खानयितुं प्रारम्भमकार्षीत्। पुरुषप्रमाणे गर्त्ते जाते शिलैका सुमनोहरा अवलोकिता। तदधः चन्द्रकान्तशिलाविनिर्मितं, नानारत्नखचितं, द्वात्रिंशत्पुत्तलिकाभिर्युक्तम्, अतिरमणीयं दिव्यमेकं सिंहासनमपश्यत्। तत्सिंहासनं दृष्ट्वा भोजराजः परमानन्दलहरीपरिपूर्णहृदयो (ख) भूत्वा सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति, तावदधिकं गुरु भवति, नोच्चलति च। ततो मन्त्रिणमवदत्,—"भो मन्त्रिन्! किमर्थमेतत् सिंहासनं नोच्चलति?" मन्त्रिणोक्तं,—"राजन्! एतत् सिंहासनं दिव्यमपूर्वञ्च, बलिहोमपूजादिकं विना नोच्चलिष्यति, तव साध्यञ्च न भविष्यति" इति।

तस्य वचनं श्रुत्वा राजा ब्राह्मणान् आहूय, तैः सर्वमपि विधानं कारितवान्। ततस्तत् सिंहासनं लघु भूत्वा स्वयमेवोच्चलति स्म।

[ इति भोजराजस्य सिंहासनोद्धारकथा ]।

---

## अथ भानुमतीकथाऽवतरणिका।

तत् दृष्ट्वा राजा मन्त्रिणमुवाच,—"भो मन्त्रिन्! एतत् सिंहासनं प्रथमं ममासाध्यमभवत्, परन्तु इदानीं तव बुद्धिप्रभावेण मम हस्तगतमासीत्। अहो!! बुद्धिमतां संसर्गो लाभाय सुखाय च भवति"। ततो मन्त्रिणा भणितं,—"भो राजन्! श्रूयतां, यः स्वयं बुद्धिमान् न भवति, अन्येषामपि बुद्धिं

---

(ख) परमेत्यादि।—परमानन्दानाम् अत्यानन्दानां, लहर्य्यां तरङ्गैः, परिपूर्णं हृदयं यस्य सः।

न शृणोति, स सर्व्वथा नाशं प्राप्नोति। त्वं तथाविधो न भवसि, बुद्धिमानपि आप्तवचन (ग) शृणोषि, अतस्तव सकलकार्य्येषु अन्तरायो नास्ति"। राजा अब्रवीत्,—"योऽनर्थकार्य्यं निवारयति, आगाम्यर्थं साधयति च, स एव मन्त्री। तथा चोक्तम्,—

स्थितस्य कार्य्यस्य समुद्भवार्थम्
आगामिनोऽर्थस्य च सम्भवार्थम्।
अनर्थकार्य्ये प्रतिघातनार्थं
यो मन्यतेऽसौ परमो हि मन्त्री" ॥ ३३ ॥

मन्त्रिणोक्तं,—"भो राजन्! मन्त्रिणा स्वामिहितकार्य्यं कर्त्तव्यम्; तदुक्तं,—

मन्त्रः कार्य्यानुगो येषां कार्य्यं स्वामिहितानुगम्।
त एव मन्त्रिणो राज्ञां न तु ये गल्लफुल्लकाः ॥ ३४ ॥

---

(ग) आप्तेति।—आप्तानां शिष्टानां, ज्ञानवतामिति यावत्, वचनं वाक्यम्।

मन्त्रिण उत्कर्षं प्रतिपादयति, स्थितस्येति।—स्थितस्य निवृत्तीभूय वर्त्तमानस्य, [ "यस्योच्चारं विना नूनं सम्यग्वायुः प्रवर्त्तते। दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः॥" इत्यादिवत् अत्रापि गतिनिवृत्तिसातार्थपरस्य स्थाधातो [ "जीत क्तः" (३।२।१८७ पा०) इति वर्त्तमाने निष्ठा ] कार्य्यस्य कर्म्मणः समुद्भवार्थम् अभिनवयुक्तिकौशलोत्पादनार्थम् आगामिनः भविष्यतः, [ "गमेरिनिः" (उणा० ४ पा० ६ सू०) इति भविष्यति इनिः, "आङि णित्" (उणा० ४ पा० ७ सू०) इति णित्वादुपधावृद्धिः ] अर्थस्य विषयस्य च, सम्भवार्थं यथा सम्भवति तदर्थम्, अनर्थकार्य्ये अनिष्टकरकार्य्ये, प्रतिघातनार्थं तन्निवारणार्थञ्चेत्यर्थः, यः मन्त्री, मन्यते मनसा विचारयति, असौ हि असौ एव, परमः श्रेष्ठः, मन्त्री सचिवः, भवतीति शेषः। उपेन्द्रवज्रेन्द्रवज्रयोः उपजातिः वृत्तम् ॥ ३३ ॥

प्रभुहितसाधका एव मन्त्रिप्रधाना इति वक्तुमाह, मन्त्र इति।—येषां मन्त्रिणां, मन्त्रः मन्त्रणा, परामर्शः इति यावत्, कार्य्यानुगः कर्त्तव्यकर्म्मानुसारी, भवतीति शेषः, कार्य्यं कर्त्तव्यं कर्म्म च, स्वामिहितानुगं स्वामिनः प्रभोः, हितं मङ्गलम्,

अन्यच्च—

यन्मन्त्रिणा विना राज्यं गृहं धान्यादिकं विना।
सौभाग्यं यौवनमृते विना ज्ञानं विरागता॥ ३५॥

दुर्ज्जनानां शान्तिः, पाषण्डिनां मतिः, वेश्यानां प्रीतिः, खलानां मैत्री, पराधीनस्य स्वातन्त्र्यं, निर्धनस्य रोषः, सेवकस्य कोपः, स्वामिनः स्नेहः, कृपणस्य गृहं, व्यभिचारिण्याः पुरुषभक्तिः, तस्कराणां युक्तिः, मूर्खाणां सम्मतिः, इत्येतत् सर्वं कार्य्यं निष्फलं ज्ञातव्यम्। अन्यच्च,—राज्ञा महतां सेवा कर्त्तव्या, आप्तानां वचः श्रोतव्यं, देवब्राह्मणाः प्रतिपालनीयाः, न्यायमार्गेण वर्त्तितव्यम्। भो राजन्! राजलक्षणोक्ता गुणाः सर्व्वे त्वयि विद्यन्ते, त्वं सकलराजराजोत्तमः।

मन्त्रिणाऽपि एवंविधगुणगरिष्ठेन भवितव्यं,—यः कुल-क्रियाज्ञः, कामन्दक-चाणक्य-पञ्चतन्त्रादिमकलशास्त्रकलाऽभिज्ञश्च (घ)। गुणास्तु—स्वामिकार्य्यार्थम् उद्यमः, पापाद्भयं, प्रजानां

---

अनुगच्छति तादृशं, प्रभुचित्तानुसारीत्यर्थः, भवति इति शेषः, त एव तादृशा एव, राज्ञां नृपतीनां, मन्त्रिणः मन्त्रिपदवाच्याः, ये तु ये हि मन्त्रिणः, गन्धपुद्गलाः लाक्षा-पुत्तलिका इव, अर्थात् लाक्षापुत्तलिकावत् केवलं सभाशोभावर्द्धकाः, ते न, मन्त्रिशब्द-वाच्या भवन्तीति शेषः, "स किंसखा साधु न शास्ति योऽधिपम्" इत्यादिवदिति भावः। पथ्यावक्त्रं वृत्तम्॥ ३४॥

मन्त्रिणं विना राज्यरक्षणं दुष्करम् इति वक्तुमाह, यदिति।—मन्त्रिणा सचिवेन, विना विरहितं, राज्यं, धान्यादिकं खाद्यशस्यादिकं, विना विरहितं, गृहं गृहाश्रमः, यौवनं तारुण्यम्, ऋते विना, सौभाग्यं सुभगत्वं, स्त्रीवाल्लभ्यम् इत्यर्थः, ज्ञानं तत्त्वज्ञानं, विना ऋते, विरागता वैराग्यम्, "एतत्सर्वं निष्फलं ज्ञातव्यम्" इति पश्चादुक्तगद्यांशेनान्वयः॥ ३५॥

(घ) कामन्दकः कामन्दकीयनीतिः, चाणक्यः कौटिल्यसूत्रं, पञ्चतन्त्रं विष्णु-शर्म्मकृतनीतिग्रन्थविशेषः, तदादिसकलशास्त्रेषु, कलासु शिल्पसङ्गीतादिविद्यासु च, अभिज्ञः निपुणः।

सङ्गोपनं, ( ङ ) परिचारकाणां संयोजनं, राज्ञः चित्तवृत्त्यनुसरणं, समयोचितपरिज्ञानञ्च। अपायकार्य्यात् (च) राजा निवारणीयः। एवंविधगुणयुक्तो मन्त्रिपदयोग्यो भवति। यथा नन्दराजमन्त्रिणा बहुश्रुतेन राज्ञो ब्रह्महत्या निवारिता"।

भोजराजेनोक्तं,—"कथमेतत् ?" मन्त्री वदति,—"भो राजन् ! श्रूयतां कथयामि,—

[ इति भानुमतीकथाऽवतरणिका ]।

---

## अथ भानुमती-कथा।

विशालायां नगर्य्यां नन्दो नाम राजा महाशौर्य्यसम्पन्नोऽभूत्। निजभुजबलेन सर्वान् प्रत्यर्थिनृपतीन् पादपद्मोपजीविनो ( छ ) विधाय एकच्छत्रेण राज्यं करोति स्म। तस्य राज्ञः जयपालो नाम पुत्रः, षड्विधदण्डाऽऽयुधसाधनाभिज्ञो (ज) मन्त्री बहुश्रुतो नाम, भार्य्या च भानुमती नाम

---

( ङ ) सङ्गोपन—रक्षा।

( च ) अपायकार्य्यात्—नाशजनककार्य्यात्, अनिष्टकार्य्यादित्यर्थः।

---

( छ ) प्रत्यर्थिनृपतीन्—विरोधिनृपान्। पादेति।—पादपद्मम् उपजीवन्ति आश्रयन्ति ये तान्, चरणकमलाश्रितान्।

( ज ) षडिति।—दण्ड्यते अनेनेति दण्डः,—सैन्यम्, आयुध्यते अनेनेति आयुधः—अस्त्रं, साध्यते कार्य्यमनेनेति साधनम्—उपायः, षड्विधेषु—मौलादिषु षट्प्रकारेषु, दण्डेषु—सैन्येषु, सैन्यनियोजनेषु इत्यर्थः, आयुधेषु—अस्त्रेषु, अस्त्रप्रयोगकौशलेषु इत्यर्थः, तथा साधनेषु—"भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्युक्तेषु चतुर्विधेषु उपायप्रयोगेषु च, अभिज्ञः,—कुशलिन, निपुणः इत्यर्थः। षड्विधसैन्य यथा कामन्दकीये,—"मौल भूत श्रेणि सुहृत् द्विषदाटविकं तथा। षड्विधन्तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत्॥" इति।

आसीत्। सा राज्ञोऽतिप्रिया, भूपतिः सर्व्वदा तस्याम् अनुरक्तः सुरतसुखम् (झ) अनुभवन् तिष्ठति स्म। यदा सिंहासने उपविशति, तदा अर्द्धासने (ञ) भानुमतीमुपवेशयति, क्षणमपि तस्या वियोगं न सहते।

एकदा मन्त्रिणा मनसि विचारितम्, "अयं राजा निर्लज्जो भूत्वा सभामध्ये सिंहासने स्त्रियमुपवेशयति, सर्वोऽपि जनस्तां पश्यति, महदनुचितमेतत्; यः कामी, स उचितानुचितं न जानाति। तथा हि,—

किमु कुवलयनेत्राः सन्ति नो नाकनार्य-
स्त्रिदशपतिरहल्यां तापसीं यत् सिषेवे?।
हृदयतृणकुटीरे दह्यमाने स्मरेण
उचितमनुचितं वा वेत्ति कः पण्डितोऽपि? ॥ ३६ ॥

यः स्त्रीणां कटाक्षबाणैर्यावन्न भिद्यते, तावदेव स प्रतिष्ठां धर्य्यञ्च वहति। तथा चोक्तम्,—

(झ) सुरतसुख—रतिसुखम्।

(ञ) अर्द्धासने—अर्द्ध समप्रविभाग. आसनस्य ["अर्द्धं नपुंसकम्" (२।२।२ पा०) इति सामानाधिकरण्ये तत्पुरुष] सिंहासनस्य अर्द्धांशे इत्यर्थं।

कामार्त्तानां सदसद्विवेकाभावत्वं दर्शयितुं दृष्टान्तश्लोकमाह, किमु इति।— कुवलयनेत्रा नीलोत्पललोचना, नाकनार्य्य स्वर्गीयस्त्रिय, अप्सरस इत्यर्थ, नो सन्ति न विद्यन्ते किमु? किन्तु सन्त्येव, तथाऽपि त्रिदशपतिः देवराजः इन्द्र, तापसी मुनिपत्नीम् अहल्या, सिषेवे कामयामास, इति यत्, तत्र हेतु,—हृदयतृणकुटीरे हृदयरूप-तृणगृहे, स्मरेण कामेन, दह्यमाने सन्तप्यमाने सति, पण्डित अभिज्ञोऽपि, क को जनः, उचित योग्यम्, अनुचितम् अयोग्यं वा, वेत्ति? विचारयति? न कोऽपीत्यर्थं। त्रिभुवनपतिरिन्द्रोऽपि कामेन विमोहितः, का कथा मनुष्याणामिति भावः। मालिनी वृत्तम्, तल्लक्षणं यथा,—"ननमयययुतेयं मालिनी भोगिलोकैः" — "नयुगमथ मकारौ यौ गणोऽयौ यकारौ, वसुशिखरिविरामा मालिनी चित्रकामा" इति ॥ ३६ ॥

तावद्धत्ते प्रतिष्ठां प्रशमयति मनश्चापलं तावदेव
तावत् सिद्धान्तसूत्रं स्फुरति हृदि परं विश्वलोकैकदीपम्।
क्षीराब्धेः पारवेलावलयविलसितैर्मानिनीनां कटाक्षैः
यावन्नो हन्यमानं कलयति हृदयं दीर्घलोलायताक्षैः ॥३७॥

अहो! मदनस्य माहात्म्यं कालज्ञमपि विकलयति!! (ट)

उक्तञ्च,—

विकलयति कलाकुशलं हसति शुचिं पतितञ्च विशोधयति।
अधीरयति वै धीरं क्षणेन मकरध्वजो देवः ॥ ३८ ॥

---

स्त्रीणां धैर्यप्रतिष्ठादिकमपि नश्यति इति स्वोक्तिं द्रढयितुं प्राचीनोक्तिमाह, तावदिति।—क्षीराब्धेः क्षीरसागरस्य, [ एतेनातिशुभ्रत्वं व्यज्यते ] पारवेलावलय पारवेलायाः पारस्थितोपकूलस्य यत् वलयं गोलः, तस्य विलसितमिव प्रस्फुरणमिव विलसितं येषां तैः, अतिदूरात् दृश्यमानं हि वस्तु वायुविहतदृष्टितया यथा कदाचित् दृश्यमानं कदाचित् अदृश्यमानं सत् चञ्चलमिव प्रतिभाति, तद्वत् इति भावः, [ एतेन दीर्घत्वचञ्चलत्वादिकं व्यज्यते ] दीर्घलोलायताक्षैः दीर्घलोलानि अत्यन्तचञ्चलानि च आयतानि विस्फारितानि च अक्षीणि चक्षूंषि येषु तैः, मानिनीनां मानवतीनां नारीणाम्, [ एतेन अतीव सुप्रेयसीत्वं व्यज्यते ] कटाक्षैः अपाङ्गदृष्टिपातैः, हन्यमानं ताड्यमानं, हृदयं मनः, यावत् यत्कालपर्य्यन्तं, नो कलयति न अवबुध्यते, पुरुष इति शेषः, तावत् तत्कालपर्य्यन्तमेव, प्रतिष्ठां गौरवं, धत्ते धारयति, तावदेव तत्पर्य्यन्तमेव, मनश्चापलं चित्तस्य चाञ्चल्यं, प्रशमयति निराकरोति, तावत् तत्पर्य्यन्तमेव, हृदि मनसि, विश्वलोकैकदीपं विश्वलोकस्य जगतः, एकम् अद्वितीयं, दीपयतीति दीपम् आलोकजनकं, सिद्धान्तसूत्रं शास्त्रीयसिद्धान्तवाक्यं परम् अत्यर्थं, स्फुरति सुप्रकाशते। स्त्रीणां कटाक्षबाणनिहताः सर्व्वमेव विस्मरन्तीति भावः। वृत्तं स्रग्धरा —"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥ ३७॥

(ट) कालज्ञमपि—विवेकिनमपि। विकलयति—अधीरयति।

विद्वांसोऽपि मदनाहताः विकलीभवन्ति इति स्वोक्तिसमर्थनाय महाजनोक्ति-माह, विकलयतीति।—मकरध्वजो देवः कामदेवः, क्षणेन स्वल्पकालमात्रेण, कलाकुशलं शिल्पविद्यादिनिपुणमपि जनं, विकलयति अक्षमं करोति, शुचिं विशुद्धं जनं, हसति उपहसति, पतितम् अपवित्रं जनं, विशोधयति पवित्रं करोति, धीरं

तथा च,—

श्रुतं सत्यं तपः शीलं विज्ञानं तत्त्वमुत्तमम्।
इन्धनीकुरुते मूढ़ः प्रविश्य वनितानले ॥ ३८ ॥
इतिवृत्तं बलस्यान्तं स्वकुलस्यापि लाञ्छनम्।
मरणञ्च समीपस्थं कामी लोको न पश्यति" ॥ ४० ॥

इति मन्त्रिन्त्य एकदाऽवसरं प्राप्य राजानमब्रवीत्,—"भो राजन्! किञ्चित् विज्ञाप्यमस्ति"। राज्ञोक्तं,—"किं तत् ब्रूहि"। मन्त्रिणोक्तं,—"यदेतत् भानुमती सभामध्ये अर्द्धासने उपविशति, तन्महदनुचितं भवति, 'असूर्य्यम्पश्या राजदाराः' (ठ)

---

धर्य्यशालिनमपि जनम्, अधीरयति अधीरं करोति। वै पादपूरणे। कामप्रभावात् सर्व्वमेव नश्यतीति भावः। आर्य्या वृत्तम्। एतस्य लक्षणादिकम् अस्मत्कृताया छन्दोमञ्जर्य्या अभिनवव्याख्याया सविस्तरम् अवलोकनीयम् ॥ ३८ ॥

स्त्रैणानां श्रुतादिकं सर्व्वमेव समूलं विनश्यतीति दर्शयति, श्रुतमिति।—मूढः मोहान्धः [एतेन वह्निप्रवेशसम्भावना सूच्यते] जनः वनितारूपे नारीरूपे वह्नौ, प्रविश्य प्रवेशं कृत्वा, समासज्य इत्यर्थः, श्रुतं शास्त्रज्ञानं, सत्यं सत्यपरायणत्वं, तपः तपस्या, शीलं सुशीलता, विज्ञानं शिल्पादिज्ञानम्, उत्तमं तत्त्वञ्च उत्कृष्टं तत्त्वज्ञानञ्च, इन्धनीकुरुते तस्मिन्नग्नौ काष्ठवत् भस्मीकरोतीत्यर्थः। अनलार्पितकाष्ठं यथा दहनात् भस्मीभूय नाममात्रमपि नावतिष्ठते, तथा कामिनीसमासक्तानां शास्त्रज्ञानादिकं समूलमेव दूरीभवतीति भावः ॥ ३९ ॥

कामवशगा विवेकवर्ज्जिता भवन्ति इत्याशयेनाह, इतिवृत्तमिति।—कामी कामपरायणः, लोकः जनः, इतिवृत्तं पूर्व्वतनकीर्त्तिकथां, बलस्यान्तं बलनाशं, स्वकुलस्य निजवंशस्य, लाञ्छनं कलङ्कं, समीपस्थं निकटागतं, मरणं मृत्युञ्चापि, न पश्यति न पर्य्यालोचयति। कामतन्त्रा हि अत्याधिकस्त्रीसम्पर्कात् स्वप्रतिष्ठा-वंशगौरव-बलहानि-मरणादिदोषं जानन्तोऽपि सततमेव अविचारितं तदासक्ता भवन्तीति भावः ॥ ४० ॥

(ठ) असूर्य्येति।—सूर्य्यमपि न पश्यन्तीति असूर्य्यम्पश्याः, [“असूर्य्यललाटयोर्दृशितपोः” (३।२।३६ पा०) इति खशि प्रत्यये “अरुर्द्विषदजन्तस्य मुम्” (६।३।६७ पा०) इति मुमागमः] अत्यन्तगुप्ता इत्यर्थः। राजदाराः,—दारयन्ति भ्रातृस्नेहमिति दाराः, पत्युर्भ्रातृभेदकरणात् दारेति प्रसिद्धिः, राज्ञः दाराः राजदाराः।

इति शास्त्रकारवचनम्। अत्र नानाविधो जनः समागत्य तां पश्यति"। राज्ञोक्तं,—"सर्व्वमपि जानामि, किं करोमि? मम महती प्रीतिः अस्याम्, इमां विहाय क्षणमपि स्थातुं न शक्नोमि"। मन्त्रिणोक्तं,—"तर्ह्येवं क्रियताम्"। राज्ञोक्तं,—"किं तन्निरूप्यताम्"। तेनोक्तं,—"चित्रकारमाहूय तेन पटस्योपरि भानुमत्या रूपं लेखयित्वा, पुरःस्थिते भित्तिप्रदेशे सङ्घट्य (ड) तस्याः स्वरूपं द्रष्टव्यम्"। तद्वचनं राज्ञः चित्ते लग्नम्।

ततो राजा चित्रकारमाहूयोक्तवान्,—"भोः चित्रकार! भानुमत्या रूपं चित्रे लेखनीयम्"। चित्रकारेणोक्तं,—"भो देव! अहं तस्या रूपं प्रथमं प्रत्यक्षं विलोक्य, पश्चात् यथाऽवयवं विलिखिष्यामि"। तच्छ्रुत्वा राज्ञा भानुमती आकारिता, तस्मै दर्शिता च। स तु तां विलोक्य, पद्मिनी स्त्री इयमिति विज्ञाय, पद्मिनीलक्षणयुक्तां विलिलेख। पद्मिनीलक्षणं यथा,—

"कमलमुकुलमृद्वी फुल्लराजीवगन्धा
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे।
चकितमृगसनाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घं श्रीफलश्रीविडम्बि॥ ४१॥

(ड) सङ्घट्य—स्थापयित्वा, [सम्पूर्वस्य णिजन्तघटधातोः ल्यप्, घटादित्वात् "घटादयो मितः" (ग०) इति मित्त्वात् ह्रस्वः, णिचो लोपश्च]।

पद्मिनीलक्षणं विवृणोति श्लोकद्वयेन, कमलेति।—कमलमुकुलमृद्वी पद्मकोरकवत् कोमला, फुल्लराजीवगन्धा मुखादौ प्रस्फुटितपद्मवत् गन्धाढ्या च, भवतीति शेषः, यस्याः कामिन्याः, सुरतपयसि सुरतजले, अङ्गे शरीरे च, दिव्यम् उत्कृष्टं, सौरभं सुगन्धः, वर्त्तते इति शेषः, नेत्रे यस्याः नयने, चकितमृगसनाभे भीतमृगीणां नयनतुल्ये, अत्यन्तचञ्चले इत्यर्थः, प्रान्तरक्ते अरुणपर्यन्ते च, भवतः इति शेषः, अनर्घम् अनुपमं, स्तनयुगलं स्तनद्वयं, श्रीफलस्य बिल्वफलस्य, श्रियं शोभां, विडम्बयति तिरस्करोति, श्रीफलसादृश्यमुद्वहतीत्यर्थः, यत् तादृशं, भवतीति शेषः, सा पद्मिनी

तिलकुसुमसमानां बिभ्रती नासिकां स्वां
द्विज-सुर-गुरुपूजाश्रद्दधाना सदैव।
कुवलयदलकान्तिः काऽपि चाम्पेयगौरी
विकचकमलकोषा कामिनी कान्तपत्रा ॥ ४२ ॥
व्रजति मृदु सलीलं राजहंसीव तन्वी
त्रिवलिललितमध्या चारुहासा सुवेषा।
मृदु लघु शुचि भुङ्क्ते नम्रशीला सुकेशी
धवलकुसुमवासोवल्लभा पद्मिनी स्यात्" ॥ ४३ ॥

एवमुक्तलक्षणयुक्तं तस्याः रूपं लिखित्वा राज्ञो हस्ते समर्पितवान्। राजाऽपि तत्र चित्रलिखितां तां दृष्ट्वा अतिसन्तुष्ट-स्तस्मै चित्रकाराय उचित ददौ।

तदनन्तरं शारदानन्देन राजगुरुणा चित्रपटलिखितां भानु-

---

स्यादिति परेणान्वयः। एतानि त्रीणि पद्यानि मालिनीवृत्तघटितानि। तल्लक्षणं यथा,—"न-न-म-य-ययुतेयं मालिनी भोगिलोकैः" इति ॥ ४१ ॥

तिलेति।—तिलकुसुमसमाना तिलपुष्पसदृशी, स्वां निजां, नासिकां नासां, बिभ्रती धारयन्ती, सदैव सर्व्वदैव, द्विजसुरगुरुपूजाश्रद्दधाना ब्राह्मणानां देवानां गुरूणाञ्च पूजासु अर्च्चनासु श्रद्दधाना तत्र परमश्रद्धावतीत्यर्थः, कुवलयदलकान्तिः नीलोत्पलदलवत् श्यामकान्तिः, काऽपि काचित्, चाम्पेयगौरी चम्पकपुष्पवत् गौरवर्णा, विकचकमलकोषा विकचकमलवत् कोष, अवयवविशेषः यस्याः सा तादृशी, कान्तपत्रा कान्तानि कमनीयानि पत्राणि लक्षणया रोमाणि यस्याः सा तादृशी, कामिनी पद्मिनी स्यादिति परेणान्वयः ॥ ४२ ॥

व्रजतीति।—राजहंसीव मृदु अत्वरितं, सलीलं सविलासञ्च, व्रजति गच्छति, तन्वी कृशाङ्गी च, त्रिवलिभिः उदरस्थरेखात्रयेण, ललितं सुन्दरं, मध्यम् उदरप्रदेशः यस्याः सा, चारुः मनोज्ञः, हासः हास्य यस्याः सा, सुवेषा सुन्दरवेषधारिणी च, भवतीति शेषः, मृदु कोमलं, लघु सुपच, शुचि शुद्धञ्च खाद्यं, भुङ्क्ते भक्षयति, नम्रशीला विनयवती, सुकेशी शोभनकेशा च, धवलकुसुमवासोवल्लभा धवले शुभ्रे, कुसुमवासिते च, वाससि वस्त्रे, वल्लभा प्रीतिमती, पद्मिनी स्यात् भवेत्। पूर्व्वोक्तसकललक्षणाक्रान्ता नारी पद्मिनी भवतीत्यर्थः ॥ ४३ ॥

मतीं दृष्ट्वा चित्रकारं प्रति भणित,—"भोः चित्रकार! भानुमत्याः सर्वं लक्षणं लिखितं, परमेकं विस्मृतं त्वया"। तेनोक्तं,—"भोः स्वामिन्! किं विस्मृतं कथय"। शारदानन्देनोक्तं,—"तस्याः वामजघनस्थले मत्स्याकारः तिलकः (ढ) अस्ति, स न लिखितस्त्वया"। राजाऽपि शारदानन्दवचनं श्रुत्वा, तत्प्रत्ययनिरीक्षणार्थं (ण) यावत् सुरतसमये तस्याः वामजघनं पश्यति, तावत् मत्स्याकारः तिलको दृष्टः। तं दृष्ट्वा राजा स्वमनसि अचिन्तयत्, "कथमस्याः गुप्तदेशे स्थितं तिलकं दृष्टवान्? सर्व्वथाऽनया सह अस्य संसर्गो विद्यते॥ अन्यथा कथमेतदनेन ज्ञातम्? स्त्रीणां विषये पापसन्देहः कर्त्तव्य एव। तथा च,—

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः।
हृदये चिन्तयन्त्यन्यं न स्त्रीणामेकतो रतिः॥ ४४॥

---

(ढ) तिलकः,—तिलकालकरोगः, यदुक्तं माधवनिदाने,—"कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान्॥" इति। "तिल" इति भाषा।

अत्रैव प्रश्नावसरोऽस्ति, यत् पतिव्रताया राजपत्न्याः जघनस्थतिलचिह्नं शारदानन्दः कथं ज्ञातः? कथं वा चित्रकारस्य ज्ञानविषयीभवितुमर्हत्येतद्वृत्तान्त? वसनावृताङ्गे कथं वा तदङ्कितव्ये चित्रकारेण? तत् शारदानन्दस्य "विस्मृतम्" इत्यादिदोषोद्घाटनं कथं सङ्गच्छते? अत्रोच्यते,—अन्येषां दुर्ज्ञेयं भानुमत्याः जघनस्थतिलचिह्नं सर्व्वज्ञतया शारदानन्देन ज्ञातमपि, चित्रकारस्य तादृशविज्ञानशक्तेरसत्त्वात् तथा वस्त्रान्तरालितदेशस्य अनङ्कनीयत्वाच्च तदनङ्कनं न विस्मृतिदोषावहम्, एतत् रहस्यज्ञत्वेऽपि शारदानन्देन यत् "विस्मृतम्" इत्युक्तं, तत् राज्ञः सभायाश्च पुरतः स्वविद्यागौरवप्रदर्शनार्थमिति ज्ञेयम्।

(ण) तदिति।—तस्मिन् वचने, यः प्रत्ययः विश्वासः, तस्य निरीक्षणार्थं सत्यासत्यतानिर्णयार्थम् इति भावः।

स्त्रियः अविश्वास्या इति यदाह, तत्र हेतुं प्रदर्शयति श्लोकत्रयेण, जल्पन्तीति।—स्त्रियः, अन्येन एकेन पुरुषेण, सार्द्धं सह, जल्पन्ति सम्भाषन्ते, अन्यम् अपरञ्च पुरुषं,

नाग्निस्तृप्यति काष्ठौघैर्नापगाभिर्महोदधिः ।
नान्तकः सर्वभूतैश्च न पुम्भिर्वामलोचना ॥ ४५ ॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता जनः ।
इत्थं नारद ! नारीणां पातिव्रत्यं हि जायते ॥ ४६ ॥
यो मोहान्मन्यते मूढ़ो रक्तेयं मयि कामिनी ।
स भवेत् वशगस्तस्या नृत्यक्रीडाशकुन्तवत् ॥ ४७ ॥
तासां वाक्यानि स्वल्पानि तथ्यानि सुगुरूण्यपि ।
करोति यः कृती लोके लघुत्वं तस्य निश्चितम् ॥ ४८ ॥

सविभ्रमा सविलासा, पश्यन्ति निरीक्षन्ते, हृदये मनसि, अन्यम् अपरं, पुरुषमिति शेष, चिन्तयन्ति भावयन्ति च, स्त्रीणां नारीणाम्, एकत. एकस्मिन् पुरुषे, रतिः प्रीतिः, न नास्तीत्यर्थः ॥ ४४ ॥

नाग्निरिति ।—अग्निः वह्निः, काष्ठौघैः काष्ठराशिभिः, न तृप्यति तृप्तिं नाप्नोति, महोदधि समुद्रः, आपगाभिः नदीभिः, न तृप्यति, अन्तकः यमः, सर्व्वभूतैः सकलप्राणिभिरपि न तृप्यति, तद्वत् वामलोचना योषिदपि, पुम्भिः पुरुषैः, न तृप्यति, नवं नवं निरन्तर प्रार्थयते इति भावः ॥ ४५ ॥

रह इति ।—नारद प्रति श्रीकृष्णस्योक्तिरियम् । रहः निर्जनस्थानं, नास्ति न विद्यते, क्षणः अवसरः, नास्ति, कार्य्यव्यापृतत्वादिति भावः, प्रार्थयिता प्रार्थनाकारी, सुरतार्थीति भावः, जनः लोकश्च नास्ति, हे नारद ! इत्थम् एवम्प्रकारेण कारणेन, हि हेतुपदेऽपि, नारीणां स्त्रीणां, पातिव्रत्यं सतीत्व, जायते वर्त्तते इत्यर्थः । अन्यथा एतेषां सद्भावश्चेत् तर्हि कुतस्तासां साधुत्वम् ? नैव स्यादिति भावः ॥ ४६ ॥

श्लोकद्वयेन स्त्रैणानां हेयत्वं वर्णयति, यः इति ।—यः मूढः मूर्खः, मोहात् अज्ञानात्, इयं कामिनी एषा नारी, मयि रक्ता मां प्रति अनुरागिणी, इति मन्यते विवेचयति, स मूर्खः, नृत्यक्रीड़ाशकुन्तवत् क्रीडार्थं नृत्यकारी विहग इव, तस्याः नार्य्याः, वशगः वशीभूतः, भवेत् स्यात् । भ्रान्त. स इति भावः ॥ ४७ ॥

तासामिति ।—यः कृती कुशली, स्वाधीन इत्यर्थः, तासां नारीणां, तथ्यानि यथार्थभूतान्यपि, सुगुरूणि गौरवयुक्तान्यपि, स्वल्पानि स्वल्पमात्राण्यपि, वाक्यानि वचनानि, करोति निष्पादयति, लोके जगति, तस्य जनस्य, लघुत्वं लाघवं, निश्चितं निःसन्देहं, भवतीति शेषः । सर्व्वथा योषितां श्लोका वागपि दूरत एव परिहरणीयेति भावः ॥४८॥

अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते" ॥ ४८ ॥

इत्येवं विचार्य्य मन्त्रिणमाहूय पूर्ववृत्तान्तमकथयत्। मन्त्रिणाऽपि तत्समये तच्चित्तानुकूलं यथा, तथा भणितं,—"भो भो राजन्! कस्य चेतः कीदृग्विधमस्ति, तत् केन ज्ञायते? सर्वथा सत्यं भवितुमर्हत्ययं वृत्तान्तः"। राज्ञा भणितं,—"भो मन्त्रिन्! यदि मम त्वं प्रियः, तर्हि अमुं शारदानन्दं मारय"। मन्त्रिणाऽपि "तथाऽस्तु" इति उक्त्वा लोकानां पुरतो धृतः शारदानन्दो बद्धश्च। तस्मिन् अवसरे शारदानन्देन भणितम्,—"अहो! राज्ञां न कोऽपि प्रियो भवतीति लोकोक्तिः सत्या? तथा हि,—

कोऽर्थान् प्राप्य न गर्वितः? विषयिणः कस्याऽऽपदोऽस्तं गताः?
स्त्रीभिः कस्य न खण्डितं भुवि मनः? को नाम राज्ञां प्रियः?।
कः कालस्य न गोचरान्तरगतः? कोऽर्थी गतो गौरवं?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्? ॥ ५० ॥

---

अलक्तक इति।—अबलाभिः स्त्रीभिः, यथा रक्तः रक्तवर्णः, अलक्तकः, निष्पीड्य नितरां पीडयित्वा, पादमूले दीयते, तथा तद्वत् रक्तः अनुरक्तः, पुरुषः पुमान्, बलात् बलपूर्वकं, पादमूले चरणतले, निपात्यते निक्षिप्यते इत्यर्थः। यथा रक्तमलक्तकं नार्यः पादमूलमारोपयन्ति, तथा अनुरागिणं कान्तं प्रणयापराधेन चरणानतं कुर्वन्तीति भावः। पथ्यावक्त्रं वृत्तम् ॥ ४९ ॥

राज्ञां न कोऽपि प्रियः इति यदुक्तं तत्समर्थनाय प्राचीनश्लोकमुदाहरति, क इति।—कः जनः, अर्थान् धनानि, प्राप्य लब्ध्वा, गर्व्वितः अहङ्कृतः न भवति? विषयाः स्रक्-चन्दनवनितादयः सन्त्यस्य इति विषयिणः विषयासक्तस्य इत्यर्थः, कस्य जनस्य, आपदः विपदः, अस्तं गताः विलुप्ताः? के विषयिणः निरापदः सन्तीति भावः, भुवि इह जगति, कस्य मनः चित्तं, स्त्रीभिः नारीभिः, न खण्डितं न भग्नम्? न विचालितमिति भावः, अपि तु सर्वस्यैवेत्यर्थः, को जनः, राज्ञां नृपाणां, प्रियः प्रीतिपात्रम्? नाम सम्भावनायां, कोऽपि राज्ञां प्रियो नेति सम्भावयामीत्यर्थः। कः जनः, कालस्य

काके शौचं द्यूतकारे च सत्यं
क्लीबे शौर्य्यं मद्यपे तत्त्वचिन्ता।
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः
राजा मित्रं केन दृष्टं श्रुतं वा ? ॥ ५१ ॥

राजा यस्मै क्रुध्यति स शुचिरप्यशुचिर्भवति। तथा चोक्तम्,—

शुचिरशुचिः पटुरपटुः शूरो भीरुश्चिरायुरल्पायुः।
कुलजः कुलेन हीनो भवति नरो नरपतेः क्रोधात्" ॥ ५२ ॥

ततो मन्त्रिणा वध्यस्थानं प्रति नीयमानः स परं श्लोकमपठत्,—

---

यमस्य, न गोचरान्तरगतः दृष्टिपथं न गतः ? अपि तु सर्व्व एव इत्यर्थः, सर्व्व एव कालेन लीयते इति भावः, कः अर्थी याचकः, गौरवं सम्मानं, गतः प्राप्तः ? याच्ञाया गौरवं नास्तीति हृदयम्, को वा पुमान् कश्च पुरुषः, सुजन इत्यर्थः, दुर्जनवागुरासु दुर्जनानां धूर्त्तानां वागुरासु जालेषु, शठतायामिति सारार्थः, पतितः सन् क्षेमेण कुशलेन निर्व्विघ्नमिति निष्कर्षः, यातः गतः ? निष्कृतिमिति शेषः, न कोऽपीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ५० ॥

उक्तस्यैवार्थस्य दार्ढ्याय श्लोकान्तरमवतारयति, काके इति।—काके वायसे, शौचं शुद्धता द्यूतकारे द्यूतक्रीडापरायणे, सत्यं सत्यवाक्यं, क्लीबे षण्ढे शौर्य्यं वीरत्वं, मद्यपे सुरापायिणि तत्त्वचिन्ता तत्त्वार्थालोचनं, सर्पे पन्नगे, क्षान्तिः क्षमागुणः, स्त्रीषु नारीषु कामोपशान्तिः कामनायाः उपशमः, राजा नृपश्च, मित्रं बन्धुः, एतत्सर्व्वं केन जनेन, दृष्टं विलोकितं, श्रुतम् आकर्णितं वा ? न केनापीत्यर्थः। एतत्सर्व्वमसम्भवमिति भावः। शालिनी वृत्तम्, तल्लक्षणं यथा—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति ॥ ५१ ॥

राजकोपस्य अनर्थकारितामाह शुचिरिति।—नरपतेः राज्ञः, क्रोधात् कोपात्, शुचिः विशुद्धः, नरः पुमान् अशुचिर्भवति पटुः निपुणो जनः अपटुर्भवति शूरः बलवान् जनः भीरुर्भवति चिरायुः दीर्घायुर्जनः, अल्पायुः स्वल्पजीवितो भवति, कुलजः सत्कुलोत्पन्नश्च जनः, कुलेन हीनः निष्कुलश्च भवति। आर्य्या वृत्तम् ॥ ५२ ॥

"वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्व्वतमस्तकेषु।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि" ॥ ५३ ॥

मन्त्रिणा स्वमनसि विचारितम्,—"अहो! एतत् सत्यं वा मिथ्या वा, किमर्थं ब्राह्मणवधः क्रियते? महदनुचितमेतत्" इति शारदानन्दमन्यैः अज्ञातं स्वान्तर्भवनं नीत्वा, भूगर्भे निक्षिप्य, राजानं प्रत्यागत्य मन्त्रिणा भणितं —"भो राजन्! अनुष्ठिता तवाज्ञा"। राज्ञा "साधु कृतम्" इति भणितम्।

[ इति भानुमतीकथा ]।

---

## अथ राजपुत्र-भल्लूककथा।

---

तदनन्तरमेकदा राजकुमारः आखेटार्थं (त) वनं प्रति निर्गतः। निगमनसमये अपशकुनः (थ) समभूत्। स यथा,—

---

अपराधमन्तरेणापि हन्तुं वध्यस्थानमानीयमानं मां मदीयपुण्यमेव रक्षिष्यतीति दृष्टान्तेन समर्थयितुमाह वने इति।—पुराकृतानि प्रागनुष्ठितानि, पुण्यानि सुकृतानि, वने अरण्ये, रणे युद्धक्षेत्रे शत्रुजलाग्निमध्ये शत्रुमध्ये जलमध्ये अग्निमध्ये च महार्णवे सागरे, पर्व्वतमस्तकेषु पर्व्वतशृङ्गेषु च सुप्तं निद्रितं, प्रमत्तं प्रमादग्रस्तं वा अथवा, विषमस्थितं विपद्ग्रस्तञ्च, जनं रक्षन्ति। वृत्तमुपजातिः,—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति "उपेन्द्रवज्रा प्रथमे लघौ सा" इति "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणसद्भावात् ॥ ५३ ॥

---

(त) आखेटार्थं—मृगयानिमित्तम्।
(थ) अपशकुनः,—दुर्निमित्तम्।

अकालवृष्टिः प्रवसूतकञ्च निर्घात उल्कापतनं तथैव।
इत्याद्यनिष्टानि ततो बभूवुर्निवारणार्थं सुहृदो वचश्च ॥ ५४ ॥

तस्मिन्नवसरे मन्त्रिपुत्रेण बुद्धिसागरेणोक्तं,—"भो जयपाल! अद्य आखेटं मा गच्छ, महानपशकुनो दृश्यते"। ततो जयपालेनोक्तम्,—"अपशकुनस्य प्रतीतिर्नास्ति"। तेनोक्तं,—"भो राजकुमार! बुद्धिमता पुरुषेणानिष्टोऽपशकुनः प्रत्ययेन (ट) द्रष्टव्यः। उक्तञ्च,—

अत्र जन्मान्तरकृतं कर्म्म पुंसां शुभाशुभम।
यत् तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ ५५ ॥
न निन्देत् योगिनां वृन्द ब्रह्मद्वेषं न कारयेत्।
न विषं भक्षयेत् प्राज्ञो न क्रीडेत् पन्नगैः सह" ॥ ५६ ॥

---

अपशकुन विवृणोति, अकालवृष्टिरिति।—अकालवृष्टि. असमये वर्षण. प्रवसूतकं मृतसन्तानप्रसव, निर्घातः ऊर्द्धाधःस्थवाय्वो. परस्परं सङ्घर्षण, ( तदुक्तं,—"यदन्तरीक्षे बलवान् मारुतो मरुता हत.। पतत्यध स निर्घात ॥" इति ) तथैव एवञ्च, उल्कापतनम् उल्कापात, तत निवारणार्थं गमननिषेधाय, सुहृद मित्रस्य, वचः वाक्यञ्च, इत्यादि अनिष्टानि अमङ्गलानि, बभूवु। वृत्तमुपजाति ॥ ५४ ॥

( ट ) प्रत्ययेन—निश्चयेन, विश्वास्यत्वेन इति भाव.।

अपशकुनस्य विश्वास्यत्वे प्रमाणमाह अत्रेति।—पसा पुरुषाणा, यत् शुभाशुभं शुभं श्रेयस्करम् अशुभम् अमङ्गलकरञ्च [ "विप्रतिषिद्धञ्चानधिकरणवाचि" ( २।४।१३ पा० ) इति पाक्षिकसमाहारत्वादेकवचनम् ] पुण्यपापमित्यर्थः कर्म्म कार्य्यं, जन्मान्तरकृतम् अन्यस्मिन् जन्मनि आचरितं, भवेदिति शेष., अत्र अस्मिन् जन्मनि. गच्छता गन्तुमुद्यतानां, तेषामित्यर्थ., शकुन शुभाशुभसूचकनिमित्त, तस्य शुभाशुभकर्म्मण., पाकं परिणामं, फलमित्यर्थः, निवेदयति ज्ञापयति ; शुभसूचकनिमित्तदर्शनेन शुभफलम्, अशुभसूचकनिमित्तदर्शनेन च अशुभफल भवतीत्यर्थः। पथ्यावक्त्रं वृत्तम् ॥ ५५ ॥

सर्व्वाण्येव शास्त्राणि मुनिप्रोक्तानि तत्राप्रत्यये योगिवृन्दावहेलनं स्यात् तच्च न शुभकरम्, इत्याशयेनाह, नेति।—प्राज्ञः ज्ञानी जनः, योगिना वृन्द तापससमूह, न निन्देत् तेषा निन्दा न कुर्य्यात्, ब्रह्मद्वेष ब्राह्मणविद्वेषञ्च, न कारयेत् [ स्वार्थे णिच् ] न सम्पादयेत्, विषं कालकूटं, न भक्षयेत् न खादेत्, पन्नगैः सर्पैः सह, न क्रीडेत् क्रीड़ा

इति तेन निवारितोऽपि तद्वचनमनादृत्य राजपुत्रो निर्गतः। पुनर्निर्गमनसमये तेन भणितं,—"भो जयपाल! तव विनाशकालः समायातः, अन्यथा एवं बुद्धिर्नोत्पद्यते। तथा चोक्तम्,—

नीतो न केनापि न दृष्टपूर्वो न श्रूयते हेममयः कुरङ्गः।
तथाऽपि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥५७॥

उपार्जितानां कर्म्मणामुपभोगं विना कथं विनाशः स्यात्? तथा चोक्तम्,—

सद्भावो नास्ति वेश्यानां स्थिरता नास्ति सम्पदाम्।
विवेको नास्ति मूर्खाणां विनाशो नास्ति कर्म्मणाम्" ॥ ५८ ॥

ततो राजकुमारो वनं गत्वा बहून् श्वापदान् (ध) व्यापाद्य

---

न कुर्यात्। सर्व्वमेतत् महाजनाङ्गीकृतं सतामवश्यं पालनीयम्, अन्यथा महाननर्थो भवेदिति भावः। पथ्यावक्त्रं वृत्तम् ॥ ५६ ॥

बुद्धिविपर्ययः आत्मनाशलिङ्गम् इति यदुक्तं तत्समर्थनार्थं प्राचीनोक्तिम् उदाहरति, नीत इति।—हेममयः स्वर्णमयः, कुरङ्गः मृगः, केनापि जनेन, न नीतः न प्रापितः, न दृष्टपूर्वः पूर्वं न दृष्टः, न च श्रूयते कैनाप्याकर्ण्यते, तथाऽपि एवं सत्यपि, रघुनन्दनस्य रामचन्द्रस्य, न कस्यचित्साधारणस्येति भावः, तृष्णा तद्ग्रहणाभिलाषः, अभूदिति शेषः। तत्र हेतुमाह—विनाशकाले अनिष्टापातसमये, लोक इत्यध्याहार्य्यं, विपरीतबुद्धिः प्रतिकूलबोधः, भवतीति शेषः। एतदनुरूपश्लोको यथा,—"असम्भवं हेममृगस्य जन्म तथाऽपि रामो लुलुभे मृगाय। प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिना भवन्ति ॥" इति। उपजातिः वृत्तम् ॥ ५७ ॥

भोगव्यतिरेकेण कर्म्मक्षयो न स्यात् इति यदुक्तं, तत् दृष्टान्तप्रदर्शनेन समर्थयमान आह, सद्भाव इति।—वेश्यानां वारयोषितां सद्भावः प्रणयस्थैर्य्यं, नास्ति नैव विद्यते, सम्पदां धनानां, स्थिरता स्थायित्वं, नास्ति, मूर्खाणाम् अज्ञानां, विवेकः सदसज्ज्ञानं नास्ति, तथा कर्म्मणां पूर्व्वकृतकर्म्मणां, विनाशः क्षयः, नास्ति। "स्वकर्म्मफलभुक् पुमान्" अतः अवश्यमेव कर्म्मफलं भोक्तव्यमिति भावः। एतदारभ्य ६२ श्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तम् ॥ ५८ ॥

(ध) श्वापदान्—हिंस्रपशून्, व्याघ्रादीन् इत्यर्थः ॥

कश्चनारं दृष्ट्वा तमनुगतः महदरण्यं प्रविष्टो यावत् पश्यति, तावत् सर्वोऽपि सैन्यवर्गः नगरमार्गे लग्नः। कृष्णसारोऽपि तत्रादृश्यो जातः। स्वयमेकाकी तुरगारूढः सरोवरम् अग्रेवणम् (न) अपश्यत्। तत्राश्वादवतीर्णो वृक्षशाखायाम् अश्वं निबध्य जलपानं विधाय यावत् वृक्षाधःस्थक्ष्मायाम् (प) उपविशति, तावदतिभयङ्करः कश्चिदेको व्याघ्रः समागतः। तं सहसा दृष्ट्वा अश्वो बन्धनं त्रोटयित्वा (फ) पलायमानो नगरमार्गमगमत्। राजकुमारोऽपि भयाद्वेपमानः (ब) शाखामालम्ब्य वृक्षमारूढः, तत्र पूर्वारूढं भल्लूकमेकं दृष्ट्वा पुनरत्यन्तं भयं प्राप्तः। अथ तेन भल्लूकेन भणितं,—"भो राजकुमार! त्वं मा भैषीः, अद्य मम शरणागतस्त्वम्, अत एव अहं किमपि अनिष्टं न करिष्यामि। मां विश्वस्य व्याघ्रादपि न भेतव्यम्"। राजकुमारेण भणितं,—"भो ऋक्षराज! (भ) सत्यमेवाहं तव शरणागतः, विशेषतो भयभीतः। अतः रक्षणीय एव; यतो हि महत् पुण्यं शरणागतरक्षणात् भवति। तदुक्तम्,—

एकतः क्रतवः सर्वे सहस्रवरदक्षिणाः।
एकतो भयभीतानां प्राणिनां प्राणरक्षणम्" ॥ ५८ ॥

---

(न) अग्रेवणं—वनस्य अग्रे, पुरोवर्त्तिनि वने इत्यर्थः। "वनं पुरगा—" (८।४।४ पा०) इति णत्वम्।

(प) क्ष्मायां—भूमौ।

(फ) त्रोटयित्वा—छित्त्वा।

(ब) वेपमानः—कम्पमानः।

(भ) ऋक्षराज!—भल्लूकश्रेष्ठ!।

शरणागतरक्षणे पुण्यं यदुक्तं तत्र श्लोकमाह, एकत इति।—सहस्रवरदक्षिणाः सहस्रवरः श्रेष्ठदक्षिणायुक्ताः, सर्वे सकलाः, क्रतवः यागाः, एकतः एकस्मिन् तुला-

तदा भल्लूकेन समाश्वासितो राजपुत्रः। व्याघ्रोऽपि वृक्षाधः समायातः। ततः सूर्य्योऽप्यस्तं गतः। रात्रौ अतिश्रान्तं राजपुत्रं यावत् निद्रा समायाति, तावत् "त्वं वृक्षाधः पतिष्यसि, एहि ममाङ्के (म) निद्रां कुरु" एवमुक्तवतः भल्लूकस्याङ्के निद्रां गतः राजपुत्रः। तदा व्याघ्रो वदति,—"भो भल्लूक! अयं ग्रामवासी, पुनरपि मृगययाऽस्मान् निहनिष्यति, एतुरयं किमर्थमङ्के निवेशितः? (य) यतोऽयं मानुषः। त्वयोपकृतोऽपि अयम् अपकारमेव करिष्यति, तस्मात् अमुम् अधः पातय, अहमेनं भक्षयित्वा सुखेन गमिष्यामि। त्वमपि निजाश्रमं गच्छ"।

भल्लूकेनोक्तम्, —"अयं यादृशोऽपि भवतु, परं मम शरणागतः अहं न पातयिष्यामि। शरणागतमारणे महत् पापम्। तथा चोक्तम्,—

विश्वासघातकाश्चैव शरणागतघातकाः।
वसन्ति नरके घोरे यावदाभूतसम्प्लवम्" ॥ ६० ॥

तदनन्तरं राजपुत्रो विनिद्रो जातः। भल्लूकेनोक्तं,— "भो राजकुमार! अहं क्षणं निद्रां करिष्यामि, त्वमप्रमत्तः (र) तिष्ठ"। तेनोक्तं,—"तथा भवतु"। ततो भल्लूको राजपुत्र-समीपे निद्रां गतः। तदा व्याघ्रेणोक्तं,—"भो राजकुमार! त्वमस्य विश्वासं मा कुरु, यतोऽयं नखायुधः। उक्तञ्च,—

---

पात्रे, एकत्र. अपरस्मिन् तुलापात्रे च, भयभीतानां भयप्राप्तानां, प्राणिनां जीवानां, प्राणरक्षणं जीवनरक्षा एतदुभयमेव समानमित्यर्थः। ॥ ५९॥

(म) अङ्के—क्रोडे।

(य) निवेशितः—स्थापितः, शायित इत्यर्थः।

शरणागतमारणे दोषप्रतिपादनाय प्रमाणमुपन्यस्यति. विश्वासेति।—विश्वास-घातका विश्वस्तजनापकारिणः. शरणागतघातकाः आश्रितजनहिंसकाश्च, जनाः इति शेषः, आभूतसम्प्लवं यावत् प्रलयपर्य्यन्तं, घोरे भयावहे, नरके वसन्ति ॥ ६० ॥

(र) अप्रमत्तः,—सावधानः।

नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च॥ ६१॥

अयञ्च चलचित्तो (ल) दृश्यते, तस्मादस्य प्रसादोऽपि भयङ्करः (व) एव। तथा चोक्तम्,—

क्षणं तुष्टाः क्षणं रुष्टा रुष्टास्तुष्टाः क्षणे क्षणे।
अव्यवस्थितचित्तानां प्रसादोऽपि भयङ्करः॥ ६२॥

अयं त्वां मत्तो (श) रक्षित्वा स्वयमत्तुम् (ष) इच्छति, अतस्तममुं भल्लूकमधः पातय, अहमेनं भक्षयित्वा गमिष्यामि, त्वमपि निजनगरं गच्छ"। तत् श्रुत्वा राजपुत्रो यावत् तमधः

---

नखायुधानामविश्वास्यत्वे प्रमाणमाह नखिनामिति।—नखिनां नखायुधानां व्याघ्रादीनां, नदीनां सरितां, शृङ्गिणां शृङ्गधारिणां गोमहिषादीनां, तथा [ शस्त्रं पाणौ अस्ति एषां, "सप्तमी विशेषणे बहुव्रीहौ" (२।२।३५ पा०) इति सूत्रे वृत्तौ "ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः" इत्युक्तेः "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" (वा०) इति सूत्रेण च बहुव्रीहौ "सर्व्वादेश्च" इति वार्त्तिकात् "सर्व्वधनी" इतिवत् इनिः; केचित् तु सञ्ज्ञापूर्व्वकत्वात् दीर्घस्य अनित्यतामाहुः सत्काकविप्रयोगात् इति अपरे, अन्ये तु शस्त्रेण पणायन्ते व्यवहरन्ति इति ग्रहादित्वात् आयङ्-अभावपक्षे पणधातोः णिन् इति कृत्वा समादधते] शस्त्रपाणिनां शस्त्रधारिणां जनानां, स्त्रीषु नारीषु राजकुलेषु राजवंशोत्पन्नेषु च, विश्वासः प्रत्ययः, नैव कर्त्तव्यः न कदापि करणीयः। एते सर्वे एव विश्वासयोग्याः न भवन्तीति भावः॥ ६१॥

(ल) चलचित्तः,—चञ्चलप्रकृतिः अव्यवस्थितचित्त इति यावत्।

(व) प्रसादोऽपि—अनुग्रहोऽपि। भयङ्करः—भयजनकः।

चलचित्तस्य प्रसादोऽपि भयावह इति दर्शयितुं श्लोकमाह, क्षणमिति।—ये जनाः क्षणम् अल्पकालं यावत् तुष्टाः सन्तोषं गताः क्षणं रुष्टाः क्रुद्धाः, क्षणे क्षणे प्रतिक्षणमेव, रुष्टाः तुष्टाश्च भवन्ति, तेषाम् अव्यवस्थितचित्तानाम् अस्थिरचेतसां जनानां, प्रसादः प्रसन्नतास्वरूपोऽपि भयङ्करः भीतिप्रदः। येषां चित्तस्य स्थिरता नास्ति तेषां प्रसादेऽपि न विश्वासः करणीय इति तात्पर्यम्॥ ६२॥

(श) मत्तः—मत्सकाशात्।

(ष) अत्तु—भोक्तुम्।

पातयति, तावद्भल्लूको वृक्षात् पतनमन्तरा (स) शाखामन्यामवलम्बितवान्। पुनस्तं दृष्ट्वा राजपुत्रो भयमाप। भल्लूकोऽप्यवदत्,—"भोः पापिष्ठ ! किमर्थं बिभेषि ? यत् पुराऽर्जितं कर्म्म, तत् त्वया भोक्तव्यमस्ति। तर्हि त्वं 'स-से-मि-रा' इति वदन् पिशाचाविष्टो (ह) भव" इति शापं (क) दत्तवान्। ततः प्रभातमासीत्। व्याघ्रस्तस्मात् स्थानात् निर्गतः। भल्लूकोऽपि राजकुमारं शप्त्वा निजस्थानमगात्। राजकुमारोऽपि 'स-से-मि-रा' इति वदन् पिशाचाविष्टो भूत्वा वनं परिभ्रमति स्म।

राजपुत्रस्य तुरङ्गो राजपुत्रेण शून्यो नगरमगमत। जनाः अश्वं शून्यं दृष्ट्वा राज्ञोऽग्रे केवलमागतमश्वमाचख्युः (ख)। ततो राजा मन्त्रिणमाहूय भणति स्म,—"भो मन्त्रिन् ! यदा कुमारो मृगयार्थं वनं प्रति निर्गतः, तदा महानपशकुन आसीत्, तमुल्लङ्घ्य निर्गतः, तस्य प्रत्ययो जातः। तेनाऽऽरूढोऽश्वः शून्यः सन् वनादागतः, अतस्तन्मार्गणार्थं (ग) वनं प्रति गमिष्यामः"। तेनोक्तं,—"देव ! तथा कर्त्तव्यम्"।

ततो राजा मन्त्रिणा, परिवारेण (घ) च सह, येन मार्गेण स गतः, तेनैव मार्गेण वनं गतः। वनमध्ये परिभ्रमन्तं—

---

(स) पतनमन्तरा—पतनं विना [ अन्तराशब्दयोगात् द्वितीया ]।

(ह) पिशाचाविष्टः,—पिशाचग्रहाक्रान्तः, तदुक्तं भावप्रकाशे,—"उद्वस्त्रः कृशपरुषो विरुद्धभाषी दुर्गन्धी भृशमशुचिस्तथाऽतिलोलः। बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः॥" इति।

(क) शाप—प्राप्तमनस्तापकर्तृकम् "अनिष्टं ते भूयात्" इत्येवंरूपमव्यर्थमनिष्टाभिशंसनम्।

(ख) आचख्युः,—कथितवन्तः [ ख्याधातोः चक्षधातोर्वा लिट् ]।

(ग) मार्गणार्थम्—अनुसन्धानार्थम्।

(घ) परिवारेण—परिजनेन।

'स-से-मि-रा' इति वदन्तं पिशाचाविष्टं कुमारं दृष्ट्वा महाशोकसागरे निमग्नस्तमादाय स्वपुरमगमत्। मणिमन्त्रौषधज्ञान् (ङ) आहूय, तैश्चिकित्सितोऽपि स न स्वस्थो (च) बभूव; तस्मिन्नवसरे राजा मन्त्रिणमवदत्,—"भो मन्त्रिन्! अस्मिन्नवसरे शारदानन्दश्चेदस्थास्यत्, तर्हि क्षणमात्रेण अमुमचिकित्सिष्यत्; स मया मारितः। पुरुषेण यत् कार्य्यं क्रियते, तद्विचार्य्यैव कर्त्तव्यम्, अन्यथा परमापदः सम्भवन्ति। उक्तञ्च,—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥ ६३॥

---

(ङ) मणिमन्त्रौषधज्ञान्—मणयः रत्नानि, मन्त्राः तन्त्राद्युक्तशब्दविशेषाः, औषधानि रोगनाशनार्थद्रव्याणि, तानि जानन्ति ये तान्, देवासुरगन्धर्व्वयक्षपितृनागरक्षःपिशाचभेदेन निदाने भूतोन्मादोक्तानाम् अष्टग्रहाणां केन ग्रहेणाविष्टे कानि रत्नानि धार्य्याणि? के मन्त्राः प्रयोज्याः? कानि औषधानि च दातव्यानि? इत्यादिषु अभिज्ञान्। मणिमन्त्रादीनां ग्रहाद्यावेशजनितोन्मादादिव्याधौ प्रयोगः आयुर्वेदे दृश्यते, तद्‌यथा भावप्रकाशे द्रव्यगुणाधिकारे,—"रत्नानि भक्षितानि सुमधुराणि सराणि च। चक्षुष्याणि च शीतानि विषघ्नानि धृतानि च॥ मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च॥' १७९ श्लोकः, तथा च चरके उन्मादाधिकारे,—"आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा" इति १०४ श्लोक।

(च) स्वस्थः,—स्वभावस्थः।

वस्तुविशेषावधारणमन्तरेणैव प्रवृत्तिः स्यादित्याशङ्का अविमृष्यकारित्वस्य दोषं दर्शयितुमाह, सहसेति।—सहसा हठात्, अविमृष्य इत्यर्थः, [ "सहसेत्याकस्मिकाविमर्शयोः" इति गणव्याख्याने स्वरादिपाठादव्ययम् ] क्रिया किमपि कार्य्यं, न विदधीत न कुर्य्यात्; अविवेकः अविमृष्यकारिता परम् अत्यन्त, घोरमिति यावत् आपदां विपत्तीना, पदं स्थानं, विपत्तिकारणमित्यर्थः. भवतीति शेषः। उक्तमर्थमन्वयेनाह, वृणते इति।—गुणलुब्धाः गुणपक्षपातिन्यः, ( इति स्वयवरणहेतूक्तिः ) सम्पदः अभ्युदयादयः, विमृष्यकारिणं विमृष्य करोतीति विमृष्यकारी [ "उपपदमतिङ्" ( २।२।१९ पा० ) इति समासः ] तं विवेकपूर्व्वकं कर्म्मानुष्ठायिनं जनं, स्वयम् आत्मनैव, हि निश्चितं वृणते आश्रयन्ति, तस्माद्विमृष्य एव प्रवर्त्तितव्यमिति भावः। सुन्दरी वा वियोगिनी नाम

तस्मिन्नवसरे कोऽपि निवारको (छ) नाऽऽसीत्"। मन्त्रिणोक्तं,—"स समयस्तथैव स्थितः। (ज) यादृशं भवितव्यञ्च, (झ) तादृशी बुद्धिरपि जाता। उक्तञ्च,—

आशा सम्पद्यते बुद्धिः सा मतिः सा च भावना।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता॥ ६४॥

न हि भवति यन्न भाव्यं, भवति च भाव्यं विना प्रयत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति"॥ ६५॥

राज्ञोक्तं,—"तत् कर्मानुसारेणाभूत्। इदानीमस्य विषये महाप्रयत्नः कर्त्तव्यः"। मन्त्रिणोक्तं,—"कथम्?" राजाऽब्रवीत्,—"यः कोऽप्यस्य पुत्रस्य चिकित्सां (ञ) करिष्यति, तस्य (ट) अर्द्धराज्यं दीयते, इति मे घोषणा प्रदातव्या"।

---

छन्दः,—"अयुजोर्यदि सौ ज-गौ युजोः स-भ-रा रगौ यदि सुन्दरी तदा"-"अयुजोर्यदि सौ ज-गौ युजोः स भ-रा लोऽथ गुरुर्वियोगिनी" इति च लक्षणात्॥ ६३॥

(छ) निवारकः,—प्रतिषेधको जनः।

(ज) स इति।—स कालः तादृशानिष्टकर एव आसीदित्यर्थः।

(झ) अत्र चकारः पक्षान्तरद्योतकः, तेन स समयः तथा अशुभकरः आसीत्, येन बुद्धिभ्रमः जातः, अथवा भवितव्यमेव बुद्धिमन्यथा अजनयत् इत्यर्थः।

बुद्धेः भवितव्यताऽनुसारिणीत्वे प्रमाणमाह, आशेति।—भवितव्यता अवश्यम्भाविघटना यादृशी यत्प्रकारा भवति, तादृशी आशा कस्मिन्नपि विषये आकाङ्क्षा, सम्पद्यते भवति, सा तादृशी, बुद्धिः ज्ञानम्, अन्तःकरणमित्यर्थः, सा च मतिः तथैव इच्छा सम्पद्यते, भावना चिन्ता च, सा तादृशी एव इत्यर्थः, सहायाः सहचरादयोऽपि, तादृशाः तदनुरूपाः, ज्ञेया बोद्धव्याः। पथ्यावक्त्रं वृत्तम्॥ ६४॥

भवितव्यताया अवश्यम्भावित्वमाह, न हीति।—यत् कार्य्यं न भाव्यं भवितुमनर्हं, तत् न हि नैव भवति सम्पद्यते, भाव्यं भवितुमर्हं कर्म्म च, प्रयत्नेन चेष्टया विना भवति, यस्य भवितव्यता अवश्यम्भाविता नास्ति, तत् करतलगतमपि हस्तोपस्थितमपि, नश्यति दूरं याति, नैव सम्पद्यते इति भावः। आर्य्या वृत्तम्॥ ६५॥

(ञ) चिकित्सा—रोगोपशमनमित्यर्थः।

(ट) तस्य इत्यत्र सम्बन्धविवक्षया षष्ठी।

मन्त्रिणाऽपि तथा कारयित्वा स्वभवनमागत्य, शारदानन्दाग्रे सर्व्वमपि वृत्तान्तमकथयत्। तत् सर्व्वं श्रुत्वा शारदानन्देन भणितं (ठ),—"भो मन्त्रिन्। राज्ञोऽग्रे निरूपय, यत् मम काऽपि कन्या वर्त्तते, तस्या दर्शनमस्य कार्य्यं, सा कमप्युपायं करिष्यति"। तच्छ्रुत्वा राज्ञोऽग्रे मन्त्रिणा तथैव कथितम्। ततो राजा सर्व्वसभासहितो मन्त्रिमन्दिरम् (ड) आगत्योपविष्टः। तदा राजपुत्रोऽपि 'स-से-मि-रा' इति वदन्नुपविष्टः। तच्छ्रुत्वा जवनिकाऽन्तःस्थितेन (ढ) शारदानन्देन पद्यान्येतानि भणितानि,—

"सद्भावप्रतिपन्नानां वञ्चने का विदग्धता?।
अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम्?" ॥ ६६ ॥

तत्पद्यं श्रुत्वा कुमारेण चतुर्णामक्षराणां मध्ये एकमक्षरं परित्यक्तम्। पुनर्द्वितीयं पद्यमपठत्,—

"सेतुबन्धे समुद्रस्य गङ्गासागरसङ्गमे।
ब्रह्महा मुच्यते पापात् मित्रद्रोही न मुच्यते" ॥ ६७ ॥

---

(ठ) भणितं—कथितम्।

(ड) मन्त्रिमन्दिरं—मन्त्रिभवनम्।

(ढ) जवनिकाऽन्तःस्थितेन—पटान्तरालवर्त्तिना।

राजपुत्रेणोच्चारितस्य "ससेमिरा" इति वर्णचतुष्टयान्तर्गतस्य "स" इति प्रथमवर्णस्यार्थमाह, सद्भावेति।—सद्भावप्रतिपन्नानां सौहार्द्दयुक्तानां जनानां, वञ्चने प्रतारणे, का विदग्धता? किं नैपुण्यम्? न काऽपीत्यर्थः। अङ्कं क्रोडम्, आरुह्य अधिष्ठाय, सुप्तानां निद्रितानां जनानां हन्तुः मारयितुः, जनस्य किं पौरुषम्? कः पुरुषकारः? नाम सम्भावनायाम्, न काऽपि पौरुषसम्भावना इत्यर्थः। [एतेन राजकुमाराङ्कनिषण्णस्य भल्लूकस्य राजपुत्रेण यत् हननप्रयत्नः कृतः, तेन नास्ति पुरुषकारलेशोऽपि, प्रत्युत प्रत्यवाय एव इति गम्यते] एतदारभ्य ७१ श्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तम्॥ ६६ ॥

"से" इति द्वितीयवर्णस्यार्थमाह, सेतुबन्धे इति।—समुद्रस्य सेतुबन्धे रामेश्वरतीर्थे, तथा गङ्गासागरसङ्गमे ब्रह्महा ब्राह्मणवधजनितपापवान्, पापात् मुच्यते मुक्तः

तत् पद्यं श्रुत्वा कुमारेण अक्षरद्वयं परित्यक्तम्। ततः तृतीयं पद्यमपठत्,—

"मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
त्रयस्ते नरकं यान्ति यावदाभूतसम्प्लवम्" ॥ ६८ ॥

ततः कुमारः एकमेवाक्षरमपठत्। तदनन्तरं चतुर्थं पद्यमपठत्,—

"राजाऽसि राजपुत्रोऽसि यदि कल्याणमिच्छसि।
देहि दानं द्विजातिभ्यो देवताराधनं कुरु" ॥ ६९ ॥

एवमुक्तवति शारदानन्दे राजपुत्रः स्वस्थः, सावधानश्च (ण) अभवत्। ततः पितुरग्रे भल्लूकस्य वृत्तान्तमकथयत्। तच्छ्रुत्वा राजाऽब्रवीत्,—

"ग्रामे वससि कौमारि! अटव्यां नैव गच्छसि।
ऋक्ष-व्याघ्र-मनुष्याणां कथं जानासि भाषितम्?" ॥७०॥

---

स्यात्, परन्तु मित्रद्रोही बन्धुद्रोहकारी जनः, न मुच्यते पापमुक्तो न भवति। मित्रद्रोहसदृशं महापापं नास्तीत्यर्थः। [ एतेन विपन्नस्य राजकुमारस्य रक्षणेन सञ्जातसौहार्द्दस्य भल्लूकस्य विनाशचेष्टया राजकुमारस्य मित्रद्रोहित्वं, तेन च तस्यानिर्मुक्तपापत्वञ्च गम्यते ] ॥ ६७ ॥

"मि" इति तृतीयाक्षरस्यार्थमाह, मित्रेति।—यश्च योऽपि, मित्रद्रोही बन्धुजनस्य द्रोहकारी, कृतघ्नः उपकारस्य अस्वीकर्त्ता च, विश्वासघातकः विश्वासनाशकः, एते त्रयः, आभूतसम्प्लवं यावत् प्रलयकालपर्य्यन्तं, नरकं यान्ति नरके निवसन्ति। राजकुमारे विश्वस्ततया अङ्के सुप्तस्य कृतोपकारस्य मित्रस्य भल्लूकस्य विनाशप्रयत्नेन एतत्पापत्रितयवान् राजकुमार एव इति भावः ॥ ६८ ॥

"रा" इति अन्त्यवर्णस्य तात्पर्य्यमाह, राजेति।—राजा असि भवसि, राजपुत्रः राजकुमारः, असि भवसि, वा इति शेषः, यदि चेत्, कल्याणं मङ्गलम्; इच्छसि, तदा द्विजातिभ्यः ब्राह्मणेभ्यः, दानं देहि दानं कुरु, एवं देवताऽऽराधनं देवपूजाञ्च, कुरु विधेहि, तेन हि पापान्मुक्तो भविष्यसीति भावः ॥ ६९ ॥

(ण) स्वस्थः,—प्रकृतिस्थः। सावधानः,—स्थिरमना अभिनिवेशवांश्च।

अवरोधस्थायाः कुमार्य्याः वनवृत्तान्तज्ञानासम्भवात् विस्मितेन राज्ञा पृच्छ्यते, ग्रामे

तदा जवनिकाऽन्तःस्थितेन शारदानन्देन भणितम्,—

"देव-द्विज-प्रसादेन जिह्वाग्रे मे सरस्वती।
तेनाऽहमवगच्छामि भानुमत्यास्तिलं यथा" ॥ ७१ ॥

तद्वचनं श्रुत्वा राजा साश्चर्य्यो भूत्वा यावज्जवनिकां समाकर्षति, तावत् शारदानन्दं दृष्टवान्। अथ नरपति-प्रभृतिभिः सर्व्वैर्नमस्कृतः शारदानन्दः। तदा मन्त्रिणा पूर्व्ववृत्तान्तः कथितः। राजा बहुश्रुतं मन्त्रिणमुवाच,—"भो मन्त्रिन्! तव संसर्गेण कीर्त्तिः (त) प्राप्ता, दुर्गतिश्च गता; अतः पुरुषेण सतां सङ्गो विधेयः; तेनोभयमपि प्रयोजनं भवति। तथा च,—

वारयति वर्त्तमानामापदमागामिनीं हि सत्सेवा।
तृष्णाञ्च गाङ्गमम्भः पीतं नाशयति दुर्गतिकाम् ॥ ७२ ॥

मम पुत्रोऽपि त्वद्बुद्धिकौशलेन महद्विपज्जालात् (थ)

---

इति।—कौमारि! ग्रामे वससि अवतिष्ठसे, अटव्यां वने, नैव गच्छसि न यासि, ऋक्षव्याघ्रमनुष्याणां वनस्थितानामेतेषां जीवानां, भाषितं वाक्यं, वृत्तान्तमित्यर्थः, कथं केन प्रकारेण, जानासि? अवगच्छसि? त्वमिति शेषः ॥ ७० ॥

अयमेव प्रकृष्टावसरः स्वप्रकाशस्य इति मत्वा कुमारीभूमिकः जवनिकान्तर्गतः सिद्धः "नाहं कुमारी, अपि तु शारदाऽनुगृहीतः सर्व्वज्ञः शारदानन्दः" इति ज्ञापयितुमाह, देवेति।—देवद्विजप्रसादेन देवानां द्विजानाञ्च अनुग्रहेण, सरस्वती देवी, मे जिह्वाग्रे मदीयजिह्वायां, वर्त्तते इति शेषः, तेन हेतुना, अहं यथा भानुमत्याः सक्थ्याः, तिलं जघनस्थितं तिलचिह्नम्, अवगच्छामि इति शेषः, तद्वत् एतदपि अवगच्छामि सम्यग्जानामि इति सरलार्थः ॥ ७१ ॥

(त) संसर्गेण—सङ्गेन। कीर्त्तिः,—सुख्यातिः, यश इति यावत्।

सत्सङ्गस्य उभयप्रयोजनसिद्धौ दृष्टान्तप्रदर्शनपरं श्लोकमाह, वारयतीति।—सत्सेवा सज्जनसंसर्गः, वर्त्तमानाम् उपस्थिताम्, आगामिनीं भविष्यन्तीञ्च, आपदम् अमङ्गलं, हि निश्चये, वारयति निराकरोति। तथा च गाङ्गम् अम्भः गङ्गाजलं, पीतं सत्, तृष्णां पिपासां, दुर्गतिकां दुर्गतिस्वरूपं पापञ्च, [ दुर्गतिशब्दात् स्वार्थे कन्, ततः टाप् ] नाशयति निवारयति। आर्य्या वृत्तम् ॥ ७२ ॥

(थ) महद्विपज्जालात्—घोरसङ्कटरूपपाशबन्धनात्, दारुणसङ्कटसमूहादिति वा।

रक्षितः। राज्ञा ईदृशानां सतां महाकुलानां सङ्ग्रहः (द) कर्त्तव्यः। उक्तञ्च,—

सङ्ग्रहं वा कुलीनस्य सर्पस्येव करोति यः।
स एव श्लाघ्यते मन्त्री सम्यक् गारुडिको यथा" ॥ ७१ ॥

इति नानाप्रकारैः प्रियवचनकदम्बकैः (ध) मन्त्रिणं सम्मान्य, वस्त्रादिना सभाज्य (न) च राज्यमकरोत्।

इति मन्त्री भोजराजं प्रति कथां (प) कथयित्वा पुनरब्रवीत्,—"भो राजन्! यो राजा मन्त्रिवाक्यं शृणोति, स दीर्घायुः सुखी च भवति"।

[ इति राजपुत्र-भल्लूककथा ]।

(द) महाकुलानां—महद्वंशोत्पन्नानां, सङ्ग्रहः,—सचिवादिपदेषु नियोजनम्।

कुलीनसङ्ग्रहस्य श्रेयोभूयस्त्वापादकत्वात् तत्कारिणं मन्त्रिणं प्रशंसति, सङ्ग्रहमिति।—यः मन्त्री अमात्यः, (पक्षे—सर्पवशीकरणमन्त्रवित्) गारुडिको यथा विषवैद्य इव, सर्पस्येव कुलीनस्य सत्कुलजातस्य जनस्य, (सर्पपक्षे—कौ पृथिव्या, गर्त्ते इति यावत्, लीनस्य गूढभावेनावस्थितस्य) सङ्ग्रहं योग्यपदेषु सस्थापनं, (सर्पपक्षे —गर्त्तात् समाकर्षणं) करोति, स एव मन्त्री, सम्यक् उत्तमरूपेण, श्लाघ्यते प्रशस्यते, लोकैरिति शेषः। पथ्यावक्त्रं वृत्तम् ॥ ७१ ॥

(ध) प्रियवचनकदम्बकैः—प्रशंसासमूहैः।

(न) सभाज्य—समादृत्य।

(प) कथा—"प्रबन्धकल्पनां स्तोक-सत्यां प्राज्ञाः कथां विदुः। परम्पराश्रया या स्यात् सा मताऽऽख्यायिका बुधैः॥" इत्युक्तलक्षणा गद्यपद्यात्मिकां सरसरचनाम्। तथा च दर्पणे,—"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्। क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके। आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥" इति।

## अथ दानशक्तिवर्णनं नाम प्रथमोपाख्यानम् ।

ततो भोजराजः स्वमन्त्रिणं प्रशस्य वस्त्रादिना सम्भाव्य, तत् सिंहासनं (फ) नगराभ्यन्तर नीत्वा, तत्र सहस्रस्तम्भैर्मण्डपं कारयित्वा सुमुहूर्त्ते (ब) तत्र मन्त्रिभिर्विराजमानः, विप्रेराशीर्भिरर्चितः, वन्दिभिः (भ) प्रशंसितः, चातुर्वर्ण्यं (म) दान-मानाभ्यां सन्तोष्य, दीन-बधिर-पङ्गु-कुब्जादीनां (य) दानं दत्त्वा, छत्रचामराङ्कितो (र) यावत् पुत्तलिकामस्तके पादपद्मं निदधाति, (ल) तावत् पुत्तलिका मनुष्यवाचा राजानमब्रवीत्,—"भो राजन्! विक्रमस्य शौर्य्यौदार्य्य-सत्त्वादिकसादृश्य (व) यदि विद्यते, तर्हि अस्मिन् सिंहासने समुपविश"। राजाऽब्रवीत्,—"हे पुत्तलिके! मम त्वयोक्तं सर्व-

---

(फ) सिंहासन—राजासनम्।

(ब) सुमुहूर्त्ते—शुभलग्ने।

(भ) वन्दिभिः,—स्तुतिपाठकैः।

(म) चातुर्वर्ण्यं—ब्राह्मणक्षत्रियविट्शूद्रान्।

(य) दीनेति।—दीनः दरिद्रः, बधिरः श्रवणशक्तिहीनः, पङ्गुः गतिहीनः, कुब्जः,—"हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सुरुक्। क्रुद्धो वायुर्यदा कुर्य्यात् तदा तं कुब्जमादिशेत्॥" इत्युक्तलक्षणकरोगवान् जनः, ते आदयो येषां तेषाम्।

(र) छत्रेति।—छत्रम् आतपत्रं, चामरं बालव्यजनं, ताभ्याम् अङ्कितः चिह्नितः, सम्पन्न इति यावत्।

(ल) निदधाति—स्थापयति।

(व) शौर्य्येति।—शौर्य्यं शूरत्वम्, औदार्य्यम् उदारता, शत्रुमित्रयोः समता इत्यर्थः, सत्त्व स्वभावः, तानि आदीनि येषां तेषां सादृश्य साम्यम्।

मौदार्य्यादिकं विद्यते, किं न्यूनमस्ति? मयाऽपि सर्वेषाम् अर्थिनां कालोचितं (अ) दत्तम्"। तत् श्रुत्वा पुत्तलिकाऽवदत्,—"भो राजन्! एतदेव तवानुचितं, यत् स्वमुखेनैव आत्मानं कीर्त्तयसि, यः स्वगुणान् कीर्त्तयति, स केवलं दुर्ज्जन एव, सज्जनस्तु नैवं वक्ति। उक्तञ्च,—

स्वगुणान् परदोषान् वा वक्तुं शक्नोति दुर्ज्जनो लोके।
परदोषान् स्वगुणान् वा वक्तुं नो सज्जनः सत्यम्॥ ७४॥

अन्यच्च,—

आयुर्वित्तं गृहच्छिद्रं मन्त्र औषधसङ्गमौ।
दान-मानापमानञ्च नव गोप्यानि सर्व्वदा॥ ७५॥

अत एव आत्मनो गुणाः आत्मना न स्तोतव्याः, (ब) परेषां निन्दा (स) च न कर्त्तव्या"।

इति पुत्तलिकयोक्तं श्रुत्वा सविस्मयो भोजराजः पुनः पुत्त-

---

(अ) अर्थिनां—याचकानाम् [सम्बन्धविवक्षया षष्ठी]। कालोचितं—समयानुरूपम्।

दुर्ज्जना एव स्वगुणान् ख्यापयन्ति न सुजनाः, इति यदुक्तं तत्समर्थनश्लोकमाह, स्वगुणानिति।—लोके जगति, दुर्ज्जनः हीनजन एव, स्वगुणान् निजगुणान्, परदोषान् अन्यस्य दोषान् वा, वक्तुं शक्नोति, सज्जनस्तु परदोषान् स्वगुणान् वा वक्तुं नो शक्नोति, एतत् सत्यं यथार्थवाक्यम्। तथा च भारविः,—"परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति"। आर्य्या वृत्तम्॥ ७४॥

कृतमपि दानं न स्वेन कीर्त्तनीयमिति समर्थयति, आयुरिति।—आयुः जीवनकालः, वित्तं धनं, गृहच्छिद्रं गृहदोषः, मन्त्रः मन्त्रणा, औषधसङ्गमौ औषधं सङ्गमश्च, दानं सत्पात्रे वितरणं, मानं प्रतिष्ठा, अपमानम् अवज्ञा च, एतानि नव नवसङ्ख्यकानि, सर्व्वदा गोप्यानि गूढं रक्षणीयानि। एतदारभ्य ८४तम श्लोकपर्य्यन्तं पथ्यावक्त्रं नाम वृत्तमियम्॥ ७५॥

(ब) स्तोतव्याः,—कीर्त्तितव्याः।

(स) निन्दा—कुत्सा।

लिकामवदत्,—"सत्यमुक्तं त्वया, यः स्वगुणान् कीर्त्तयति, स मूर्ख एव। मया मद्गुणाः कीर्त्तिताः, तदनुचितमेव। यस्य एतत् सिंहासनं, तस्यौदार्य्यं कथय"। पुत्तलिका भणति,—"भो राजन्! एतत् सिंहासनं विक्रमार्कस्य। स तु सन्तुष्टश्चेत् अर्थिजनेभ्यः कोटिसुवर्णं (ह) प्रयच्छति। यथा,—

निरीक्षिते सहस्रन्तु अयुतन्तूपजल्पते।
महते लक्षदो भूपः सन्तुष्टः कोटिदः सदा॥ ७६॥

त्वयि एवम् औदार्य्यं विद्यते चेत्, तर्हि अस्मिन् सिंहासने उपविश"। राजा तूष्णीमासीत् (क)।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरा-भोजराजसंवादे (ख) दानशक्तिवर्णनं नाम प्रथमोपाख्यानम्]॥ १॥

---

(ह) कोटिसुवर्णं—कोटिसङ्ख्याकसुवर्णमुद्रा।

विक्रमादित्यस्य दानशीलता वर्णयति, निरीक्षिते इति।—निरीक्षिते दृष्टि-विषयमागते, दीनजने इति भाव, सहस्र ददाति, तस्मै इति शेष', उपजल्पते प्रार्थयते जनाय तु, अयुत दशसहस्रं ददाति, महते गुणवते, दरिद्राय इति शेष', लक्षदः लक्षं ददाति यः स तादृशः, सन्तुष्टः परितुष्ट', भूपः राजा विक्रमार्कः, सदा सततं, कोटिदः कोटिमुद्राप्रदः, आसीदिति शेषः॥ ७६॥

(क) तूष्णीमासीत्—मौनमवलम्बितवान्।

(ख) मिश्रकेश्यादयः उन्मादिन्यन्ताः पार्व्वत्याः नर्त्तक्यः द्वात्रिंशदप्सरस', कदाचित् केनचिदपराधेन तया शप्ताः इन्द्रदत्तविक्रमादित्यसिंहासने पुत्तलिकारूपेण संलग्ना आसन्, ता एव इदानीं सम्प्राप्तशापावसानकालत्वात् भोजराजेन सह आलपन्ति। वार्त्तेयं कथाऽवसानभागे विस्तरेण स्फुटीभविष्यतीति।

इति प्रथमोपाख्यानं समाप्तम्॥ १॥

## अथ विप्रमनोरथपूरणं नाम द्वितीयोपाख्यानम् ।

पुनरपि राजा यावत् अन्यपुत्तलिकामस्तके पादपद्मं निदधाति, तावत् सा पुत्तलिका तथैव मनुष्यवाचा राजानमब्रवीत्,—"भो राजन् । विक्रमस्य शौर्य्यौदार्य्य-सत्त्वादिकसादृश्यं यदि विद्यते, तर्हि अस्मिन् सिंहासने समुपविश"। भोजराजो वदति स्म,—"भोः पुत्तलिके ! कथय तस्य विक्रमस्य शौर्य्यौदार्य्यादि-वृत्तान्तम्" ।

सा कथयति,—"भो राजन् ! श्रूयताम् ;—

विक्रमादित्यः राज्यं पालयन् एकदा चारानाहूयाब्रवीत्,—"भो दूताः ! भवन्तः पृथिवीपरिभ्रमणं कुर्व्वन्तः यत्र यत्र कौतुकं (ग) तीर्थविशेषञ्च विलोकयन्ति, तन्मम निवेदयन्तु ; अहं तत्र गमिष्यामि"। एवं काले गते एकदा देशान्तरं परिभ्रमन्नागतः कश्चित् दूतो राजानमब्रवीत्,—"भो राजन् ! चित्रकूटपर्व्वतनिकटे (घ) तपोवनमध्ये अतिमनोहरो देवालयोऽस्ति। तत्र पर्व्वतोच्चस्थानात् विमला जलधारा पतति। तत्र स्नानं यदि क्रियते, तर्हि सर्वेषां महापापानां क्षयो भवति ; यस्तु महापापं करोति, तस्याङ्गादतीव कृष्णमुदकं निःसरति। यस्तत्र स्नानं करोति, स पुण्यपुरुषः।

---

(ग) कौतुकं—विस्मयकरदृश्यम् ।

(घ) चित्रकूटेति ।—चित्रं कूटं शृङ्गमस्य। स च पर्व्वतः प्रयागक्षेत्रनिकटस्थ-भरद्वाजाश्रमात् सार्द्धत्रियोजनाद्दक्षिणतस्तिष्ठति, यथा रामायणे अयोध्याकाण्डे ९२ सर्गे भरत प्रति भरद्वाजवाक्यम्,—"भरतार्द्धतृतीयेषु योजनेष्वजने वने। चित्रकूटो गिरिस्तत्र रम्यनिर्झरकाननः॥ उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी। पुष्पितद्रुमसञ्छन्ना रम्यपुष्पितकानना॥ अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतः। तयोः पर्णकुटी तात ! तत्र तौ वसतो ध्रुवम्॥" [१०—१२ श्लोकाः] इति।

अन्यच्च,—तत्र कश्चित् 'ब्राह्मण: महति होमकुण्डे हवनं करोति, तस्य कियन्ति वर्षाणि अतीतानि इति न ज्ञायते। प्रतिदिनं कुण्डात् वह्नि: स्थापितं भस्म पर्व्वताकारं सत् अस्ति। स ब्राह्मण: केनापि सह न सम्भाषते। एवमतिविचित्रतरं स्थानं दृष्टम्"।

तच्छ्रुत्वा स राजा एकाकी तेन सह तत् स्थानं गत्वा परमानन्दं प्राप्तोऽवादीत्,—"अहो! अतिपवित्रमेतत् स्थानम्; अत्र साक्षाज्जगदम्बिका निवसति। एतत् स्थानं दृष्ट्वा मनो मे विमलं जातम्" इत्युक्त्वा तत्रान्तरीक्षोदकस्नानं (ङ) विधाय देवतां नमस्कृत्य, यत्र ब्राह्मणो हवनं करोति, तत्र गत्वा ब्राह्मणमवोचत्,—"भो ब्राह्मण! हवनमारभ्य कतिवर्षाणि जातानि?" ब्राह्मणेनोक्तं,—"यदा सप्तर्षिमण्डलं (च) रेवती-नक्षत्रस्य प्रथमचरणे स्थितं, तदा मया हवनं प्रारब्धम्; इदानी-मश्विनीनक्षत्रे तिष्ठति। होमं कुर्वतो मे वर्षशतमभूत्, (छ) तथाऽपि देवता प्रसन्ना नाभवत्"।

(ङ) आन्तरीक्षोदकस्नानं—निर्झरजले स्नानम्।

(च) सप्तर्षिमण्डलं—सप्त च ते ऋषयश्चेति सप्तर्षय: ["दिक्सङ्ख्ये सञ्ज्ञायाम्" (२।१।५० पा०) इति संज्ञात्वात् कर्म्मधारय:] तेषां मण्डलम् आकाशचैवस्थसप्तात्मकस्वरूपमण्डलमित्यर्थ:। स्वायम्भुवादिचतुर्द्दशमनव, तेषु षण्णां मनूनामधिकारा: गता:, तदारभ्य साम्प्रतं वैवस्वताख्यसप्तममनोरधिकार:, ये पुनर्मरीच्यादय: स्वायम्भुवमन्वन्तरे सप्तर्षय: आसन्, ते तु तदधिकारसमाप्तौ नक्षत्ररूपेण नभोमण्डले उत्तरस्यां सारुन्धतीका: स्थिता बभ्रम्यन्ते। मन्वन्तरभेदेन सप्तर्षीणामपि भेद:। वर्त्तमानवैवस्वत-मन्वन्तरे सप्तर्षयो यथोक्तं भागवते ८म स्कन्धे १२ अध्याये,—"कश्यपोऽत्रिर्वशिष्ठश्च विश्वामित्रश्च गौतम:। जमदग्निर्भरद्वाज इति सप्तर्षय: स्मृता:॥" इति।

(छ) रेवतीति।—ते च सप्तर्षय: एकैकस्मिन् नक्षत्रे वर्षाणां शतं शतं चरन्ति, अत: रेवतीनक्षत्रस्य प्रथमचरणे प्रथमे पादे यदा तन्मण्डलं स्थितं, तदारभ्य अश्विनी-नक्षत्रे अवस्थानसमयस्तु वर्षशतमेव रुद्ध्यते इति दिक्।

तच्छ्रुत्वा राजा स्वयं देवतां स्मृत्वा होमकुण्डे आहुतिम् अक्षिपत्। तदाऽपि देवी प्रसन्ना नाभूत्। तदनन्तरं राजा स्वशिरःकमलाहुतिं (ज) दास्यामि, इति बुद्ध्या यावत् कण्ठे खड्गं सन्दधाति, तावदन्तराले देवता (झ) खड्गं धृत्वा अवादीत्,—"भो राजन्! प्रसन्नाऽस्मि, वरं वृणीष्व" (ञ)। राज्ञा उक्तं,—"भो देवि! किमस्मादपि परमानन्दसन्दीपनमस्ति (ट) वर-प्रदानं, यत् यस्याः सन्ततस्मरणेन विधूतकल्मषाः (ठ) योगिनो यान्ति संसृतिक्लेशनाटकविड़म्बन-निर्वहणं, (ड) सा त्वं मादृशजनस्य नयनपथमधिगता सस्नेहमाभाषसे? तत् केवलं कुतूहलतया पृच्छ्यसे किमपि,—ब्राह्मणोऽयं बहुकालं हवनं करोति, नापराध्यति कस्मैचित्, न चापि नियमात् स्खलितः,

---

(ज) स्वेति।—स्वस्य आत्मनः शिरःकमल शिरस्थं यत् कमल सुषुम्णा-नाडीमध्यस्थितसहस्रदलपद्म [तन्त्रशास्त्रोक्तषट्चक्रान्तर्गतभ्रूमध्यावस्थितद्विदलाज्ञाख्य-चक्रादूर्द्ध्वावस्थितं बिन्दुस्थानं हि तत्, तथाचोक्तं तन्त्रसारे,—"सहस्राराम्बुजं बिन्दु-स्थानं तदूर्द्ध्वमीरितम्" इति] तेन आहुतिं देवोद्देशेन मन्त्रोच्चारणपूर्व्वकम् अग्नौ हवनीयद्रव्यनिक्षेपणम्, शिरआहुतिदानेनैव तदवस्थितकमलाहुतिं बोधयति। कमलेन देव्याः तुष्टेः प्रसिद्धत्वात्, देव्याः आत्मप्रीतिज्ञापनार्थं शिरःकमलाहुतिरुक्ता।

(झ) सन्दधाति—योजयति, स्थापयतीत्यर्थः। तावदन्तराले—अदृश्यस्थाने, स्थिता इति शेषः। देवता—देवी, यद्यपि देवताशब्दः अविशेषेण स्त्रीपुंदेवयोः बोधकः, तथाऽपि अत्र देव्याः एव ज्ञापकः। देवताशब्दस्य स्त्रीदेवीबोधकत्वे प्रमाणं यथा कूर्म्मे,—"या यस्याभिमता पुंसः सा हि तस्यैव देवता" इत्यारभ्य "विद्याधराणां वाग्देवी"··"किन्नराणाञ्च पार्व्वती"··"मनूनां स्यादुमा देवी" इत्यादि।

(ञ) वरम्—अभीष्टं, वृणीष्व—गृहाण इत्यर्थः।

(ट) परमेति।—परमम्—अनुत्तमम्, आनन्दं—हर्षं,सन्दीपयति—उद्दीपयति, वर्द्धयतीत्यर्थः, प्रकृष्टप्रीतिवर्द्धनमिति समुदितार्थः।

(ठ) सन्ततस्मरणेन—निरन्तरस्मृत्या। विधूतकल्मषाः,—विगलितपापाः।

(ड) संसृतीति।—संसृतिः,—संसार एव क्लेशनाटक—दुःखरूपाभिनयः, तदेव विड़म्बनं—लाञ्छनाव्यापारः, तस्य निर्व्वहणं—समाप्तिम्।

तथाऽपि अस्मिन् किमर्थं न प्रसन्ना भवसि? मम एव वा कः तथाविधः अर्हणाप्रकारः, (ढ) येन शीघ्रं प्रसन्नाऽसि?" तयोक्तं,—"भो राजन्! जपसरणिमुल्लङ्घ्य (ण) हवनम् अयं करोति, अपि तु अस्य चेतसि भावो नास्ति, (त) अतः प्रसन्ना न भवामि। उक्तञ्च,—

अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने।
पर्व्वसन्धिषु यज्जप्तं त्रिविधं निष्फलं भवेत्॥ ७७॥

---

(ढ) अर्हणाप्रकारः,—पूजाविशेषः।

(ण) जपसरणिमुल्लङ्घ्य – साधनपद्धतिमतिक्रम्य इत्यर्थः।

(त) भावः,—रागः, अत्यन्तप्रीतिरित्यर्थः, तन्मयत्वमिति यावत्, नास्ति—न विद्यते, अत्यन्तप्रीतौ हि तन्मयत्वमायाति, अस्य तु तन्नास्ति इति तात्पर्य्यम्, यद्वा,—भावो रागः, शास्त्रविहिताऽऽचारपरतन्त्रता इत्यर्थः। स तु त्रिविधः, तथा चोक्तं तन्त्रशास्त्रे,—"भावस्तु त्रिविधो देवि! दिव्यवीरपशुक्रमात्। दिव्यवीरौ महाभावौ अधमः पशुभावकः॥" इत्युक्तलक्षणत्रिविधभावानां कोऽप्येकतमः अस्य नास्ति, केवलं जपहोमौ क्रियेते इति तात्पर्य्यम्।

"बहुकालं कृतजपहोमादिकस्यापि द्विजस्य यथाविधि देवताध्यानाद्यननुष्ठितत्वादेव नाहं प्रसन्ना" इत्येवं दर्शयितु तत्र शास्त्रोक्तिमाह, अङ्गुल्यग्रे इति।—अङ्गुलीनां जपार्थं करमालायाः सङ्केताङ्गुलिविशेषाणाम्, अग्रे उपरितनप्रदेशे, यत् जप्तं यो जपः क्रियते, मेरुणा मालाग्रस्थितमेरुनामकगुटिकानां, करमालायाः अङ्गुलिपर्व्वभेदानाञ्च [तथा चोक्तं तन्त्रशास्त्रे—"तर्ज्जनी मध्यमाऽनामा कनिष्ठा चेति ताः क्रमात्। तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका। पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्॥" इति] लङ्घने शास्त्रार्थानामन्यथाकरणे, ("अनामिकात्रयं पर्व्व कनिष्ठादित्रिपर्व्विका। मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि। तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापभाक्॥" इत्यादि) शक्तिविषयकतन्त्रशास्त्रोक्तविधिमुल्लङ्घ्य इत्यर्थः, यत् जप्तं जपः क्रियते, यश्च पर्व्वसन्धिषु अङ्गुलिस्थविभागसूचकरेखासन्धिषु, जप्त जपः क्रियते, एतत् त्रिविधम् अपि जप्त निष्फलं फलरहितं भवेत् स्यात्। अतो विप्रस्यास्य जपः एतत्त्रितयान्तर्गततया निष्फल इति भावः॥ ७७॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ७८ ॥

मन्त्रादिसिद्धौ ऐकान्तिकचिन्तनस्यैव कारणत्व प्रतिपादयति, मन्त्रे इति।—मन्त्रे अप्यमन्त्रे, तीर्थे पुण्यक्षेत्रे द्विजे ब्राह्मणे, देवे देवतायां, दैवज्ञे ज्योतिषिके, भेषजे औषधे, गुरौ च विषये, यस्य यादृशी यत्प्रकारा, भावना चिन्ता, मानसव्रत्तिभेद इत्यर्थः, [ सा तु ब्रह्म-कर्म-तदुभयरूपा त्रिविधा, यथोक्तं विष्णुपुराणे,— "त्रिविधा भावना भूप। विश्वमेतन्निबोध मे। ब्रह्माख्या कर्मसञ्ज्ञा च तथा चैवोभयात्मिका" ॥ इति ( ६ अ। ७ अध्या० )। "सर्व्वं खल्विदं ब्रह्म" ( छान्दो० उप० ३ अध्या० १४ खण्ड० १ मन्त्र ) इत्येवभावना ब्रह्मभावना, "सर्वं कर्ममयम्" इत्येवरूपा भावना कर्मभावना. "सर्व्वमिदं ब्रह्ममयं कर्ममयञ्च" इति भावना उभयात्मिका भावना। अत्र तु यस्य मन्त्रे, शब्दस्य ब्रह्मस्वरूपत्वात् "मन्त्र एव ब्रह्म" इति भावना तस्य मन्त्रजपेनैव ब्रह्मसिद्धिः स्यात्, मन्त्रजपेन पुण्योदयात् स्वर्गादिसिद्धिः ऐहिकभोगसिद्धिर्वा भविष्यति, यस्तु "सर्वं कर्म" एवमभिसन्धाय मन्त्रं जपति, तस्य कर्मसिद्धिः स्यात्, यस्तु "ऐहिक-सुखमुपभुज्य अन्ते ब्रह्म लप्स्यामि" इत्यभिसन्धाय जपति, तस्य उभयसिद्धिः स्यात्। एवं "तीर्थे ब्रह्म अधितिष्ठति, तीर्थदर्शने ब्रह्मसाक्षात्कारी भविष्यति" इति भावनया यः तीर्थं याति, तस्य ब्रह्मसिद्धिः स्यात्, फलश्रुतौ तीर्थगमनस्य बहुसुखापादकत्वम् आकर्ण्य तदुद्दिश्य यस्तीर्थं याति तस्य कर्मसिद्धिः, तीर्थदर्शने ब्रह्मदर्शनफलं भविष्यति, सुखमपि भविष्यति इति सञ्चिन्त्य यः तीर्थं याति, तस्य उभयसिद्धिर्भवति। एवं "सर्व्वदेवमयो हरिः" "अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" इत्युक्त्या द्विजे देवे च यस्य, ब्रह्मादीनां यादृग्विधा भावना, तस्य तादृक् सिद्धिः ज्ञेया। "एवंविधस्य श्रुतिनेत्र-शास्त्रस्वरूपस्य खलु दर्शनं वै। निहन्त्यशेषं कलुषं जनानां षडङ्गजं धर्म्म-सुखास्पदं स्यात् ॥" इति माण्डव्योक्त्या तथा "ज्योतिर्ज्ञानञ्च यो वेद स याति परमां गतिम्" ( गतिं ब्रह्मसायुज्यम् इत्यर्थः ) इति गर्गोक्त्या च ब्रह्मस्वरूपवेदचक्षुःस्वरूप-शास्त्रविदः तथा ज्योतिःशास्त्राभिज्ञस्य दैवज्ञस्य, ब्रह्मसायुज्यलाभेन ब्रह्मस्वरूपत्वात् तत्र ब्रह्मभावनया यः उपतिष्ठते तस्य ब्रह्मसिद्धिः, दैवज्ञसेवया कुपितग्रहादिफलं ज्ञात्वा तस्य शान्तिकरणेन "ऐहिकसुखमनुभविष्यामि" इत्येव यश्चिन्तयति, तस्य कर्मसिद्धिः; त्रिविधमेव फलं भविष्यति इति सञ्चिन्त्य यस्य प्रवृत्तिः, तस्य उभयसिद्धिः इति। "निर्व्वाणं भेषजं भिषक्" इति विष्णुसहस्रनामस्तवे, भेषजस्य विष्णोः सहस्रनामान्तर्गतत्वेन विष्णु-स्वरूपत्वात्, भेषजमेव स्वयं ब्रह्म. ब्रह्मोपासनया यथा दुःखान्निवृत्तिः स्यात्, औषधे

न काष्ठे विद्यते देवो न पाषाणे न मृण्मये।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम्" ॥७९॥ इति।

राजा अवदत्,—"यदि मम प्रसन्ना जाताऽसि, तर्हि अस्य ब्राह्मणस्य मनोरथान् (थ) पूरय"। साऽब्रवीत्,—'भो राजन्! परोपकारी महाद्रुम इव स्वदेहकष्टं सहित्वा परश्रमोच्छेदं करोषि? उक्तञ्च,—

छायामन्यस्य कुर्व्वन्ति स्वयं तिष्ठन्ति चातपे।
फलन्ति हि परार्थे च सत्यमेते महाद्रुमाः ॥ ८० ॥

---

नापि तथा भवेत् इति सञ्चिन्त्य य औषधे प्रवर्त्तते, तस्य ब्रह्मसिद्धिः, "औषधसेवनेन अवश्यमेव सर्वरोगादिमुक्तः ऐहिकसुखं भोक्ष्ये" इत्यभिसन्धाय यः सेवते, तस्य कर्म्मसिद्धिः, यस्तु उक्तमुभयमेवाभिसन्धाय प्रवर्त्तते, तस्योभयसिद्धिः स्यात्। तथा "गुरुः ब्रह्मा गुरुः विष्णुः" इत्युक्त्या गुरूपासनेनैव ब्रह्मोपासना भवति, एवं सञ्चिन्त्य यः गुरुमुपतिष्ठते, तस्य गुरुसेवयैव ब्रह्मसिद्धिः; गुरुसेवाया पुण्यमस्ति तदाशिषा सुखमपि भवति, इति मनसि ज्ञात्वा यः गुरुसेवाया प्रवर्त्तते, तस्य कर्म्मसिद्धिः, उभयमेव अभिसन्धाय यः प्रवर्त्तते तस्योभयसिद्धिः] जायते, तस्य तादृशी तत्प्रकारा, सिद्धिः फलसिद्धिः, मानसनित्यसुखादिरूपा च (तथा चोक्तं तन्त्रसारे,—"मनोरथानामक्लेशं सिद्धिरुत्तमलक्षणा। मन्त्रोच्चारणे तद्वत् देवतादर्शनं तथा॥") भवति, अस्य ब्राह्मणस्य तादृशभावनाऽभावादेव न सिद्धिरिति भावः॥ ७८॥

शास्त्रविहितानुष्ठानेन दारुप्रतिमादौ अपि देवताऽऽविर्भावः स्यादेव, अन्यथा दारुप्रतिमादिपूजनस्य नैष्फल्यमाह, नेति।—काष्ठे दारुणि, देवः न विद्यते नास्ति, पाषाणे प्रस्तरे न विद्यते, मृण्मये मृत्तिकामयप्रतिमादौ च न विद्यते, भावे मानसिकभावे, हि निश्चितं, देव विद्यते, तस्मात् भावो हि भाव एव, तन्त्रशास्त्रोक्तपूर्वोक्ताऽऽचारादिविषयात्मकः, कारणं फललाभहेतुः, भवतीति शेषः॥ ७९॥

(थ) मनोरथान्—मन एव रथोऽत्र, मनसो रथ इव वा, इष्यमाणप्रापकत्वात् तान् अभिलाषान् इत्यर्थः।

महातरवः स्वयं क्लेशं सहित्वाऽपि परार्थं एव जीवन्ति, इति दर्शयितुमाह, छायामिति।—एते इमे, महाद्रुमाः वृहद्वृक्षाः, अन्यस्य अपरस्य, आश्रितजनस्येत्यर्थः, छायाम् अनातपं, कुर्व्वन्ति विदधति, स्वयञ्च आतपे रौद्रे, तिष्ठन्ति, परार्थे परोपकारार्थे,

परोपकाराय वहन्ति नद्यः परोपकाराय दुहन्ति गावः।
परोपकाराय फलन्ति वृक्षाः परोपकाराय शरीरमेतत्' ॥ ८१ ॥

एवं राजानं स्तुत्वा ब्राह्मणस्य मनोरथं पूरयति स्म। राजाऽपि स्वपुरीमगात्"।

इमां कथां कथयित्वा पुत्तलिका भोजमवदत्,—"राजन् एवंविधं धैर्य्यं विद्यते चेत्, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजराजसंवादे विप्रमनोरथपूरणं नाम द्वितीयोपाख्यानम् ] ॥ २ ॥

## अथ सर्व्वस्वदक्षिणयज्ञवर्णनं नाम तृतीयोपाख्यानम्।

पुनरपि राजा सिंहासने समुपवेष्टुं गच्छति, ततोऽन्या पुत्तलिका समवदत्,—"भो राजन्! एतत्सिंहासने तेनैव

हि फलन्ति फलोत्पादनं कुर्व्वन्ति, इति सत्यं यथार्थत एव, महाद्रुमा. महाद्रुमनाम-योग्या.. भवन्तीति शेष ॥ ८० ॥

अन्यानपि परोपकाररतान् दर्शयति. परोपकारायेति।—नद्यः सरितः, परोप-काराय परेषामुपकारार्थमेव, वहन्ति प्रवाहिताः भवन्ति, गाव. धेनवः. परोपकाराय दुहन्ति दुग्ध धारयन्ति ( प्रयोगोऽयं चिन्त्यः ), वृक्षाः द्रुमाः, परोपकाराय फलन्ति फलवन्तो भवन्ति, एतत् इदं, शरीर देहश्च, परोपकाराय परोपकारसाधनार्थ-मेव महात्मना भवतीति शेष.। "परोपकाराय सता हि जीवनम्" इति भावः। उपेन्द्रवज्रा वृत्तम् ॥ ८१ ॥

इति द्वितीयोपाख्यानम् ॥ २ ॥

अध्यासितव्यं, (द) यस्य विक्रमादित्यतुल्यमौदार्य्यमस्ति"। भोजेनोक्तं,—"भोः पुत्तलिके! कथय तस्यौदार्य्यवृत्तान्तम्"।

सा वदति,—"श्रूयतां राजन्! विक्रमार्कसदृशो राजा भूमण्डले नास्ति। यस्य चेतसि "अयं परः, अयं मदीयः" इति विकल्पो नास्ति, (ध) स उदारचेताः सकलमपि विश्वं पालयति। तथा चोक्तम्,—

अयं निजः परो वेति विकल्पो भ्रान्तचेतसाम्।
पुनस्तूदारचित्तानां वसुधैव कुटुम्बकम्॥ ८२॥

साहसे, उद्यमे, धैर्य्ये च तत्समो नास्ति, तस्मात् इन्द्रादयो देवाः अस्य साहाय्यं कुर्व्वन्ति स्म। उक्तञ्च,—

उद्यमः साहसं धैर्य्यं शक्तिर्बुद्धिः पराक्रमः।
षड़ेते यस्य तिष्ठन्ति तस्माद् देवोऽपि शङ्कते॥ ८३॥

---

(द) "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति न्यायात् "अधिशीङ्स्थासां कर्म्म" (१।४।४५ पा०) इति सूत्रेण "एतत्सिंहासने" इत्यस्य न कर्म्मसञ्ज्ञा।

(ध) विकल्प,—वितर्कः. भेदविचार इति यावत्। नास्तीति।—[ "अस्ति" इत्यत्र "धातुसम्बन्धे प्रत्ययाः" (३।४।१ पा०) इति भूतादौ लट्। एवमुत्तरत्र ]।

आत्मपरभेदरहिता एव विश्वपालनक्षमा इति दर्शयति, अयमिति।—अयम् एष जन, निज. आत्मीयः, पुनरयं परः अन्यात्मीयो वा, इति एवम्प्रकारः, विकल्प. वितर्कः, भ्रान्तचेतसा भ्रान्त मिथ्याज्ञानयुक्त चेतः चित्त येषा तादृशाना जनानामेव भवति। पुनस्तु किन्तु, उदारचरिताना मनस्विना जनाना, वसुधा समग्रपृथिव्येव, (लक्षणया पृथिवीस्थसर्व्वलोका एवेत्यर्थ.) कुटुम्बकम् आत्मीयमध्ये गणनीयेत्यर्थः, (भावप्रधानोऽय निर्द्देश)। उदारचरितैस्तु सर्व एव वसुधावासिन आत्मीया मन्यन्ते इति तात्पर्य्यम्। इत. ८४ श्लोक यावत् पथ्यावक्त्र वृत्तम्॥ ८२॥

उद्यमादिमतां धीराणा देवाः सहाया. जायन्ते इति दर्शयति, उद्यम इति।—उद्यम. चेष्टा, साहस निर्भीकता, धैर्य्यं सहिष्णुता, शक्तिः सामर्थ्यं, बुद्धि. ज्ञानं, प्रतिभेति यावत्, पराक्रमः बलञ्च, एते षट् गुणाः यस्य तिष्ठन्ति वर्त्तन्ते, देव. इन्द्रादिदेवगणोऽपि, तस्मात् शङ्कते तत. भयं करोतीत्यर्थः॥ ८३॥

राजन् ! यस्तु अर्थिनां मनोरथं पूरयति, तस्येप्सितं देवः सम्पादयति । यच्चोक्तम्,—

कृते विनिश्चये पुंसां विष्णुः पूरयतीप्सितम् !
यदि स्यात् दार्ढ्यसम्पत्तिः सत्यं सत्यं हि मानव ! ॥ ८४ ॥

अपि च ।—उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयञ्च
लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥ ८५ ॥

एवं सकलगुणाधिवासः (न) स विक्रमो राजा सर्व्वसम्पदा परिपूर्णः एकदा स्वमनसि अचिन्तयत्,—'अहो ! असारोऽयं संसारः, कदा कस्य किं भविष्यतीति न ज्ञायते; यच्च उपार्जितं वित्तं, तदपि दानभोगैर्विना सफलं न भवति ।

---

दृढचेतसाम् ईप्सितं स्वयं विष्णुरेव सफलयति इति दर्शयितुमाह, कृते इति ।—हे मानव ! यदि चेत्, दार्ढ्यसम्पत्तिः दृढतासम्पत्, स्यात् विद्येत, तर्हि विनिश्चये स्थिरज्ञाने, कृते सति, विष्णुः ईश्वरः, पुंसां जनानाम्, ईप्सितम् अभिलषितं, सदभिप्रायमिति यावत्, पूरयति सम्पादयति, इति सत्य सत्यमतिसत्यमित्यर्थः, हि निश्चये । सत्कार्य्यसम्पादने दृढचेतसाम् ईश्वर एव सहाय इत्यर्थः ॥ ८४ ॥

उत्साहादिमता लक्ष्मीप्रियत्व प्रदर्शयति, उत्साहेत्यादिना ।—उत्साहसम्पन्नम् उद्यमशीलम्, अदीर्घसूत्रम् अचिरक्रिय, ("दीर्घसूत्रश्चिरक्रियः" इत्यमरः) क्रियाविधिज्ञं कार्य्यस्य विधानज्ञ, कार्य्यानुष्ठानदक्षमित्यर्थः, व्यसनेषु कामजक्रोधजाद्यष्टादशविधमृगयादिदोषेषु इति यावत्, असक्तम् अननुरागिणं, शूरं बलवन्तं, कृतज्ञम् उपकारकर्त्तारं, दृढनिश्चय स्थिरप्रतिज्ञञ्च जनं, लक्ष्मीः सम्पदधिष्ठात्री देवी, स्वयम् आत्मनैव, वासहेतोः निजवसतिनिमित्त, [ हेतुशब्दयोगात् "षष्ठी हेतुप्रयोगे" (२।३।२६ पा० ) इति सूत्रेण षष्ठी ] वाञ्छति अभिलषति । उक्तगुणसम्पन्नो जनः स्वत एव लक्ष्मीवान् भवतीत्यर्थः । उपजातिः वृत्तम् ॥ ८५ ॥

(न) सकलेति ।—अधिवसन्ति एतम् [ आधारे घञ् ] इति अधिवासः आश्रयः, सकलाना गुणानाम् अधिवासः सर्वगुणाश्रय इत्यर्थः ।

अतो वित्तस्य सत्पात्रे दानमेकं (प) फलम्; अन्यथा नाशमेव प्राप्नोति। उक्तञ्च,—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥ ८६॥

तथा चोक्तम्,—

उपार्ज्जितानां वित्तानां त्याग एव हि रक्षणम्।
तटाकोदरसंस्थानां परीवाह इवाम्भसाम्॥ ८७॥

---

(प) एकं—मुख्यम्।

दानादिकं विना अर्थस्य निरर्थकतां प्रदर्शयति, दानमिति।—दानं सत्पात्रे अर्पणं, भोगः उपभोगः, नाशः चौरादिभिरपहरणम्, एवं तिस्रः त्रिविधाः, गतयः परिणामाः, वित्तस्य धनस्य, भवन्ति; यो जनः, न ददाति दीनेभ्यो दानं न करोति, न भुङ्क्ते नोपभोगं करोति, तस्य जनस्य, तृतीया नाशरूपा इत्यर्थः, गतिः भवति, धनानामिति शेषः। आर्य्या वृत्तम्॥ ८६॥

सञ्चितधनानां दानमेव ऐहिकामुष्मिकफलस्थितिरूपरक्षणात्मकतया सुधीभिरवश्यं करणीयमित्युपमया समर्थयते, उपार्ज्जितानामिति।—तटाकोदरसंस्थानां सरोवरमध्यस्थितानाम्, (तडागोदरेति पाठः) अम्भसां जलानां, परीवाहः जलनिःसारणमिव इत्यर्थः, [परिपूर्ववहधातोः घञि रूपम्, अत्र "उपसर्गस्य घञ्यमनुष्ये बहुलम्" (६।३।१२२ पा०) इति उपसर्गस्य दीर्घता] उपार्ज्जितानां वित्तानां धनानां, त्यागः एव दानमेव ("त्यागो विहापितं दानम्" इत्यमरः) "दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः" इति याज्ञवल्क्योक्तपात्रविनियोग एव इत्यर्थः, "सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति। सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते॥" इति विष्णुधर्म्मोत्तरवचनेन अदातुः नरकाप्तिप्रतिपादनात् चेदेव नरकगमनं तदा रक्षितमपि धनं न रक्षितमिति भावः, हि निश्चये, रक्षणं रक्षणोपायः, दानादन्यत् रक्षणं नास्तीत्यर्थः, धनानां विनियोगेऽपि दानस्य सहस्रानन्तादिफलजनकतया तत्फलानाञ्च स्थितेर्दानमेव तेषां सुष्ठुरक्षणोपाय इति निष्कर्षः। तथा च दानस्य सहस्रादिफलजनकत्वं "सहस्रगुणितं दानं भवेद्दत्तं युगादिषु" इति वृद्धमनुवचनेन तथा "गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम्। सहस्रगुणमाहूय याचिते तु तदर्द्धकम्॥" इति स्मृतिवचनेन प्रतिपादितम्। एतेन एतदुक्तं भवति,—यथा हि पुष्करिण्यां रक्षितव्यजलात् अधिकं जलं निःसार्य्य रोधोभङ्गादिकं निवारणीयं, तथा

अपि च,—

दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्त्तव्यः।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये' ॥ ८८ ॥

इत्येवं विचार्य्य सर्व्वस्वदक्षिणं (फ) यज्ञं कर्त्तुम् उपक्रान्तवान्।

ततः शिल्पिभिरतीव मनोहरो मण्डपः (ब) कारितः। सर्वाऽपि यज्ञसामग्री समाहृता; देव-मुनि-गन्धर्व्व-यक्ष-सिद्धादयश्च समाहूताः। तस्मिन्नवसरे समुद्राह्वानार्थं कश्चित् ब्राह्मणः समुद्रतीरे प्रेषितः। सोऽपि समुद्रतीरं गत्वा आसनादि-षोड़शोपचारं (भ) विधायाब्रवीत्,—"भोः समुद्र! विक्रमार्को

---

सञ्चेतव्यधनात् अधिकं धनं पात्रेभ्यो दत्त्वा अनन्तपुण्योपार्ज्जनं चौरादिभ्यः स्वीय-धनजीवनरक्षणञ्च करणीयं, तथा कार्पण्यादिकञ्च दुर्नाम धनोन्मादनञ्च परिहरणीयम् इति। (तडागस्य जलाधिक्ये यथा कर्त्तव्य, तद्विवेचितमस्माभिः अस्मत्कृतायाम् उत्तररामचरितस्य "पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया" इति श्लोकस्य अभिनव-व्याख्यायाम्)। पथ्यावक्त्रं वृत्तम् ॥ ८७ ॥

दानभोगादिकं विना धनसञ्चयस्य दोषं दर्शयति, दातव्यमिति।—धनविषये अर्थसम्बन्धे, दातव्यं दानं कर्त्तव्यं, भोक्तव्य भोगः कर्त्तव्यः, सञ्चयः दानभोगादिकम् अकृत्वा सङ्ग्रहः, न कर्त्तव्यः; पश्य समालोकय, इह संसारे, मधुकरीणाम् (अत्र स्त्रीत्वमविवक्षितं, सञ्चये हि पुरुषात् स्त्रीणामाग्रहातिशय्यदर्शनात् इति वा) मधु-मक्षिकाणां, केवलसञ्चयशीलानामिति भावः, सञ्चित सङ्गृहीतम्, अर्थं क्षौद्रपटलम् इत्याशयः, [एतेन सञ्चितार्थेन सह आश्रयविनाशोऽपि ध्वन्यते] अन्ये जनाः, हरन्ति आत्मसात् कुर्व्वन्ति, अतिसञ्चयशीलो जनः समूलं नश्यतीति निर्गलितार्थः। आर्य्या वृत्तम् ॥ ८८ ॥

(फ) सर्वस्वेति।—सर्वस्वं सर्वधनं दक्षिणा यत्र तत् तादृशं, विश्वजिदाख्यमित्यर्थः।

(ब) मण्डपः,—यज्ञशालाऽभिधो वृहज्जनाश्रयः।

(भ) षोडशोपचारं—षोडशसङ्ख्याता उपचाराः यस्मिन् तत्, षोडशोपचाराः यथा,—"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमस्नान-वसनाऽऽभरणानि च ॥ गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ॥" इति।

राजा यज्ञं करोति, तेन प्रेषितोऽहं त्वामाह्वातुं (म) समागतः" इति जलमध्ये पुष्पाञ्जलिं दत्त्वा क्षणं स्थितः। कोऽपि तस्य प्रत्युत्तरं न ददौ। तत उज्जयिनीं यावत् प्रत्यागच्छति, तावत् देदीप्यमानशरीरः (य) समुद्रो ब्राह्मणरूपी सन् तमागत्य अवदत्,—"भो ब्राह्मण! विक्रमेण अस्मान् आह्वातुं प्रेषितस्त्वं, तर्हि तेन या अस्माकं सम्भावना (र) कृता, सा प्राप्तैव। एतदेव सुहृदो लक्षणं, यत् समये दानमानादि क्रियते। उक्तञ्च,—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥ ८९॥

दूरस्थितानां मैत्री नश्यति, समीपस्थानां वर्द्धते इति न वाच्यम्; अत्र स्नेह एव प्रमाणम् (ल)। तथा चोक्तम्,—

दूरस्थोऽपि समीपस्थो यो वै मनसि वर्त्तते।
यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः॥ ९०॥

---

(म) आह्वातुम्—आकारितु, निमन्त्रयितुमित्यर्थः, ("हूतिराकारणाह्वानम्" इत्यमर)।

(य) देदीप्यमानशरीरः,—अत्यर्थभासुरदेहः, तेजःपुञ्जमयवपुरित्यर्थः [दीप-धातोः "एकाचो हलादेः" (३।१।२२ पा०) इति भृशार्थे यङ्प्रत्यये "सन्यङोः" (६।१।९ पा०) इति धातोर्द्वित्वं, ततः अभ्यासकार्य्यं, ततः "लटः शतृशानचौ" (३।२।१२४ पा०) इति शानच्, तादृशं शरीरं यस्य सः]।

(र) सम्भावना—सम्मानना, सादरार्हणा इति यावत्।

सुहृल्लक्षणमाह. ददातीति।—ददाति किमपि प्रीतिकरं वस्तु मित्राय प्रयच्छति, प्रतिगृह्णाति तथा मित्रात् तादृशं वस्तु आदत्ते, गुह्यं गोपनीयवाक्यम्, आख्याति कथयति, पृच्छति जिज्ञासते. भुङ्क्ते मित्रगृहे भोजनं करोति, भोजयते मि॰ स्वगृहे भोजयति च, एवं षड्विधं दान-प्रतिग्रह-गुह्यभाषण-प्रश्न-भोजन भोज्यदानात्मकमिति भावः, प्रीतिलक्षणं प्रणयचिह्नं भवति। अत्र परश्लोके च पथ्यावक्त्रं वृत्तम्॥ ८९॥

(ल) प्रमाणम्—कारणम्।

स्नेह एव मैत्रीलक्षणं, न सामीप्यादिकमिति दर्शयितुमाह दूरस्थ इति।—यो वै यो हि, मनसि चित्ते, वर्त्तते, स दूरस्थोऽपि दूरदेशस्थितोऽपि, समीपस्थः निकटवर्त्ती,

उक्तञ्च,—गिरौ कलापो गगने पयोदः
लक्षान्तरेऽर्कश्च जले च पद्मम्।
इन्दुर्द्विलक्षे कुमुदस्य बन्धुः
यो यस्य मित्रं न हि तस्य दूरम्॥ ८१॥

तस्मात् सर्व्वथा गन्तव्यं मे, किन्तु ममात्र किञ्चित् प्रयोजनमस्ति। तस्मै राज्ञे व्ययार्थमेतद्रत्नचतुष्टयं ददामि। एतेषां माहात्म्यम्,—एकं रत्नं यद्वस्तु स्मर्य्यते, तद्ददाति; द्वितीयरत्नेन भोजनादिकम् अमृततुल्यमुत्पद्यते; तृतीयरत्नात् चतुरङ्गबलं (व) भवति; चतुर्थाद्रत्नात् दिव्याभरणानि जायन्ते। तदेतानि रत्नानि गृहीत्वा राज्ञो हस्ते प्रयच्छ"।

ततो ब्राह्मणस्तानि रत्नानि गृहीत्वा उज्जयिनीं यावत्

---

भवति इति शेषः। यो वै यो हि. चित्तेन मनसा [अत्र तृतीया विवक्षणीया] दूरस्थ. अर्थात् चित्तवहिर्भूतः, स समीपस्थोऽपि निकटवर्त्ती सन्नपि, दूरत. दूरस्थ एव। चित्तयोग एव सामीप्यविधायक इति भाव.॥ ८०॥

अमुमेवार्थं दृष्टान्तद्वारेण समर्थयमान आह, गिराविति।—कलापी मयूरः गिरौ पर्वते, तिष्ठतीति शेषः, गगने आकाशे च, पयोद मेघः, विद्यते इति शेष, तथा लक्षान्तरे लक्षयोजनदूरे, अन्तरीक्षे इति शेषः, अर्क. सूर्य्यः, तिष्ठतीति शेष', जले सलिले च, पद्म कमल, विद्यते इति शेषः, इन्दुः चन्द्रः, द्विलक्षे लक्षद्वययोजनान्तरे इति यावत्, ("भूम्यो योजनलक्षेऽर्कः पश्येल्लक्षद्वयाद्विधुम्" इति मुग्धबोधैकवाक्यत्वादिति भाव'। अत्र हि लक्षयोजनान्तरे सूर्य्यावस्थानं द्विलक्षयोजनान्तरे च चन्द्रावस्थान यदुक्त तन्न समीचीन, ज्योतिषसिद्धान्तविरोधात्, ग्रहावस्थानविषये सूर्य्यसिद्धान्त-वचन यथा—"मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधःस्था. सिद्धविद्या-धरा घना.॥" इति, सिद्धान्तशिरोमणौ यथा—"भूमेः पिण्डः शशाङ्क-ज्ञ-कवि-रवि-कुजेज्यार्किनक्षत्रकक्षाः" इति।) स्थितोऽपीति अध्याहार्य्यं, कुमुदस्य कैरवस्य, बन्धुः मित्र, तद्विकाशकत्वादिति भावः, हि तथाहि, यो जनः, यस्य जनस्य, मित्रं सुहृत्, स तस्य दूर न, भवतीति शेषः। उपजाति' वृत्तम्॥ ८१॥

(व) चतुरङ्गबलं—हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुतसैन्यम्।

आगतः, तावत् यज्ञसमाप्तिर्जाता। राजा अवभृथस्नानं (अ) कृत्वा सर्वान् अर्थिजनान् परिपूर्णमनोरथान् अकरोत्। ब्राह्मणो राजानं दृष्ट्वा रत्नानि अर्पयित्वा, प्रत्येकं तेषां गुणमकथयत्। ततो राजा अवदत्,—"भो ब्राह्मण! भवान् यज्ञदक्षिणाकालं व्यतिक्रम्य समागतः, मया सर्वोऽपि ब्राह्मणसमूहो दक्षिणया तोषितः, तर्हि त्वम् एतेषां चतुर्णां मध्ये यत् तुभ्यं रोचते, तत् गृहाण"। ब्राह्मणेनोक्तं,—"गृहं गत्वा गृहिणीं, पुत्रं, स्नुषाञ्च (ब) पृष्ट्वा सर्व्वेभ्यो यद्रोचते, तत् ग्रहीष्यामि"। राज्ञोक्तं,—"तथा कुरु"। ब्राह्मणोऽपि स्वगृहमागत्य सर्व्वं वृत्तान्तं तेषामग्रे अकथयत्। तच्छ्रुत्वा पुत्रेणोक्तं,—"यद्रत्नं चतुरङ्गबलं ददाति, तत् ग्रहीष्यामः; यतः सुखेन राज्यं कर्त्तुम् अर्हिष्यामः"। पित्रोक्तं—"बुद्धिमता राज्यं न प्रार्थनीयम्। उक्तञ्च,—

रामस्य व्रजनं बलेर्नियमनं, पाण्डोः सुतानां वनं
वृष्णीनां निधनं, नलस्य नृपतेः राज्यात् परिभ्रंशनम्।
सौदासं तदवस्थमर्ज्जुनवधं, सञ्चिन्त्य लङ्केश्वरं,
दृष्ट्वा राज्यकृते विड़म्बनगतं धीमान् न तद्वाञ्छयेत् ॥८२॥

---

(अ) अवभृथस्नानं—यज्ञान्तस्नानम्। ("दीक्षान्तोऽवभृथो यज्ञे" इत्यमरः)।
(ब) स्नुषा—पुत्रवधूम्।

दृष्टान्तप्राचुर्य्येण राज्यकृतमनर्थजातमुपवर्णयन् राज्यस्य बुद्धिमदकाम्यत्वरूपं स्वोक्तमेव समर्थयमान आह, रामस्येति।—रामस्य रघुनन्दनस्य, व्रजन वने निर्वासन, बलेः बलिराजस्य. नियमन बन्धन, पाण्डोः सुताना पाण्डुपुत्राणा, वनं वनवासं, वृष्णीनां यादवानां, निधनं विनाश, नलस्य नृपतेः नलराजस्य, राज्यात् परिभ्रंशनं राज्यच्युति, सौदासं तन्नामकं सूर्य्यवंशीयं राजान, तदवस्थ तादृशावस्थाप्राप्तं, राक्षसयोनित्वमापन्नमित्यर्थः. (सौदासनामा हि कश्चित् सूर्य्यवंशीय. क्षितिपतिर्मृगयाश्रान्तो वनात् प्रतिनिवर्त्तमानः पथोऽर्थं वाशिष्ठेन शक्तिणा कलहायमानः दुर्द्दमराज्यमदेनोन्मत्तः क्रुध्यन् पन्थानममुञ्चन्त तं मोक्षात् कशया प्रहरन् क्रुद्धेन तेनाभिशप्तः राक्षसयोनिमवाप्य

पुनः पिता वदति,—"यस्माद्धनं लभ्यते, तत् गृहाण, धनेन सर्व्वमपि लभ्यते। उक्तञ्च,—

न तदस्ति जगत्यस्मिन् यद्धनेन न लभ्यते।
निश्चित्य मतिमांस्तस्मादर्थमेकं प्रसाधयेत्" ॥ ९३ ॥

भार्य्ययोक्तं,—"यदन्नं षड्रसान् सूते, (स) तत् गृह्यताम्, सर्वेषां प्राणिनामन्नेनैव प्राणधारणं भवति। उक्तञ्च,—

अन्नं विधात्रा विहितं मर्त्यानां जीवधारणम्।
तस्मादन्नात् परं किञ्चित् प्रार्थयेन्न कदाचन" ॥ ९४ ॥

---

दीर्घकालं क्लेशमनुबभूवेति पौराणिकी कथा) अर्ज्जुनवधं कार्त्तवीर्य्यवधञ्च, सञ्चिन्त्य विविच्य, तथा राज्यकृते राज्यनिमित्तं, (परस्त्रीहरणादिव्यापारो हि दुर्दमराजत्वादिमदनिमित्तक एव भवति इति बोध्यम्) विडम्बनगत सीताहरणादि-कुप्रवृत्त्या पश्चात् रामचन्द्रकृतविविधविडम्बनाग्रस्त, लङ्केश्वरं रावणम्, [अत्र लोकेश्वर-मिति तन्त्रान्तरीयपाठे तु,—विडम्बनगतं वामनरूपविडम्बित, लोकेश्वर जगदीश्वर, स्वयं भगवन्तमपि राज्यार्थं विडम्बनाग्रस्तमित्यर्थः] दृष्ट्वा विलोक्य, धीमान् बुद्धिमान् जनः, तत् राज्यं, न वाञ्छयेत् नाभिलषेत् [वाञ्छधातोर्भ्वादिगणीयतया "वाञ्छेत्" इत्यस्यैव साधुत्वेऽपि वाञ्छां कुर्य्यादित्यर्थे नामधातुनिष्पाद्यतां समर्थ्य प्रयोगोऽयं कथञ्चित् समाधेयः। अत्र तुष्यतु दुर्ज्जनन्यायेन तु "तद्वाञ्छयेत्" इत्यत्र "तद्वाञ्छति" इत्यपि पाठः कल्पयितु शक्यते इति बोध्यम]। शार्दूलविक्रीडितं वृत्तम् ॥ ९२ ॥

धनमेवैकं सर्वार्थसाधनम् इति दर्शयितुमाह, न इति।—यत् वस्तु, धनेन न लभ्यते न प्राप्यते, तत् तादृशं वस्तु, अस्मिन् जगति नास्ति, सर्व्वमेव धनेन प्राप्यते इति भावः; इति निश्चित्य एवं स्थिरीकृत्य, मतिमान् बुद्धिमान् जनः, तस्मात् स्थिरीकरणात् एकम् अर्थं धनमेव, प्रसाधयेत् उपार्ज्जयेत्। इतः ९९ श्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तं ज्ञेयम् ॥ ९३ ॥

(स) सूते—उत्पादयति जनयति इत्यर्थः।

अन्नसंस्थानमेव धनाद्यर्ज्जनफलं, यो यत्किञ्चित् करोति तत्सर्वमन्नार्थमेव, अतः अन्नमेव प्रार्थनीयं, नान्यत् किञ्चित् इति दर्शयितुमाह, अन्नमिति।—विधात्रा ईश्वरेण, मर्त्यानां मनुष्याणां, जीवधारणं प्राणधारणोपायभूतम्, अन्नं भोज्यवस्तु, विहितं निर्म्मितं, तस्मात् तत कारणात्, अन्नात् परं भोज्यवस्तुनोऽन्यत्, अन्नभिन्न-मित्यर्थः, किञ्चित् किमपि द्रव्यं, कदाचन कदाऽपि, न प्रार्थयेत् नाभिलषेत् ॥ ९४ ॥

सुषयोक्तं,—"यद्रत्नं रत्नाभरणादिकं सूते, तत् ग्राह्यम्। उक्तञ्च,—

भूषयेत् भूषणै रम्यैर्यथाविभवमादरात्।
शुचिसौभाग्यवृद्ध्यर्थमायुर्लक्ष्म्यभिवृद्धये॥ ८५॥
सुहृत्सु शुभदं नित्यं वास एव विभूषणम्।
रत्नैश्च देवतातुष्टिर्भूषणस्यापि धारणात्"॥ ८६॥

"एवं चतुर्णां परस्परं विवादो लग्नः (ह)। ततो ब्राह्मणो राजसमीपमागत्य चतुर्णां विवादवृत्तान्तमकथयत्। राजाऽपि तच्छ्रुत्वा तस्मै ब्राह्मणाय चत्वार्य्यपि रत्नानि ददौ"।:

इति कथां कथयित्वा पुत्तलिका राजानमवदत्,—"भो राजन्! औदार्य्यं नाम सहजो (क) गुणः, न तु औपाधिकः (ख)। उक्तञ्च,—

चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेषु च।
यथेक्षुदण्डे माधुर्य्यम् औदार्य्यं सहजं तथा॥ ८७॥

---

रत्न-भूषणधारणस्य गुणवत्ता प्रकटयति, भूषयेदित्यादिना श्लोकद्वयेन।—शुचि-सौभाग्यवृद्ध्यर्थं शुचित्वस्य सौभाग्यस्य च वृद्धये, तथा आयुर्लक्ष्म्यभिवृद्धये आयुषो जीवन-कालस्य, लक्ष्म्याः सम्पदश्च, वृद्धये प्राचुर्य्याय, यथाविभवं विभवानुसारेण, आदरात् आदरपूर्वकं, रम्यैः रमणीयैः, भूषणैः अलङ्कारैः, भूषयेत् आत्मान भूषित कुर्य्यात्॥८५॥

सुहृत्सु इति।—सुहृत्सु मित्रेषु. वास एव वस्त्रमेव, नित्य सर्वदा, शुभद मङ्गल-दायकं, विभूषणम् अलङ्कारः, रत्नैः रत्नधारणेन, दैवतातुष्टिः देवताया. सन्तोषो भवति. भूषणस्यापि धारणात् देवतुष्टिर्भवति॥ ८६॥

(ह) लग्नः,—जातः।

(क) सहज.,—स्वाभाविकः।

(ख) औपाधिकः,—उपाधिवशादारोपितः, कृत्रिम इत्यर्थः।

चम्पकादिषु गन्धादीना सहजत्वप्रदर्शनमुखेन औदार्य्यस्यापि साहजिकत्वं प्रति-पादयति, चम्पकेषु इति।—यथा चम्पकेषु गन्धः सौगन्ध्य, सहजः स्वाभाविकः, मुक्ता-फलेषु कान्ति. दीप्तिः, सहजा स्वाभाविकी, इक्षुदण्डे च माधुर्य्यं मिष्टता, यथा सहजं

त्वयि एवंविधमौदार्य्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश"। तच्छ्रुत्वा राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरोभोजराजसंवादे सर्वस्वदक्षिणयज्ञ-वर्णनं नाम तृतीयोपाख्यानम् ] ॥ ३ ॥

---

## अथ कृतघ्नतापरीक्षणं नाम चतुर्थोपाख्यानम्।

पुनः सिंहासनमारुरुक्षुं (ग) भूपतिं प्रनिरुध्य, तेन च पृष्टा अन्या पुत्तलिका वदति स्म,—"भो राजन्! श्रूयताम्;— विक्रमादित्ये राज्यं कुर्व्वति, एकदा ब्राह्मणः कश्चित् सकल-विद्याविचक्षणः, समस्तगुणगणालङ्कृतोऽपि अपुत्रः समभवत्। कदाचित् भार्य्यया भणितं,—"भोः प्राणेश्वर! पुत्रं विना गृह-स्थस्य गतिर्नास्तीति स्मृतिविदो वदन्ति। तथाहि,—

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च।
तस्मात् पुत्रमुखं दृष्ट्वा पश्चाद्भवति तापसः॥ ९८॥

---

स्वाभाविक, तथा तद्वत् औदार्य्यम् उदारता, सहज स्वाभाविकमेव, विदुषां गुणः भवति इति शेष.॥ ९७॥

इति तृतीयोपाख्यानम्॥ ३॥

---

(ग) आरुरुक्षुम्—आरोढुमिच्छन्तम्।

अपुत्रस्य स्वर्गाद्यप्राप्तौ स्मृतिप्रमाणमाह, अपुत्रस्येति।—अपुत्रस्य पुत्रहीनस्य जनस्य, गति, सद्गति, मोक्षलाभ इत्यर्थः, नास्ति न भवति, स्वर्ग, स्वर्गलाभश्च, नैव च नैव च कथमपि नेत्यर्थ., [ अत्यन्तासम्भवत्वद्योतनाय द्विरुक्तिः ] सम्भवतीति शेषः; तस्मात् तत कारणात्, पुत्रमुख दृष्ट्वा विलोक्य, पश्चात् तदनन्तर, तापस, तपस्वी, संसारं परित्यज्य वनवासीत्यर्थः, भवति, लोक इति शेषः॥ ९८॥

शर्वरीदीपकश्चन्द्रः प्रभाते दीपको रविः।
त्रैलोक्यदीपको धर्म्मः सत्पुत्रः कुलदीपकः॥ ९९॥

नागो भाति मदेन, कं जलरुहैः, पूर्णेन्दुना शर्व्वरी,
शीलेन प्रमदा, जवेन तुरगो, नित्योत्सवैर्मन्दिरम्।
वाणी व्याकरणेन, हंसमिथुनैर्नद्यः, सभा पण्डितैः,
सत्पुत्रेण कुलं, नृपेण वसुधा, लोकत्रयं विष्णुना"॥ १००॥

ब्राह्मणेनोक्तं—"भोः प्रिये। सत्यमुक्तं त्वया, परं परोद्यमेन द्रव्यं (घ) लब्धुं शक्यते, गुरुशुश्रूषया विद्याऽपि लभ्यते, यशः सन्ततिश्च परमेश्वराराधनं विना न सिध्यति। उक्तञ्च,—

निरन्तरा सुखापेक्षा हृदये यदि विद्यते।
ज्ञात्वा भावं दृढ़तरं भवानीवल्लभं भजेत्॥ १०१॥

---

सत्पुत्रस्य कुलोज्ज्वलकरत्वं सदृष्टान्तं प्रदर्शयति, शर्व्वरीत्यादिना श्लोकद्वयेन।—चन्द्रः शशी, शर्वरीदीपकः शर्वरीं रात्रिं दीपयति उज्ज्वलीकरोति यः तादृशः, प्रभाते दिने सञ्जाते इत्यर्थः, रविः सूर्य्यः, दीपकः आलोकप्रदः, धर्म्मः विहितकर्म्माद्यनुष्ठानं, त्रैलोक्यस्य त्रिभुवनस्य, दीपकः शोभावर्द्धक इत्यर्थः, एवं सत्पुत्रः गुणवान् पुत्रः, कुलदीपकः कुलस्य वंशस्य दीपकः शोभाकरः, भवतीति शेषः॥ ९९॥

नाग इति।—नागः हस्ती, मदेन मदजलक्षरणेन, भाति शोभते, कं जलं, जलरुहैः पद्मैः भाति, शर्व्वरी रात्रिः, पूर्णेन्दुना पूर्णचन्द्रेण, भाति, प्रमदा नारी, शीलेन सत्स्वभावेन, भाति, तुरगः अश्वः, जवेन वेगेन, भाति; मन्दिरं गृहं, नित्योत्सवैः नित्यं सततम् उत्सवैः नृत्यगीताद्युत्सवैः, भाति, वाणी वाक्यं, व्याकरणेन व्याकरणोक्तनियमयोगेन, भाति, नद्यः सरितः, हंसमिथुनैः हंसदम्पतिसञ्चरणैः, भान्ति, सभा परिषत्, जनसमागमस्थानमित्यर्थः, पण्डितैः विद्वद्भिः, भाति, कुलं वंशः, सत्पुत्रेण गुणवता पुत्रेण, भाति, वसुधा पृथ्वी, नृपेण राज्ञा, सुपालकेनेत्यर्थः, भाति, लोकत्रयं त्रिभुवनं, विष्णुना नारायणेन, भगवज्ज्योतिःप्रकाशेनेत्यर्थः, भाति राजते। शार्दूलविक्रीडितं वृत्तम्॥ १००॥

(घ) परोद्यमेन—अत्युत्तमप्रयत्नेन। द्रव्यं धनम्।

भगवदाराधनमन्तरा यश-आदिकं न लब्धुं शक्यते इति यदाह, तत्र प्रमाणं

भार्य्ययोक्तं—"भवान् सर्व्वज्ञः, अतः परमेश्वरप्रसादाय किमपि व्रतादिकमनुष्ठेयम्"। तेनोक्तं,—"मयाऽप्यङ्गीकृतमेव त्वद्वचनम्। कुतः?—

युक्तियुक्तमुपादेयं वचनं बालकादपि।
विदुषाऽपि सदा ग्राह्यं वृद्धादपि न दुर्वचः" ॥ १०२ ॥

इत्युक्त्वा ब्राह्मणः परमेश्वरप्रीत्यर्थं रुद्रानुष्ठानं (ङ) कृतवान्।

ततः एकदा रात्रौ तं ब्राह्मणं स्वप्ने जटामुकुटधारी वृषभवाहन. भूतभावनः (च) भवानीपतिः प्रत्यक्षीभूय उवाच,—"भो ब्राह्मण! त्वं प्रदोषव्रतम् (छ) आचर, तेन व्रताचरणेन तव पुत्रो भविष्यति"। ततः प्रभाते ब्राह्मणेन वृद्धानां पुरतः स्वस्वप्नवृत्तान्तः कथितः। तैरुक्तं,—"भो ब्राह्मण! यथार्थोऽयं स्वप्नः। उक्तञ्च स्वप्नाध्याये,—

---

दर्शयति, निरन्तरेति।—यदि चेत्, हृदये मनसि, निरन्तरा निरवच्छिन्ना सुखापेक्षा सुखभोगवासना, विद्यते वर्त्तते, तर्हि दृढतर स्थिरतरं, भावं भक्तिं, कृत्वा विधाय, भवानीवल्लभं शिवं, भजेत् पूजयेत्। भक्त्या शिवोपासना विना कस्यापि ऐहिकमामुष्मिक वा सुख नैव सम्भवतीति भावः। इतः १०३ सङ्ख्यकश्लोकपर्य्यन्तं प्रतिश्लोकं पथ्यावक्त्रं वृत्तम् ॥ १०१ ॥

तद्वचनस्वीकारे हेतु प्रदर्शयति. युक्तियुक्तमिति।—विदुषा पण्डितेनापि, युक्तियुक्त समुचितं. वचन वाक्य. बालकादपि शिशुजनात् अनभिज्ञादपीत्यर्थः, उपादेयं ग्राह्यम्, वृद्धात् वृद्धजनात् अभिज्ञादपीत्यर्थः, दुर्वच अयुक्तवाक्य, न ग्राह्यं न ग्रहणीयम्। उचितवाक्यं सर्वस्मादेव ग्राह्यम्, अनुचितन्तु कस्मादपि न ग्राह्यमिति समुदितार्थः ॥ १०२ ॥

(ङ) रुद्रेति।—रुद्रस्य शङ्करस्य, अनुष्ठानं व्रताचरणम्।

(च) भूतभावनः,—सृष्टिकर्त्ता।

(छ) प्रदोषव्रतं—प्रदोषे रजनीमुखे, रात्रेः प्रथमे यामे इत्यर्थः, ("प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते" इत्युक्तेः) अनुष्ठेयं यद् व्रतं शिवाऽऽराधनरूप, तत्। प्रदोषव्रतलक्षणं यथा हेमाद्रौ—"त्रयोदश्यां तथा रात्रौ सोपहार त्रिलोचनम्। दृष्ट्वेशं प्रथमे यामे मुच्यते सर्व्वपातकैः ॥" इति।

देवो द्विजो गुरुर्गावः पितरो लिङ्गिनो नृपः।
यद्वदन्ति वचः स्वप्ने तत् तथैव विनिर्द्दिशेत्॥ १०३॥

अस्मिन् व्रतेऽनुष्ठिते तव पुत्रो भविष्यति" इति तेषां वचनं श्रुत्वा ब्राह्मणो मार्गशीर्ष-(ज)-शुक्लत्रयोदशीतिथौ शनिवारे कल्पोक्तविधिपूर्व्वकं (झ) प्रदोषव्रतमनुष्ठितवान्। तेन व्रताचरणेन परमेश्वरः प्रसन्नो भूत्वा पुत्रमस्मै प्रायच्छत्।

तदनन्तरं पुत्रे जाते, तस्य पुत्रस्य ब्राह्मणो जातकर्म्म विधाय, (ञ) द्वादशदिवसे तस्य "देवदत्तः" इति नामकरणं कृत्वा, (ट) यथाकाले अन्नप्राशनाद्युपनयनान्तानि कर्म्माणि अकार्षीत्। ततः उपनीतं वेदशास्त्रादिकं शिक्षयित्वा, षोड़शे वर्षे गोदानानन्तरं विवाहं कारयित्वा, (ठ) स्वयं तीर्थयात्रां

---

परमेश्वरादिष्टस्य स्वप्नव्यापारस्य याथार्थ्यं प्रतिपादयितुं स्वप्नाध्यायोक्तप्रमाणमाह, देव इति।—देवः देवता, द्विजः ब्राह्मणः, गुरुः मन्त्रदाता, गावः धेनवः, पितरः पितृपुरुषाः, लिङ्गिनः ब्रह्मचार्य्यादिचिह्नधारिणः पुरुषाः, तथा नृपः राजा, एते स्वप्ने स्वप्नावस्थायां, यत् वचः वदन्ति कथयन्ति, तत् वाक्यं, तथैव यथार्थमेव, विनिर्द्दिशेत् अवधारयेत्, तत् सत्यमेव भवतीत्यर्थः॥ १०३॥

(ज) मार्गशीर्षः,—अग्रहायणः।

(झ) कल्पोक्तविधिपूर्व्वकं—कर्म्मपद्धतिविधानपुरःसरम्।

(ञ) जातकर्म—पुत्रजन्मकालिकाभ्युदयिकसंस्कारविशेषम्। विधाय—कृत्वा।

(ट) द्वादशेत्यादि।—"एकादशे द्वादशे वाऽहनि पिता नाम कुर्य्यात्" इति श्रुतेः। यद्यपि गृह्यकाराः "दशम्यां पुत्रस्य" इति पठन्ति, तैरपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम्। तेन अशौचान्तदशम्याः परस्थिते एकादशे द्वादशे वाऽहनि कल्पभेदेन नामकरणं ज्ञेयम्।

(ठ) गोदानेत्यादि।—गावः केशा दीयन्ते छिद्यन्ते अत्र इति दोधातोरधिकरणे ल्युट्, केशान्तरूपसंस्कारभेदः, स च विवाहात् प्राक् कर्त्तव्यः, यथाह मनुः,—"केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते" इति। न च गवां पशूनां दानं वितरणमित्यर्थो वाच्यः, "केशान्तः पुनर्गोदानाख्यं कर्म्म" इति मिताक्षरावचनात्।

कर्त्तुकामः पुत्राय बुद्धिम् (ड) उपदिशति,—"भोः पुत्र! अतिकष्टां दशां (ढ) प्राप्तोऽपि स्वधर्माचारं न परित्यज, परैः सह विवादं मा कुरु, सर्वभूतेषु दया (ण) कार्य्या, परमेश्वरे भक्तिः (त) विधेया, परस्त्री नावलोकनीया, बलवद्विरोधं मा कुरु, मर्म्मज्ञेषु अनुवृत्तिः (थ) विधेया, प्रस्तावसदृशं (द) वक्तव्यं, स्ववित्तानुसारेण व्ययः करणीयः, सज्जनाः सेवनीयाः, दुर्जनाः परिहर्त्तव्याः, अपराधिषु क्षमा (ध) कर्त्तव्या, स्त्रीणां गुह्यं (न) न वक्तव्यम्"। एवमनेकधा (प) पुत्राय हितमुपदिश्य श्लोकमिममपठत्—

"भोगा न भुक्ता वयमेव भुक्ताः
तपो न तप्तं वयमेव तप्ताः।

---

(ड) बुद्धि—ज्ञान कर्त्तव्यमिति यावत्।

(ढ) अतिकष्टां—महाक्लेशदायिनीम्, दशाम्—अवस्थाम्।

(ण) सर्व्वभूतेषु—सर्व्वप्राणिषु, दया—कृपा, परदुःखमोचनेच्छेति यावत्, "यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते। इच्छा भूमिसुरश्रेष्ठ! सा दया परिकीर्त्तिता॥" इत्युक्तलक्षणा।

(त) भक्तिः,—पूज्येष्वनुरागः।

(थ) मर्म्मज्ञेषु—रहस्यविस्तु, गोपनीयवृत्तान्तं जानत्सु इत्यर्थः, तत्त्वज्ञेषु इति यावत्, अनुवृत्तिः,—सेवा।

(द) प्रस्तावसदृशं—प्रसङ्गानुयायि।

(ध) क्षमा—तितिक्षा—"आक्रुष्टोऽभिहतो वाऽपि आक्रोशेन्न च हन्ति वा। अदुष्टैर्वाङ्मनःकायैस्तितिक्षुः सा क्षमा स्मृता॥" इत्युक्तलक्षणा।

(न) स्त्रीणाम्—अबलानां सकाशे इत्यर्थः, यद्वा—स्त्रीणां—योषितां सम्बन्धि, स्त्रीविषयकमित्यर्थः. गुह्य—गोपनीय, रहस्यमिति यावत्।

(प) अनेकधा—बहुप्रकारम् [ अव्ययमेतत् ]।

संसारवासनाया अनित्यत्वं दर्शयति भोगा इति।—भुज्यन्ते इति भोगाः विषयाः, स्रक्चन्दनवनितादय इत्यर्थः न भुक्ताः नोपभुक्ताः, अस्माभिरिति शेषः, वयमेव भुक्ताः, तैरिति शेषः, वनितादिभोग्यपदार्थानां वशीभूता इति भावः, तपः स्वाश्रमविहित-

कालो न यातो वयमेव याताः
तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १०४ ॥

अतः परिणतवयसि परिणामसुखावहं किमस्ति चिन्तनीयमभीष्टदेवस्मृते? तत् पुनः गङ्गासलिलपवित्रीकृते तीर्थक्षेत्रे (फ) एव शोभते; तत् इदानीं तीर्थं गन्तुमभिलषामि" इत्युक्त्वा च वाराणसीं जगाम।

देवदत्तोऽपि पितुरुपदेशं परिपालयन् तत्रैव नगरे स्थितः। एकदा होमसमिधाहरणार्थं महारण्यं प्रविष्टो यावत् समिधः (ब) छिनत्ति, तावद्विक्रमार्को राजा मृगयार्थं वनं गतः शूकरमनुधावन् (भ) महारण्यं प्रविष्टः पुरः मार्गम्

---

धर्म्मः, न तप्तं नाचरित, विधिवन्नानुष्ठितमित्यर्थः, वयमेव तप्ताः तपस्याया अवैधानुष्ठानेन प्रतिकूलफलतया सन्तापं प्राप्ताः, कालः न यातः, अखण्डदण्डायमानत्वात् सदैव तिष्ठति इत्यर्थः, वयमेव याताः तद्वशं गताः, बाल्यकौमारयौवनवार्द्धक्यादिभावात् इति शेषः, तृष्णा वासना न जीर्णा न क्षीणा, समा एव तिष्ठतीत्यर्थः, वयमेव जीर्णाः कामनायाः सततम् अनुध्यानात् जरां प्राप्ताः। "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इति चेतसा क्रियासमभिहारेण सञ्चिन्त्य मा भूस्त्वम् अस्मादृशो दुस्त्यजविषयपापपङ्कनिमग्न इति ध्वनिगर्भो भावः। उपजातिः वृत्तम् ॥ १०४ ॥

(फ) गङ्गेति।—गङ्गाया भागीरथ्याः, सलिलेन जलेन, पवित्रीकृते शुद्धीभूते, तीर्थक्षेत्रे तीर्थं भवदुःखापहारकं चतुर्वर्गोपायभूतमित्यर्थः, ("तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्॥" इति विश्वः) [तीर्य्यते भवपारं गम्यतेऽनेन इति तॄधातोः "पातॄतुदिवचिरिचिसिचिभ्यस्थक्" उणा० (२ पा० ७ सू०) इति थक्प्रत्ययः] तादृशं यत् क्षेत्रं पुष्करादिप्रसिद्धस्थानं तस्मिन्, ("क्षेत्रं शरीरे केदारे सिद्धक्षेत्रकलत्रयोः।" इति मेदिनी)।

(ब) समिधः,—यज्ञकाष्ठानि. [सम्यक् इध्यते अनेन सम्+इन्ध—क: नकारलोपः]।

(भ) शूकरं—कञ्चित् वराहम्। अनुधावन्—अनुसरन्, पलायमानस्य तस्य पश्चात् धावन्नित्यर्थः।

अजानन् (म) देवदत्तं दृष्ट्वा नगरमार्गमपृच्छत्। तेन पृष्टो देवदत्त: स्वयमग्रे गच्छन् राजानं नगरमानयत्। ततो राजा देवदत्तं बहुधा सम्मान्य, कस्मिंश्चिद्व्यापारे (य) नियुक्तवान्। तदनन्तरं कालो महान् गत:।

एकदा राज्ञा भणितं,—"कथमहं देवदत्तकृतोपकारादुत्तीर्ण: (र) भविष्यामि? यदनेन महतोऽरण्यमध्यात् ग्राममानीत:" तद्राजवचनं श्रुत्वा देवदत्तेन स्वमनसि विचारितम्,—"अहो! सत्पुरुष: अयं कृतमुपकारं न विस्मरति। तदुक्तम्,—

प्रथमवयसि तोयं पीतमल्पं स्मरन्त:
शिरसि निहितभारा नारिकेलीफलानाम्।
उदकममृतकल्पं दद्युराजीवनान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १०५ ॥

---

(म) पुर:—नगरस्य, अग्रवर्त्तिनमित्यर्थो वा, मार्गं—पन्थानम्, अजानन्—अनवगच्छन्, कथमपि निर्णेतुमशक्नुवन्नित्यर्थ:।

(य) बहुधा—कृतज्ञताव्यञ्जकवाक्य पारितोषिकदानादिभिर्बहुभि: प्रकारैरित्यर्थ:; सम्मान्य—सत्कृत्य, सन्तोष्येत्यर्थ:, कस्मिंश्चित् व्यापारे—कस्मिंश्चित् कार्य्ये।

(र) देवदत्तकृतोपकारात्—देवदत्तेन कृत: सम्पादित: य: उपकार: महारण्ये भ्रान्तपथस्य मम पथिप्रदर्शनेन नगराऽऽनयनरूप: तस्मात्, उत्तीर्ण: —प्रत्युपकारकरणेन ऋणमुक्त इत्यर्थ:।

सतां स्वल्पोपकाराविस्मृतौ नारिकेलीवृक्षदृष्टान्तं दर्शयति, प्रथमेति।—प्रथमवयसि शैशवावस्थाया, पीत गृहीतम्, अल्प तोय जलं, स्मरन्त: मनसि चिन्तयन्त:, नारिकेलीवृक्षा इति शेष:, शिरसि मस्तके नारिकेलीफलाना स्वसम्भूताना प्रसवानां, निहितभारा: सन्त: मस्तके फलभारं दधाना: सन्त इत्यर्थ, (अत्र शिरोनिहितनारिकेलीफलभारा इति वक्तव्ये यत् द्वितीयचरणपाठ: कृत:, स समासगतदोष एव, तथा कर्त्तृपदस्य अध्याहारादपि इति) आजीवनान्त जीवनान्तकालपर्य्यन्तम्, अमृतकल्पम् अमृततुल्यम्, उदक जल, दद्यु: ददति इत्यर्थ:, तथा हि साधव: सज्जना:, कृतम् अन्यजनकृतम्, उपकारं, न हि विस्मरन्ति सदैव स्मरन्तीत्यर्थ:। मालिनी वृत्तम् ॥ १०५ ॥

भवतु तावत्, राजा एवं यत् वदति, तत् सत्यं वा मिथ्या वा अस्य प्रत्यया द्रष्टव्यः” इति विचिन्त्य, राजकुमारं केनाप्यविदितं (ल) स्वमन्दिरे सङ्गोप्य तस्यालङ्कारं (व) भृत्यहस्ते दत्त्वा, नगरमध्ये विक्रयार्थं प्रेषितवान्।

तस्मिन् अवसरे राजमन्दिरे (श) ‘राजपुत्रः केनापि चौरेण अपहृतः’ इति महान् कोलाहलो जातः। राज्ञाऽपि स्वपुत्र-मार्गणाय सर्वेऽधिकारिणः प्रेषिताः (ष)। ततस्ते यावद्विपणि-मध्ये (स) विलोकयन्ति, तावदाभरणहस्तो देवदत्तभृत्यो दृष्टः। ततस्तदाभरणं राजकुमारस्येति ज्ञात्वा तं बद्ध्वा (ह) राजसकाशं निन्युः। पश्चात् भृत्याः कथयन्ति स्म,—“रे पापाचार! कथमेतदाभरणं तव हस्ते समागतम्?” तेनोक्तं,—“मम हस्ते देवदत्तेन ब्राह्मणेन दत्तं, तस्याहं भृत्यः इति, ‘विपणिमध्ये एतदाभरणविक्रयेण धनमानय’ इति कथितञ्च”।

ततो राज्ञा देवदत्त आकारितः, भणितश्च,—“भो देवदत्त! एतदाभरणं तव हस्ते केन दत्तम्?” देवदत्तेनोक्तं,—“न केनाऽपि दत्तम्, अहमेव धनलोलुपः (क) नव कुमारं हत्वा, तदाभरणानि सर्व्वाणि गृहीत्वा, तन्मध्ये इदमेकमाभरणमस्य हस्ते

(ल) अविदितम्—अज्ञातं यथा स्यात् तथा, राजकुमारं तथा गोपयामास यथा केनाप्यपरेण तस्य सन्धानं न ज्ञायेतेत्यर्थः।

(व) तस्य—राजकुमारस्य, अलङ्कारं—तद्गात्रपरिहित भूषणजातम्।

(श) तस्मिन्नवसरे—तस्मिन्नेव काले, राजमन्दिरे—राजभवने।

(ष) स्वपुत्रमार्गणाय—निजसुतान्वेषणाय, सर्वेऽधिकारिणः,—समस्ताः कार्य्ये अधिकृताः भृत्या इति यावत्, प्रेषिताः,—प्रेरिताः।

(स) विपणिमध्ये—पण्यविक्रयशालाऽभ्यन्तरे।

(ह) तं—देवदत्तभृत्यम्, बद्ध्वा—तद्धस्तपादादीन् संयम्य।

(क) धनलोलुपः,—धनलोभपरवशः।

विक्रेतुं दत्तवान्। इदानीं तुभ्यं यद्रोचते, (ख) तत्कुरु। मम कर्म्मवशादेवंविधा (ग) बुद्धिरभूत्" इति भणित्वा अधोमुखो बभूव। तद्वचनं श्रुत्वा राजा तूष्णीमवस्थितः। तदा सभामध्ये केश्चिदुक्तम्,—"अहो! अयं सर्वधर्म्मशास्त्रवेत्ताऽपि कथमीदृशे पापकर्मणि बुद्धिमकरोत्?" अन्येनोक्तं,—"किं चित्रम्! स्वकर्मणा प्रेरितस्यैवं बुद्धिर्जाता। उक्तञ्च,—

किं करोति नरः प्राज्ञः प्रेर्य्यमाणः स्वकर्मणा।
प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी" ॥ १०६ ॥

तत्र सभ्यैर्भणितं,—"भो राजन्! अयं बालघाती, पुनः स्वर्णस्तेयी (घ) च, अतः खादिरेण शूलेन हन्तव्यः"। ततः अन्यैर्मन्त्रिभिरुक्तम्,—"अमुं शतखण्डं कृत्वा अस्य मांसेन गृध्राणां बलिः (ङ) दातव्यः" इति।

तेषां वचनं श्रुत्वा राज्ञा भणितं,—"भोः सभ्याः! अयं ममाश्रितः, पुरा मार्गदर्शनादुपकारी च; अतः सत्पुरुषेण आश्रितानां गुणदोषचिन्ता न कार्य्या। तथा चोक्तम्,—

---

(ख) तुभ्यं—भवते इत्यर्थः ["रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति चतुर्थी]। यद्रोचते—प्रीणाति, यद्भवतः प्रीतिकरं स्यादित्यर्थः।

(ग) कर्म्मवशात्—दुर्भाग्यवशादित्यर्थः, एवंविधा—एवम्प्रकारा, अनुचिता इत्यर्थः।

बुद्धेः कर्म्मानुसारित्वे प्रमाणप्रदर्शनपरं श्लोकमाह, किमिति।—स्वकर्म्मणा फलोन्मुखेन निजपूर्व्वकृतकर्म्मणा, प्रेर्य्यमाणः कुकर्म्माचरणे नियुज्यमानः, प्राज्ञः ज्ञानवानपि, नरः जनः, किं करोति? स्वातन्त्र्येण न किमपि कर्त्तुं शक्नोतीत्यर्थः, मनुष्याणां नराणां, बुद्धिः चित्तवृत्तिः, हि प्रायेण प्रायशः, कर्म्मानुसारिणी पूर्व्वकृतकर्म्मानुगामिनी भवति। पथ्यावक्त्रं वृत्तम् ॥ १०६ ॥

(घ) बालघाती—बालकहन्ता। पुनः,—तथा, स्वर्णस्तेयी—स्वर्णापहारकः।

(ङ) बलिः,—उपहारः।

चन्द्रः क्षयी प्रकृतिवक्रतनुर्जड़ात्मा
दोषाकरो भवति मित्रविपत्तिकाले।
मूर्द्ध्ना तथाऽपि विधृतः परमेश्वरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता ॥ १०७ ॥

अन्यच्च,—

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते" ॥ १०८ ॥

---

सद्भिः दुराचारोऽपि आश्रितो न त्याज्य. इति स्वोक्तिं समर्थयितुं प्राचीनश्लिष्ट-श्लोकमाह, चन्द्र इति।—चन्द्र. शशी, क्षयी यक्ष्मरोगवान्, यक्ष्मरोगस्य सङ्क्रामकत्वात् ("कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा। · ·रोगा महापापोद्भवा मता.॥" इति स्मृत्युक्ते.। रोहिणीप्रणयपाशवन्धनेन अन्या: अनादृत्य तामेव रममाण चन्द्र प्रति दक्षशापो हि चन्द्रस्य क्षयरोगोत्पत्तिहेतु.) महापातकसूचकत्वाच्च तदार्त्तस्य अस्पृश्यत्वमिति भाव, पक्षे—कृष्णपक्षे क्षयशीलस्य, प्रकृत्या स्वभावेन, वक्रतनु. क्रूरमूर्त्तिः, "अर्द्धोदून: शशी पाप:" इति समयाम्बतोक्त्या तस्य पापग्रहत्वात् इति भाव, पक्षे—वक्रदेहस्य, जडात्मा मन्दबुद्धि., मूर्खः इति यावत्, गुरुपत्नापहारकत्वात् इति भावः, पक्षे—जलमयतनुस्य, (डलयोरभेदात्) मित्रस्य सुहृदः, सूर्य्यस्य इति भाव:. सूर्य्यस्य चन्द्रमित्रत्वात्, (यदुक्त ज्योतिःशास्त्रे,—"चन्द्रस्य नाऽरो रविचन्द्रपुत्रौ") विपत्तिकाले विपत्समये सूर्य्यस्य पतनदशाया रात्रौ इत्यर्थ., पक्षे—मित्रस्य सूर्य्यस्य, ("मित्रं सुहृदि न द्वयो:। सूर्य्ये पुंसि" इति मेदिनी) विपत्तिकाले अस्तगमनरूपविपत्समये, दोषाणां पापकार्य्याणाम्, आकरः खनिः इव उत्पत्तिस्थान गुरुदारधर्षणात्, रात्रौ पापकारिणां प्रकृष्टावसरत्वात् वा, पक्षे—दोषा रात्रि., ("दोषा च नक्तञ्च रजनौ" इत्यमर:) तां करोतीति दोषाकरः रात्रेः उत्पादकः भवति, सूर्य्यास्ते रजनीप्रादुर्भावात् इति भावः, तथाऽपि एव बहुदोषसत्त्वेऽपि, परमेश्वरेण महादेवेन, मूर्द्ध्ना मस्तकेन, विधृत. अलङ्काररूपतया मस्तके गृहीत इत्यर्थः, अर्थान्तर न्यस्यति,—तथा हि महतां महापुरुषाणाम्, आश्रितेषु जनेषु, गुणदोषचिन्ता गुणदोषविचार., नैव, भवतीति शेषः। वसन्ततिलक वृत्तम् ॥ १०७ ॥

उपकारिणि सद्व्यवहारे न किमपि चित्रं, परन्तु निकृतिपरेष्वपि यः क्षमाशील: स एव श्लाघ्य: इति वक्तुमाह, उपकारिष्विति।—य. जनः, उपकारिषु हितकारि-

इत्युक्त्वा देवदत्तं प्रति भणति स्म,—"भो देवदत्त! त्वं चेतसि किमपि भयं मा कार्षीः। मम पुत्रो बलीयसा प्राकृतेन (च) कर्म्मणा मारितः, त्वया किं कृतम्? यतः, प्राकृतं कर्म्म कोऽपि लङ्घयितुं न शक्नोति। तथा चोक्तम्,—

माता लक्ष्मीः पिता विष्णुः स्वयञ्च विषमायुधः।
तथाऽपि शम्भुना दग्धः प्राकृतं केन लङ्घ्यते? ॥ १०९ ॥

अन्यच्च,—महारण्ये पतितं मां नगरं नीतवतो महोपकारिणः तव प्रत्युपकारसहस्रैरप्युत्तीर्णो न भवामि" इति समाश्वास्य, वस्त्राभरणादिना देवदत्तं सम्भाव्य विससर्ज।

ततः देवदत्तः तं (छ) कुमारमानीय राज्ञे ददौ। ततः सविस्मयेन राज्ञा भणितं,—"किमिदम्!!" इति। देवदत्तेन उक्तं,—"कृतोपकारात् कथमपि उत्तीर्णो न भवामीति पूर्वं श्रीमतोक्तम्। तद्भवतः स्वभावपरीक्षणार्थं मया एवं कृतम्। भवति प्रत्ययः (ज) दृष्टश्च"। राज्ञोक्तं—"यः कृतमुपकारं

---

जनेषु साधुः सद्व्यवहारी, तस्य साधुत्वे को गुणः? न कोऽपीत्यर्थः, यः जनः, अपकारिषु कृतापकारिषु जनेषु, साधुः सद्व्यवहारी भवति स' तादृशजन एव, सद्भिः सज्जनैः, साधुः सुजनः, उच्यते कथ्यते। पथ्यावक्त्रं वृत्तम् ॥ १०८ ॥

(च) बलीयसा—बलवत्तरेण, प्राकृतेन—पुराऽर्ज्जितेन, पूर्वानुष्ठितेन इत्यर्थः, [प्र आ-पूर्वस्य कृधातो. क्तप्रत्ययनिष्पन्नमिद रूपम्]।

प्राक्तनकर्म्मणोऽलङ्घनीयता प्रदर्शयितु पौराणिकवार्त्ताप्रदर्शनपर श्लोकमाह, मातेति।—यस्य माता स्वयं लक्ष्मीः, पिता च विष्णुः, स्वयमपि विषमायुध' अति-विषमपञ्चबाणधारी, यद्वा विषेण मीयन्ते तुल्यन्ते इति विषमाणि आयुधानि यस्य, यदिषवः विषवत् प्राणहराः, महान् धनुर्द्धारी न तु कापुरुषः इति भाव, तथाऽपि एवं सत्यपि, कामदेवः, शम्भुना महादेवेन, दग्धः भस्मीकृतः, प्राक्तन पूर्व्वकृत कर्म्म, केन जनेन, लङ्घ्यते? न केनापि लङ्घयितु शक्यते इत्यर्थः। वृत्त पूर्व्ववत् ॥ १०९ ॥

(छ) त—स्वमन्दिरे सङ्गोपितम्।

(ज) प्रत्ययः,—विश्वासः।

विस्मरति, स पुरुषाधम एव"। देवदत्तेनोक्तं,—"भो राजन्! कारणं विनाऽपि सकलजगदुपकारी भवान्। अतस्त्वमेव सुजनो लोके। तथा चोक्तम्,—

सुजनाः सुधनास्ते हि कृतिनः सुखिनस्तथा।
जन्तवो ये हि जीवन्ति परस्य हितकाम्यया" ॥ ११० ॥

इति कथां कथयित्वा पुत्तलिका राजानमवदत्,—"एवं परोपकार्य्यौदार्य्याणि विद्यन्ते चेत् त्वयि, तर्हि अस्मिन् सिंहासने समुपविश"। भोजराजः तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे कृतज्ञतापरीक्षणं नाम चतुर्थोपाख्यानम् ] ॥ ४ ॥

## अथ मणिकारसंवादो नाम पञ्चमोपाख्यानम्।

अथ पुनः तथैव सिंहासनं समाक्रमितुकामं मालवेन्द्रं ततो निवार्य्य अन्या पुत्तलिका समवोचत्—"भो राजन्! श्रूयताम्;—विक्रमार्के राज्यं कुर्व्वति, एकदा कश्चिद्रत्नवणिक् समागत्य, रत्नमनर्घम् (क) एकं राजहस्ते समर्पितवान्।

सतां लक्षणं प्रदर्शयितुं महाजनोक्तिं प्रमाणस्वरूपेणावतारयति सुजना इति।— ये हि जन्तवः जीवाः, परस्य अन्यस्य, हितकाम्यया हितेच्छया, हितसाधनार्थमित्यर्थः, जीवन्ति प्राणान् धारयन्ति ते हि ते एव, सुजनाः सज्जनाः, सुधनाः सार्थकधनवन्तः, कृतिनः कृतार्थाः, तथा सुखिनः सानन्दाश्च, कथ्यन्ते इति शेषः। पथ्यावक्त्रं वृत्तम् ॥ ११० ॥

इति चतुर्थोपाख्यानम् ॥ ४ ॥

(क) अनर्घं—बहुमूल्यम्।

राजाऽपि देदीप्यमानं तद्रत्नं दृष्ट्वा परीक्षकानाकार्य्यावदत्,—"भोः परीक्षकाः। कीदृशमेतद्रत्नम्? समीचीनम् असमीचीनं (ञ) वा? अस्य मूल्यं कुर्वन्तु"। तैस्तद्रत्नं परीक्ष्य भणितं,—"भो राजन्। अमूल्यमेतद्रत्नम्। अस्य मूल्यमविदित्वाऽपि क्रियते चेत्, तर्हि महाप्रत्यवायः (ट) अस्माकं भविष्यति"।

तेषां वचनं श्रुत्वा राजा भूरि द्रव्यं दत्त्वा भणति स्म,—"भो वणिक्। ईदृशं रत्नमन्यदस्ति किम्"? वणिजा भणितं,—"देव। एतत्सदृशानि रत्नानि इह आनीतानि न सन्ति, परं ग्रामे एवंविधान्येव दश रत्नानि विद्यन्ते। यदि प्रयोजनमस्ति, तर्हि तेषां मूल्यं कृत्वा गृह्यताम्"। ततः परीक्षकैः एकैकस्य रत्नस्य षट्कोटिसुवर्णं (ठ) मूल्यं कृतम्। राज्ञा तावत् सुवर्णं तस्मै वणिजे दत्तं, तेन सह विश्वासी कश्चित् भृत्यो मणिकारश्च प्रेषितः; उक्तश्च,—"भो मणिकार। अष्टानां वासराणां (ड) मध्ये रत्नानि गृहीत्वा आयास्यसि चेत्, उचितं तव दास्यामि"। तेनोक्तं,—"देव। अष्टानां दिवसानां मध्ये एव चरणौ द्रक्ष्यामि। अन्यथा चेत् दण्ड्योऽहम्"।

एवमुक्त्वा स मणिकारस्तेन वणिजा सह तस्य निवासनगरं गतः। तत्र तेन दश रत्नानि दत्तानि। तानि गृहीत्वा मार्गे यावदागच्छति, तावन्महती वृष्टिरभूत्। तया वृष्ट्या उभयतट-परिपूर्णा नदी प्रवहति स्म। ततः अपरं तीरं गन्तुमशक्नुवन्, तत्र तटस्थितं नाविकमवदत्,—"भोः कर्णधार। (ढ) मां नदीम्

(ञ) समीचीन—निर्द्दोष, धारणयोग्यम्, अकृत्रिम वेत्यर्थः। असमीचीन—तद्विपरीतमित्यर्थः। मणीना दोषगुणप्रभृतिक गारुडे बृहत्संहितायाञ्च द्रष्टव्यम्।

(ट) महाप्रत्यवायः,—महदनिष्टम्।

(ठ) षट्कोटिसुवर्णं—षट्कोटिसङ्ख्यकसुवर्णमुद्राः।

(ड) वासराणा—दिनानाम्।

(ढ) कर्णधार।—नाविक। ("कर्णधारस्तु नाविकः" इत्यमरः)।

उत्तारय"। सोऽवदत्,—"हे पथिक। एषा नदी वेलाम् (ण) अतिक्रम्य वर्त्तते, कथमुत्तार्य्यते? प्रबलनद्युत्तरणं बुद्धिमता वर्ज्जनीयम्। तथा चोक्तम्,—

महानदीप्रतरणं महापुरुषनिग्रहम्।
महाजनविरोधञ्च दूरतः परिवर्ज्जयेत्॥ १११॥
चरिते योषितां पूर्णे सरित्तोये नृपादरे।
सर्व्वत्रैव वणिक्स्नेहे विश्वासं नैव कारयेत्"॥ ११२॥

मणिकारेणोक्तं,—"भोः कर्णधार! त्वया यदुक्तं, तत् सत्यमेव, तथाऽपि मम महत् कार्य्यमस्ति, सामान्यकार्य्याद्विशेषकार्य्यं बलवद्भवति। उक्तञ्च,—

सामान्यकार्य्यतो नूनं विशेषो बलवान् भवेत्।
परेण पूर्व्वबाधो वा प्रायशो दृश्यतामिह॥ ११३॥

(ण) वेला—नद्या कूलम्।

महानद्युत्तरणादीनाम् अनुचितत्वे प्रमाणस्वरूप शिष्टोक्तिमाह, महानदीति।—महानदीना भियोद्रासन्निभाना पयःपूरवतीनामिति भावः, प्रतरणम् उत्तरणं, महापुरुषाणा निग्रहम् अपमान, महाजनै मह विरोध विवादञ्च, दूरत. परिवर्ज्जयेत् त्यजेत्। एतच्चितयं कदाऽपि न कर्त्तव्यमित्यर्थः। अस्मिन् प्रबन्धे सर्व्वत्रैव पथ्यावक्त्रं वृत्तम्॥ १११॥

कस्मात्तत् वर्ज्जयेदित्याकाङ्क्षाया तस्याः अविश्वास्यत्वप्रतिपादिका शिष्टोक्तिं प्रदर्शयति, चरिते इत्यादि।—योषिना स्त्रीणां, चरिते स्वभावे, पूर्णे सरित्तोये नदीजले, नृपादरे राज्ञ. समादरे, वणिजः स्नेहे च, सर्व्वत्रैव एषु सर्व्वेष्वेव, विश्वासं प्रत्ययं, नैव कारयेत्॥ ११२॥

सामान्याद्विशेषस्य बलवत्त्व दर्शयति, सामान्येति।—विशेष· असाधारणकार्य्यं, सामान्यकार्य्यतः साधारणकार्य्यात्, [ अत्र "सामान्यशास्त्रत." इति सारस्वतधृतपाठ. ] नून निश्चित, बलवान् प्रबल, भवेत् स्यात्, इह अस्मिन् लोके, [ "सामान्यशास्त्रत" इति पाठपक्षे—शास्त्रे इत्यर्थ. ] प्रायश्च प्रायेण, अधिकस्थले इत्यर्थः, परेण परोक्तेन कार्य्येण, विशेषेणेत्यर्थः, पूर्वबाध. पूर्व्वकर्म्मणः, सामान्यस्येत्यर्थः, बाध निषेध., दृश्यता विलोक्यता, त्वयेति शेषः, "विशेषेणापि सामान्य बाध्यते" इति न्यायात् "अपादान-

अतः मम नद्युत्तरणं सामान्यं, राजकार्य्यं बलवत्"। कर्णधारिणोक्तं,—"महद्राजकार्य्यं, तत् किम्?" मणिकारिणोक्तम्,—"अद्य दश रत्नानि गृहीत्वा राजसमीपं न गमिष्यामि चेत्, आज्ञाभङ्गाद्राजा निग्रहं (त) करिष्यति"। नाविकेनोक्तं,—"तेषां रत्नानां मध्ये मह्यं पञ्च रत्नानि दास्यसि चेत्, तर्हि त्वां नदीमुत्तारयिष्यामि"।

ततो मणिकारस्तस्मै नाविकाय पञ्च रत्नानि दत्त्वा, नदीमुत्तीर्य्य राजसमीपमागत्य, तस्य हस्ते पञ्च रत्नानि ददौ। राजाऽब्रवीत्,—"भो मणिकार! किं पञ्चैव रत्नानि समानीतानि? अवशिष्टानि पञ्च किं कृतानि?" मणिकारिणोक्तं,—"देव! श्रूयतां विज्ञाप्यं (थ) मे; अस्मान्नगरात् निर्गत्य तेन वणिजा सह तन्नगरं गत्वा, तेन दत्तानि दश रत्नानि गृहीत्वा, ततो निर्गत्य यावदागच्छामि, तावन्मार्गे प्रबलवृष्ट्या नदी उभयतट विलङ्घ्य प्रबलोदका (द) प्रवहति। 'अष्टानां दिनानां मध्ये स्वामिचरणौ द्रष्टव्यौ, नदी च दुस्तरा' इति विचार्य्य नद्युत्तरणाय नाविकाय पञ्च रत्नानि दत्तानि, पञ्च देवसमीपमानीतानि। यद्यष्टदिनानां मध्ये नागम्यते, तदा आज्ञाभङ्गात् स्वामिनश्चेतसि दुःखं स्यात्। उक्तञ्च,—

---

सम्प्रदान-करणाधारकर्म्मणाम्। कर्त्तुश्चान्योऽन्यसन्देहे परमेकं प्रवर्त्तते॥" इति कारिकाबलाच्च इति भाव.॥ ११३॥

(त) निग्रह—भर्त्सना, दण्डादिकञ्च।

(थ) विज्ञाप्यं—निवेद्यम्।

(द) प्रबलोदका—प्रबलम् अतीवस्रोतोविशिष्टम् उदकं जलं यत्र यस्याः वा; वेगान्वितजलवतीत्यर्थः। [अत्र प्रत्यय-ककाराभावात् "प्रत्ययस्थात् कात्........" (७।३।४४ पा०) इति सूत्रेण पूर्व्वस्य अकारस्य नेकारः]।

आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम्।
पृथक् शय्या च नारीणामशस्त्रो बध उच्यते ॥ ११४ ॥

इति विचार्य्य दत्तानि"। राजाऽपि तद्वचनं श्रुत्वा सन्तुष्टः सन् अवशिष्टानि पञ्च रत्नानि तस्मै मणिकाराय ददौ"।

इति कथां कथयित्वा पुनर्भोजमवदत् पुत्तलिका,—"परमौदार्य्यगुणवरिष्ठो विक्रमादित्यः। त्वयि एतादृशमौदार्य्यं यदि विद्यते, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरोभोजसंवादे मणिकारसंवादो नाम पञ्चमोपाख्यानम् ] ॥ ५ ॥

---

## ब्रह्मचारिराज्यदानं नाम षष्ठोपाख्यानम्।

अथ विक्रमगुणज्ञातारमपि कौतुकात् प्रतिषेधमशृण्वन्तं भोजदेवं निषिध्य अपरा पुत्तलिका व्याजहार, (क)—"श्रूयतां राजन्! विक्रमार्कः राज्यं कुर्व्वन् एकदा चैत्रमासे वसन्तोत्-

---

'राजाज्ञाविघातः न शुभाय' इति प्रदर्शयितु शिष्टोक्तिम् उदाहरति, आज्ञा- इति।—नरेन्द्राणा नृपाणाम्, आज्ञाभङ्ग आज्ञाया. व्याघातः, आदेशलङ्घनमित्यर्थः, विप्राणा ब्राह्मणाना, मानखण्डन माननाश, अपमानमित्यर्थः, नारीणा स्त्रीणाञ्च, पृथक् स्वामिशय्याऽन्यतरस्थाने शय्या शयनम्, एतत्त्रयम्. अशस्त्र. वध. शस्त्राघात विना हननम् उच्यते कथ्यते, जनैरिति शेष.। तथा कृते नितरामेते अवमानिता. कुप्यन्तीति भाव. ॥ ११४ ॥

इति पञ्चमोपाख्यानम् ॥ ५ ॥

---

(क) व्याजहार—उवाच। ("व्याहार उक्तिर्लपितम्" इत्यमरः)।

सवे (ख) सकलान्तःपुरवधूसमेतः क्रीड़ार्थं शृङ्गारवनम् (ग) अगमत्। नानाविध-तरुशोभिते तस्मिन् शृङ्गारवने इन्द्रनील-खचितभित्ति-रमणीय-चन्द्रकान्तशिला-विनिर्मिताङ्गने, (घ) नानाविधधूपवासिते क्रीड़ागृहीत-पद्मिनी-प्रभृति-चतुर्विध-वनिताभिर्वस्त्र-ताम्बूल-पुष्पालङ्कृताभिः सह राजा चिरं क्रीड़ामकार्षीत्।

तद्वनसमीपे चण्डिकाऽऽयतनम् (ङ) एकमासीत्। तत्र स्थितः कश्चित् ब्रह्मचारी राजानं तत्रागतं विलोक्य स्वमनसि चिन्तयति स्म,—'अहो! तपः कुर्वता मया जन्म वृथैव नीयते। स्वप्नेऽपि विषयसङ्गमजन्म (च) सुखं नानुभूयते। उक्तञ्च,—

यद्यत् सुखं विषयसङ्गमजन्म तच्च
दुःखाय सृष्टमिति मूर्खविचारणैव।

---

(ख) वसन्तोत्सवे—चैत्रमहे, वसन्तकालीयस्मरपूजनादिरूपोत्सवे इत्यर्थः, "होलि" इति ख्याते हिन्दीत्सवे वा।

(ग) शृङ्गारवन—प्रमदवनम्।

(घ) इन्द्रेति।—इन्द्रनीलेन तदाख्यमणिविशेषेण, ("क्षीरमध्ये क्षिपेन्नीलं क्षीरश्चेन्नीलतां व्रजेत्। इन्द्रनीलमिति प्रोक्तम्—" इति लक्षणान्वितमणिविशेषेण) खचिता निबद्धा, या भित्तिः कुड्यं, तया रमणीयया मनोज्ञया, चन्द्रकान्तशिलया तदाख्यमणिना, (तल्लक्षणं यथा राजनिघण्टौ—"स्निग्धं श्वेतं पीतमाभासमेतं धत्ते चित्ते स्वच्छतां यन्मणीनाम्। यच्च स्रावं याति चन्द्रांशुसङ्गात् जात्यं रत्नं चन्द्रकान्ताख्यमेतत्॥" इति) विनिर्म्मितम्, अङ्गनं चत्वरप्रदेशः यत्र तस्मिन्।

(ङ) चण्डिकाऽऽयतनं—चण्डिकायाः दुर्गायाः, आयतनं मन्दिरम्।

(च) विषयेति।—विषयसङ्गमात् स्रक्चन्दनवनिताद्युपभोगात् जन्म यस्य तत्।

विषयोपभोगसुखं सर्वथैव न हेयमित्यर्थे कस्यचित् विषयैषिणः उक्तिं प्रदर्शयति, यद्यदिति।—विषयाणां भोग्यवस्तूनां, सङ्गमात् संयोगात्, जन्म उत्पत्तिर्यस्य तादृशं विषयभोगजनितमित्यर्थः, यत् यत् सुखं तत्सर्व्वं, दुःखाय क्लेशाय, सृष्टं निर्म्मितम्, इति

को नाम सम्परिहरेत् सिततण्डुलांश्च ?
भोक्तुं यतेत तुषमिश्रकणान् मनुष्यः ? ॥ ११५ ॥

तस्मात् महत् कष्टं कृत्वाऽपि संसारे स्त्रीसुखमनुभोक्तव्यम्।

उक्तञ्च,—

असारे खलु संसारे पूज्या सारङ्गलोचना।
तदर्थं धनमिच्छन्ति तत्त्यागे च धनेन किम् ? ॥ ११६ ॥
असारभूते संसारे सारभूता नितम्बिनी।
इति सञ्चिन्त्य वै शम्भुरर्द्धाङ्गे पार्वतीं दधौ ॥ ११७ ॥

विक्रमार्को राजा प्रसङ्गतः (क) अत्र समागतोऽस्ति।

---

मूर्खाणां विचारणा धारणा, एव निश्चये, को नाम मनुष्यः जनः, सिततण्डुलान् उत्तमशुभ्रतण्डुलान्, सम्परिहरेत् ? वर्ज्जयेत् ? तथा तुषमिश्रकणान् तुषमिश्रिततण्डुलकणान्, भोक्तुं खादितुं, यतेत ? प्रयत्नं कुर्य्यात् ? न कोऽप्येवं करोतीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ११५ ॥

स्त्रीसम्भोगसुखस्य सारतां प्रतिपादयितुं श्लोकद्वयमाह असारे इति।—असारे सारहीने, संसारे जीवलोकमध्ये, सारङ्गलोचना मृगनयना, योषिदित्यर्थः पूज्या ग्राह्या इत्यर्थः, तदर्थं योषिदर्थं धनं सम्पदम्, इच्छन्ति अभिलषन्ति, तत्त्यागे च योषित्त्यागे तु, धनेन किम् ? किं प्रयोजनम् ? न किमपि इत्यर्थः ॥ ११६ ॥

असारभूते इति।—असारभूते सारवर्ज्जिते, संसारे नितम्बिनी प्रशस्तनितम्बवती योषिदेवेत्यर्थः, सारभूता सारतया गण्या, (तदुक्तं बृहत्संहितायां चतुःसप्ततितमे अध्याये,—"जये धरित्र्याः पुरमेव सारं, पुरे गृहं सद्मनि चैकदेशः। तत्रापि शय्या शयने वरा स्त्री रत्नोज्ज्वला राज्यसुखस्य सारः ॥ १ ॥ ...... श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं, न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना। तदर्थं धर्म्मार्थौ सुतविषयसौख्यानि च ततो, गृहे लक्ष्मीर्मान्याः सततमबला मानविभवैः ॥ ४ ॥" इत्यादि) इति सञ्चिन्त्य एवं विविच्य, शम्भुः महादेवः, अर्द्धाङ्गे निजदेहार्द्धे, पार्व्वतीं गिरिजां, निजपत्नीमिति भावः, दधौ दधार। श्लोकद्वये पथ्यावक्त्रं वृत्तम् ॥ ११७ ॥

(क) प्रसङ्गतः,—प्रसङ्गहेतोः कार्य्यगत्येत्यर्थः. [अत्र "सार्वविभक्तिकस्तसिल्" (वा०) इति तृतीयायाः पञ्चमीस्थाने वा तसिल्प्रत्ययः]।

तस्मात् तम् एकमग्रहारं (ज) याचित्वा, काञ्चन कन्यकां विवाह्य संसारसुखमनुभविष्यामि" इति विचार्य राजसमीपमागत्य,—

"पञ्चाऽऽस्यपञ्चवदने हिमशैलजायाः
रत्युत्सवे युगपदास्यरसं जिघृक्षौ।
त्वां पातु सञ्चलित-विभ्रम-कर्णपूर-
लोल-भ्रमद्-भ्रमर-विभ्रमभृत् कटाक्षः॥ ११८॥"

इत्याशीर्वादं ददौ। ततो राजा तमासने समुपवेश्याब्रवीत्,—"भो ब्राह्मण! कुतः समागतोऽसि?" तेनोक्तम्,—"अहमत्रैव जगदम्बिकापरिचर्य्यां (झ) कुर्वन् तिष्ठामि। नित्यमस्याः सेवां कुर्वतो मे पञ्चाशद्वर्षाणि गतानि, तावत्कालम् अहं ब्रह्मचारी (ञ)। अद्य देवता निशाऽवसाने (ट) मां समागत्याभणत्,—'भो ब्राह्मण! त्वमेतावन्तं कालं मम परिचर्य्यया

---

(ज) अग्रहारं—ग्रामादिकम्।

महाविवेकी शङ्करोऽपि भोगी अत. भोगसुखं न हेयमिति प्रतिपादयितुं भोगार्थी ब्रह्मचारी हरपार्व्वत्योः सम्भोगप्रतिपादिकया वाचा आशीःश्लोकमाह, पञ्चास्येति।—हिमशैलजायाः हिमालयसुतायाः पार्व्वत्याः, रत्युत्सवे रमणोत्सवकाले, युगपत् एकदैव, पञ्चास्यस्य पञ्चमुखस्य शिवस्य, पञ्चवदने पञ्चमुखे, (जातावेकवचनम्) आस्यरसं मुखामृतं, जिघृक्षौ ग्रहीतुमिच्छौ सति, सञ्चलितयोः विभ्रमकर्णपूरयोः विलासकर्णोत्पलयोः, लोला लोलुपाः, भ्रमन्तश्च ये भ्रमराः, तेषां विभ्रमभृत् तद्वत् शोभमान इत्यर्थः, कटाक्षः अपाङ्गवीक्षण, त्वां पातु रक्षतु॥ ११८॥

(झ) जगदम्बिकापरिचर्य्या—जगदम्बिकायाः त्रिलोकजनन्याः पार्व्वत्याः, परिचर्य्यां सेवाम् [ परि-चर – क्यप्, + टाप् ]।

(ञ) ब्रह्मचारी—ब्रह्मचर्य्यसम्पन्न., ब्रह्मचर्य्यलक्षण यथा दक्षसंहितायाम्,—"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीत ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्॥" इति।

(ट) निशाऽवसाने—रात्रिशेषे, तत्समये दृष्टस्वप्नस्य फलावश्यम्भावश्रुतेस्तथा कथनं बोध्यम्।

श्रान्तोऽसि तवाहं प्रसन्ना जाताऽस्मि, अतः त्वम् इदानीं गृहस्थाश्रमं (ठ) स्वीकुरु। ततः पुत्रमुत्पाद्य पश्चान्मनो मोक्षे निधेहि; अन्यथा तव गतिर्नास्ति। यतः,—

आश्रमान् त्रीनपाकृत्य यो मोक्षेऽन्तर्निवेशयेत्।
अनया क्रियया मोक्षं सेवमानः पतत्यधः॥ ११९॥

आदौ ब्रह्मचारी, ततो गृही च भूत्वा प्रव्रजेदिति। तत् विक्रमार्कभूपतये सर्वमात्मवृत्तान्तं विज्ञापय, स तव मनोरथं पूरयिष्यति' इति। एवं देव्या स्वप्ने भणितम्। अतस्तव समीपमागतोऽस्मि"। इत्येवं कपटवचनैः (ड) राजानमुक्तवान्। तच्छ्रुत्वा राजा कूटवाग्व्यापारं सम्यगवगत्य स्वमनसि अचिन्तयत्,—"असाविवम् अनृतं (ढ) वदति। अस्तु, तथाऽप्यर्थी (ण) वर्त्तते, सर्वथाऽस्य मनोरथः पूरणीयः। उक्तञ्च,—

दत्त्वाऽऽर्त्ताय नृपो दानं शून्यं लिङ्गं प्रपूज्य च।
परिपाल्याऽऽश्रितं नित्यमश्वमेधफलं लभेत्" ॥ १२०॥

(ठ) गृहस्थाश्रमम्—[ आश्रयते अत्र, आ + श्रम – आधारे घञ्. अवृद्धिः ] गृहस्थरूप आश्रम तम्।

आदावेव मोक्ष प्रति यतमानस्य नैष्फल्यं प्रदर्शयति, आश्रमान् इति।—यो जनः त्रीन् आश्रमान् ब्रह्मचर्य्य-गृहस्थ-वानप्रस्थाख्यान्, अपाकृत्य अनादृत्य, मोक्षे तुरीयाश्रमकर्त्तव्ये निर्व्वाणमार्गे, अन्तः मनः निवेशयेत् निदधीत, अनया एवम्प्रकारया, क्रियया कार्य्येण, मोक्ष सेवमान आश्रयन्, स जनः, अधः पतति नरकगामी भवति। आनुपूर्व्येण सर्वाश्रमा. सेवनीया इति भावः॥ ११९॥

(ड) कपटवचनैः,—प्रतारणावाक्यैः।

(ढ) अनृत—मिथ्या।

(ण) अर्थी--प्रार्थी, याचक इत्यर्थः।

अर्थिमनोरथपूरणे गुणमाह. दत्त्वेति।—नृपः राजा, आर्त्ताय दुःखितजनाय, दान दत्त्वा, शून्य लिङ्गं प्रतिष्ठापिताम् अपि समर्चासत्कारशून्यां देवमूर्त्तिं, प्रपूज्य पूजयित्वा, नित्य सदा, आश्रितं जन परिपाल्य पालयित्वा च, अश्वमेधयज्ञस्य फल. लभेत् प्राप्नुयात् [ अत्र परस्मैपदं चिन्त्यम् ]॥ १२०॥

इति विचार्य्य तत्र नगरमेकं कारयित्वा, तमभिषिच्य च तस्मिन् नगरे संस्थाप्य विलासिनीनां शतम् (त) अदात्। पञ्चाशद्गजान्, तुरङ्गाणां पञ्चशतीं, भटानां चतुःसहस्रीं (थ) तस्मै ब्राह्मणाय दत्त्वा, चण्डिकापुरमिति तस्य नगरस्य नाम कृतम्। ततः परिपूर्णमनोरथो ब्राह्मणस्तं राजानमाशीर्भिरभ्यर्द्धयामास। अथ राजाऽपि निजनगरमगमत्"।

इति कथां कथयित्वा पुत्तलिका राजानमब्रवीत्,—"भो राजन्! त्वयि एवमौदार्य्यं विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरीभोजसंवादे ब्रह्मचारिराज्यदानं नाम षष्ठोपाख्यानम्] ॥ ६ ॥

## मृतोज्जीवनं नाम सप्तमोपाख्यानम्।

अथापरेद्युः जाग्रदभिलाषपरवशं समारोहणाकाङ्क्षया सिंहासनं सस्नेहमवलोकमानं भोजं प्रतिरुन्धती वाक्शृङ्खलाभिः एकाऽन्या पुत्तलिका समवदत्,—"महाराज भोजदेव! विक्रमार्के राज्यं कुर्वति, सर्वोऽपि जनः सुखेनासीत्; लोके दुर्जन-

(त) तमिति।—तं ब्राह्मणम्, अभिषिच्य अभिषिक्तं कृत्वा, तस्मिन् नगरे च संस्थाप्य तस्य स्थितिं विधाय विलासिनीनां शतं शतसङ्ख्यापरिमिताः विलासवतीः रमणीरित्यर्थः, तस्मै ब्राह्मणाय अदादिति शेषः।

(थ) तुरङ्गाणां—प्रौढ़ामवेगशालिसुलक्षणवाजिनाम् इत्यर्थः, पञ्चशतीं—पञ्चशतसङ्ख्यामित्यर्थः, भटानां—योद्धृणाम्, चतुःसहस्रीं—चतुःसहस्रसङ्ख्यामित्यर्थः, अदादिति शेषः।

इति षष्ठोपाख्यानम् ॥ ६ ॥

कण्टको (क) नास्ति। सदाचारवन्तः सर्व्वे जनाः। ब्राह्मणाः वेदशास्त्राभ्यास-स्वधर्माचारपराः, षट्कर्म्मनिरताः (ख) बभूवुः। सर्वस्यापि वर्णस्य सिद्धौ (ग) यशसि चाभिरुचिः, परोपकार-करणे वासना, असत्ये अप्रणयः, लोभे द्वेषः, परापवादे (घ) अनादरः, जीवदयायाम् अनुरागः, परमेश्वरे भक्तिः, देहे निर्म्ममता, नित्यानित्यवस्तुनि विचार, (ङ) परत्र विषये बुद्धिः, वाचि सत्यम्, उक्तिपरिपालने (च) दार्ढ्यं, हृदये औदार्य्यगुणः। एवं सर्वोऽपि लोकः :सद्वासनाऽऽश्रितः, पवित्री-भूतान्तःकरणो राज्ञः प्रसादात् सुखेन वर्त्तते।

तस्मिन् नगरे धनदो नाम कश्चित् वणिक् अस्ति। तस्य सम्पत्तेर्मर्य्यादा (छ) नास्ति ; येन यद्वस्तु चिन्त्यते, तद्वस्तु तस्य गृहे लभ्यते। एवं सकलसम्पदाश्रयस्य वणिजः सर्ववस्तुषु अनित्यत्वबुद्धिरुत्पन्ना,—"असारोऽयं संसारः, सर्वं सुदुर्लभमपि वस्तुजातमनित्यम्। यतः,—

गगननगरकल्पः सङ्गमो वल्लभानां
जलदपटलतुल्यं यौवनं वा धनं वा।:

---

(क) दुर्ज्जनकण्टकः,—दुर्ज्जनः असज्जनः एव कण्टकः क्षुद्रशत्रुरित्यर्थः।

(ख) षठ्कर्म्मनिरताः,—ब्राह्मणलक्षणस्वरूपषठ्कर्म्मसम्पन्नाः, षट् कर्म्माणि यथा,—"यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः." एतत्षट्कर्म्मशालित्वस्यैव ब्राह्मणत्वात्।

(ग) सिद्धौ—अणिमादिसिद्धौ।

(घ) परापवादे—परनिन्दायाम्।

(ङ) नित्यानित्यवस्तुनि—नित्यं परब्रह्मरूपम्, अनित्यं घटपटादिजगत्प्रपञ्चात्मकञ्च यत् वस्तु तस्मिन्नित्यर्थः। विचारः,—इदं नित्यमिदमनित्यमिति विवेकः।

(च) उक्तिपरिपालने—वचनरक्षणे।

(छ) मर्य्यादा—सीमा, इयत्तेति यावत्।

भोग्यवस्तूनामनित्यता प्रतिपादयति, गगनेति।—वल्लभाना प्रियजनानां, सङ्गमः

स्वजनसुतशरीरादीनि विद्युच्चलानि
क्षणिकमिति समस्तं विद्धि संसारवृत्तम् ॥ १२१ ॥

उक्तञ्च,—

शरणमशरणं वा बान्धवो बन्धमूलं
शरणमपि तदारात् द्वारमापद्ग्रहाणाम् ।
विकलितमतिपुत्राः शत्रवः सर्वमेतत्
त्यजत भजत धर्मं निर्म्मलं कर्म्मपाशम् ॥ १२२ ॥

अतः संसारिणां धर्म्म एव शरणम् (ज)। तथा चोक्तम्,—

धर्म्मो रक्षति रक्षितो ननु हतो हन्ति ध्रुवं प्राणिनो
हन्तव्यो न ततः स एव शरणं संसारिणां सर्वथा ।

---

समागमः, गगननगरकल्पः स्वप्नदृष्टाकाशस्थसौधराजिविराजितनगरवत् मिथ्याभूतः, यौवनं तारुण्यं, वा धनं सम्पद्वा, (उभयोः सम प्राधान्य दर्शयितु वाकारद्वयं प्रयुक्तम्) जलदपटलतुल्यं मेघावरणवत् क्षणस्थायि, स्वजना आत्मीयजनाः सुताः पुत्राः, शरीरं देहः, तदादीनि वस्तूनीति शेषः, विद्युद्वत् चलानि चञ्चलानि, समस्तं सकलं, संसारवृत्तं संसारान्तर्गतः सर्व्व एव पदार्थ इत्यर्थः, क्षणिकं क्षणस्थायि, इति एवं विद्धि जानीहि। एतत्पद्यद्वये मालिनी वृत्तम् ॥ १२१ ॥

स्वजनसुतादयः सर्व्व एव बन्धहेतुभूताः त्याज्याः, धर्म्म एवैकः शरण्य इत्याह, शरणमिति।—शरणम् आश्रयभूतः अशरणम् अनाश्रयभूतो वा बान्धवः पुत्रभ्रात्रादिबन्धुवर्गः, बन्धमूलं संसारबन्धनस्य हेतुर्भवति, शरणमपि यद्याश्रयभूतो भवति तदपि तदारात् तन्निकटे, आपद्ग्रहाणां विपद्रूपदुर्ग्रहाणां, द्वारं विद्यते, विकलितमतिपुत्राः विपर्य्यस्तबुद्धयः सुताः, शत्रवः रिपवः, कर्म्मपाशं कर्म्मबन्धनभूतम्, एतत्सर्वं त्यजत, निर्म्मलं विशुद्धं धर्म्मं भजत सेवध्वं, यूयमिति शेषः ॥ १२२ ॥

(ज) शरणं—रक्षकः।

धर्म्मस्य सर्व्वसुखहेतुत्वं प्रदर्शयति धर्म्म इति।—ननु भोः। धर्म्मः रक्षितः लोकैः नियमतः प्रतिपालितः सन्, रक्षति लोकान् पालयति, हतः लोकैरसम्मानितः सन्, प्राणिनः जीवान् ध्रुवं निश्चितं, हन्ति विनाशयति; ततः तस्मात् कारणात् स धर्म्मः, न हन्तव्यः न विनाशयितव्यः, स एव धर्म्म एव, संसारिणां संसारवर्त्तिनां

धर्म्मः प्रापयतीह सम्पदमपि ध्यायन्ति तद् योगिनो
नो धर्मात् सुहृदस्ति नैव सुखिनो नो पण्डिता धार्म्मिकात् ॥१२३॥

तथा च,—

धर्म्मः शर्म्म भुजङ्गवास्तुकपुरीसारं विधातुं क्षमो
धर्म्मो मर्त्त्यजनस्य चापि ददते प्रीतिं सदा शाश्वतीम्।
धर्म्मः स्वर्गगिरौ निरन्तरसुखास्वादोदयस्यास्पदं
धर्म्मः किं न करोति मुक्तिवनितासम्भोगयोग्यां तनुम ? ॥१२४॥

अतो धर्म्मसङ्ग्रहार्थम् उपार्ज्जितं द्रव्यं सत्पात्रे दातव्यं बुद्धिमता। तस्मिन्नर्पितं तत् बहुगुणं भवति। तथा चोक्तम्,—

पात्रविशेषे न्यस्तं गुणान्तरं भजति वित्तमिह दातुः।
जलमिव समुद्रशुक्तौ मुक्तां सूते पयोदस्य ॥ १२५ ॥

---

जनानां, सर्व्वथा सर्व्वप्रकारेण, शरणम् आश्रयः; इह जगति, धर्म्मः सम्पदमपि ऐश्वर्य्यमपि, प्रापयति, अधिगमयति; योगिनः तापसाः, तत् तस्मात्, धर्म्ममेव, ध्यायन्ति चिन्तयन्ति; धर्म्मादन्यः सुहृत् मित्र, नो अस्ति, नास्तीत्यर्थः। धार्म्मिकात् धर्म्मपरायणादन्ये, नैव सुखिनः स्थिरसुखास्वादकाः, नो वा पण्डिताः प्रकृतज्ञानसम्पन्नाः, भवन्तीति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ १२३ ॥

धर्म्मस्य लोकत्रयलभ्यसुखदायित्वे का कथा, मुक्तिरपि तदायत्ता इति दर्शयितुमाह, धर्म्म इति।—धर्म्मः विहितकर्म्मानुष्ठानं, भुजङ्गानां सर्पाणां, वास्तुकस्य वासस्थानस्य, या पुरी प्रधाननगरी, स एव सारः स्थिरांशो यस्य तत् तादृशं यत् शर्म्म सुखं, तदपि विधातुं सम्पादयितुं, क्षमः योग्यः भवति। धर्म्मः मर्त्त्यजनस्य चापि मनुष्यलोकस्यापि, शाश्वतीं नित्यां, प्रीतिं सन्तोषं, सदा नित्यं, ददते ददाति [ "दद दाने" इति दानार्थकस्य आत्मनेपदि-ददधातो रूपमिदं बोध्यम् ] स्वर्गगिरौ स्वर्गनाम्ना ख्याते सुमेरुपर्वतेऽपि, धर्म्मः निरन्तरः निरवच्छिन्नः यः सुखास्वादः सुखानुभवः, तस्योदयस्य तत्प्रादुर्भावस्य, आस्पदम् आश्रयः, भवति। धर्म्मः किं न करोति ? सर्व्वमेव करोतीत्यर्थः। तनुं देहं, मुक्तिवनितायाः मुक्तिरूपायाः रमण्याः, सम्भोगयोग्यां सम्भोगसमर्थां, करोति। पाताले, मर्त्त्यलोके, स्वर्गे च, धर्म्म एव सकलकुशलमूलं, किमधिकं मुक्तिमपि धर्म्म एव सङ्घटयतीति भावः। वृत्तं पूर्व्ववत् ॥ १२४ ॥

सत्पात्रे दानं गुणोत्कर्षसम्पादकमिति दृष्टान्तप्रदर्शनद्वारा द्वाभ्यां श्लोकाभ्यामाह,

अपि च,—

न्यग्रोधस्य यथा वीजं स्तोकं सुक्षेत्रभूमिगम्।
बहुविस्तीर्णतां याति तद्वत् दानं सुपात्रगम्" ॥ १२६ ॥

इति बहुधा विचार्य्य श्रोत्रियान् (झ) ब्राह्मणानाहूय, तेषां सकाशात् हेमाद्रिप्रतिपादितानि (ञ) दानखण्डोक्त-गोदान-कन्यादान विद्यादान-भूदानोदकदानानि श्रुत्वा, तानि दानानि सत्पात्रे समर्प्य पवित्रान्तःकरणः सन् पुनर्विचारयति स्म,— "मयैतदनुष्ठितं दानव्रतादिकं तदा सफलं भविष्यति,—यदा द्वारावतीं (ट) गत्वा श्रीकृष्णं द्रक्ष्यामि" इति विचार्य्य श्रीनिवासपुरीं प्रति निर्गतः।

---

पात्रेति।—पात्रविशेषे योग्यायोग्यपात्रे, न्यस्त दत्तम्, इह लोके, दातुः दानकर्त्तुः, वित्त धन गुणान्तर भजति सदसद्गुण लभते, सत्पात्रे प्रदत्त धन सत्कार्य्याय व्ययित भवति, असत्पात्रे पतितम् असत्कर्म्म सम्पादयतीत्यर्थः, यथा पयोदस्य मेघस्य, जल समुद्रशुक्तौ सामुद्रिकशुक्तिमध्ये, पतित सत्, मुक्ता सूते उत्पादयति, तडागादिजातशुक्तौ पतितं तन्न जनयति परं वंशादौ पतित वंशलोचनादिक समुत्पादयति, यद्वा सामान्यवस्तुनि शुक्तौ तुच्छ मेघजलं पतित्वा बहुमूल्यं मुक्ताफल भवति, वृक्षादौ पतित न किमपि भवतीति भाव। आर्य्या वृत्तम ॥ १२५ ॥

अर्थान्तरेण तदेव समर्थयते, न्यग्रोधस्येति।—न्यग्रोधस्य वटवृक्षस्य, वीज यथा यद्वत् स्तोक स्वल्पमपि, सुक्षेत्रभूमिगम् उर्व्वरभूमिगत सत्, [ क्षेत्रभूमिरिति गोवलीवर्द्दन्यायेन विशेषबोधकतया न दोषावहमिति ध्येयम् ] बहुविस्तीर्णताम् अतिविस्तार, याति प्राप्नोति, तद्वत् सुपात्रग योग्यपात्रगत, दानमपि विस्तारं प्राप्नोति। पथ्यावक्त्र वृत्तम् ॥ १२६ ॥

(झ) श्रोत्रियान्—छन्दो वेदमधीते वेत्ति वा छन्दस्+घः श्रोत्रादेशः तान्, —"एकां शाखा सकल्पा वा षड्भिरङ्गैरधीत्य च। षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥" इत्युक्तलक्षणान् वेदाध्यायानुरतान् इति यावत्।

(ञ) हेमाद्रीति।—हेमाद्रिणा तदाख्यधर्म्मशास्त्रसङ्ग्रहकारेण, प्रतिपादितानि व्यवस्थापितानि।

(ट) द्वारावतीं—द्वाराणि चतुर्वर्णमोक्षद्वाराणि प्रशस्तान्यत्र मतुप्, संज्ञात्वेन

अथ समुद्रतीरं गत्वा नाविकमाहूय तस्मै भूरि द्रव्यं दत्त्वा, भिक्षुक-योगि-विदेशस्थजनानाथादीनारोप्य, (ठ) तैः सह प्रियवचनानि धर्म्मगोष्ठीः (ड) कुर्वन् यावत् गच्छति, तावत् समुद्रमध्ये कश्चित् क्षुद्रपर्वतो दृष्टः। तत्र पर्वते महानेकः देवालयः आसीत्। ततस्तं देवालयं गत्वा, देवीं भुवनेश्वरीं षोडशोपचारैरभ्यर्च्य, नमस्कृत्य च यावत्तस्या वामभागे दृष्टिं निदधाति, (ढ) तावच्छिन्नशीर्षं स्त्रीपुरुषयोर्युगलं दृष्ट्वा पुरःस्थितभित्तिभागे लिखितानि अक्षराणि अपश्यत्—"यदि कोऽपि परोपकारी महाधैर्य्यसम्पन्नः स्वकण्ठरुधिरेण (ण) भुवनेश्वरीमर्चयति, तदैतत् स्त्रीपुरुषयुगलं सजीवं भविष्यति" इति; एवं लिखितं वाचयित्वा (त) सविस्मयो धनदः पुनरपि नावमारुह्य द्वारावतीं गतः तत्र श्रीकृष्णं दृष्ट्वा,—

"एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय" ॥ १२७ ॥

---

पूर्वपददीर्घः, द्वारकाम् इत्यर्थः, तदुक्तं काशीखण्डे ७म अध्याये,—"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः॥" इति।

(ठ) आरोप्य—स्थापयित्वा, [ आ + रुह – णिच्, पुक्, ल्यप्, णिचो लोपः ]।

(ड) धर्म्मगोष्ठीः—धर्म्मालोचनाः, धर्म्मकथालापान् इत्यर्थः।

(ढ) निदधाति—अर्पयति, पातयतीत्यर्थः।

(ण) स्वकण्ठरुधिरेण—स्वग्रीवाकर्त्तनजेन रक्तेनेत्यर्थः।

(त) वाचयित्वा—पठित्वा।

श्रीकृष्णप्रणामस्य मुक्तिप्रदत्वं वर्णयति, एक इति।—एकोऽपि एकसङ्ख्याकोऽपि, कृष्णस्य प्रणामः प्रणतिः, कृतः अनुष्ठितः सन्, दशानाम् अश्वमेधानां तदाख्ययज्ञानाम्, अवभृथेन यज्ञान्तस्नानेन, तुल्यः समानः, एकवारं कृष्णप्रणामे कृते दशाश्वमेधफलसमफललाभो भवतीत्यर्थः। दशाश्वमेधी दशसङ्ख्याकाश्वमेधयज्ञानुष्ठायी जनः, पुनर्जन्म उत्पत्तिम्, एति लभते, कृष्णप्रणामी कृष्णप्रणामकारी जनस्तु, पुनर्भवाय पुनर्जन्मलाभाय, न, प्रभवति इति शेषः, तस्य पुनर्जन्म न जायते इति समुदितार्थः। वृत्तमुपजातिः॥ १२७॥

इति श्रीकृष्णप्रणामस्य मोक्षफलसाधनतां सञ्चिन्त्य, तं साष्टाङ्गं (द) प्रणम्य षोडशोपचारैः सम्पूज्य च निजनगरमगमत्। ततः सर्वान् बन्धून् श्रीकृष्णप्रसाददानेन सम्भाव्य, किमप्यपूर्वं (ध) वस्तु गृहीत्वा राजदर्शनार्थं गतः। यतः,—

रिक्तपाणिस्तु नो पश्येद्राजानं देवतां गुरुम्।
नैमित्तिकं विशेषेण फलेन फलमादिशेत्॥ १२८॥

तथा च,—

इष्टां भार्य्यां प्रियं मित्रं पुत्रं चातिकनीयसम्।
रिक्तपाणिर्न पश्येत् तु तथा नैमित्तिकं नृपम्॥ १२९॥

ततः राज्ञो हस्ते कृष्णप्रसादम् उपढौकनञ्च (न) दत्त्वोप-

---

(द) साष्टाङ्गम्—अष्टाङ्गेन सह वर्त्तमानं यथा स्यात् तथा, तल्लक्षणं यथा,—
"जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया।
शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥" इति।

(ध) श्रीकृष्णेति।—श्रीकृष्णस्य—विष्णोः, प्रसादः,—निर्म्माल्यं, नैवेद्यं वा, तस्य दानेन—अर्पणेन, सम्भाव्य—आहूय इत्यर्थः, किमपि—किञ्चित्, अपूर्वं—दुर्लभम्।

राजदर्शनार्थिना रिक्तपाणिना न गन्तव्यम् इत्यत्र प्रमाणमाह, रिक्तपाणिरिति।—रिक्तपाणिः शून्यहस्तः सन्, राजानं नृपं देवतां देवं, गुरुं दीक्षादिगुरुञ्च, नो पश्येत् न साक्षात्कुर्य्यात्, नैमित्तिकं दैवज्ञन्तु, विशेषेण नियमेन, रिक्तपाणिः न पश्येत्, फलेन फलद्वारा, फलं निजकार्य्यसाफल्यम्, आदिशेत् सम्पादयेत्॥ १२८॥

प्रसङ्गादन्येऽपि ये रिक्तपाणिना न द्रष्टव्यास्तान् प्रदर्शयति इष्टामिति।—इष्टां प्रियां, भार्य्यां पत्नीं, प्रियं प्रीतिपात्रं, मित्रं सुहृदम्, अतिकनीयसम् अत्यल्पवयस्कं, [छन्दोऽनुरोधात् कनीयसमिति। अल्पशब्दात् ईयसुनि कनादेशे इष्ठवद्भावात् निष्पन्नस्य कनीयस-शब्दस्य कनीयांसम् इति रूपं साधु। "इष्टां भार्य्यां कनीयांसं पुत्रं मित्रं प्रियं सदा" इति पाठं प्रकल्प्य तत्समाधेयम्] पुत्रं, नैमित्तिकं दैवज्ञञ्च, तथा नृपं राजानञ्च, रिक्तपाणिः शून्यहस्तः सन्, न पश्येत् तत्सम्मुखवर्त्ती न भवेत् इत्यर्थः॥ १२९॥

(न) उपढौकनं—सम्माननार्थं राज्ञे देयमुपहारम्।

विष्टः। ततो राजा क्षेमयात्रां (प) च पृष्ट्वा तं धनदं कमप्यपूर्व-वृत्तान्तमपृच्छत्। सोऽपि समुद्रमध्यस्थितभुवनेश्वरीदेवालय-वृत्तान्तमकथयत्।

तच्छ्रुत्वा सविस्मयो राजा तेन धनदेन सह तत् स्थानं गत्वा देवालये देवतावामभागे स्थितं कबन्धयुगलम् ( फ ) अपश्यत्। तदनन्तरं देवतां मनसि कृत्वा खड्गं यावत् स्वकण्ठे सम्पातनो-न्मुख करोति, तावत् कबन्धद्वयं सशिरस्कं सजीवञ्चाभवत्। देवताऽपि राज्ञो हस्तात् खड्गम् आकृष्याब्रवीत्,—"भो राजन्! प्रसन्नाऽस्मि, वरं वृणीष्व"। राजाऽब्रवीत्,—"भो देवि। यदि प्रसन्नाऽसि, तर्ह्यस्मै मिथुनाय ( ब ) राज्यं देहि"। ततो देव्या तस्मै मिथुनाय राज्यं दत्तम्। राजाऽपि धनदेन सह निज-नगरमगमत्"।

इति कथां कथयित्वा पुत्तलिका भोजं प्रति भणति,— "भो राजन्। त्वय्येवं चेत् परोपकारकरणशक्तिः विद्यते, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे मृतोज्जीवनं नाम सप्तमोपाख्यानम् ] ॥ ७ ॥

---

( प ) क्षेमयात्रा—यात्रायाः क्षेमं कुशलम् " तं क्षेमयात्रां तामित्यर्थः" ।

(फ) कबन्धयुगलं—छिन्नमस्तकदेहद्वयं, ('कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः)।

( ब ) मिथुनाय—स्त्रीपुरुषरूपाय।

इति सप्तमोपाख्यानम् ॥ ७ ॥

# अथ सरःपूरणं नाम अष्टमोपाख्यानम्।

अथ तथैव सिंहासनसमीपस्थः कौतुकरसरभसवशंवदो (क) धरित्रीपतिः पुत्तलिकयैकया समभिदधे,—"शृणु राजन्! विक्रमो राजा भूमण्डले प्रसिद्धः नानाविनोदाश्चर्य्यपूर्णः, (ख) तथा परकौतुकादिकं चारमुखेण जानाति। तथा चोक्तम्,—

गावो गन्धेन पश्यन्ति वेदैनैव द्विजातयः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ १३०॥

श्रूयतां राजन्!, यो राजा भवति, तेन सर्वोऽपि लोकसंस्थितिः (ग) ज्ञातव्या, सर्वस्य चित्तं बोद्धव्यं, प्रजाः सम्यक् पालनीयाः, दुष्टाः दण्डनीयाः, न्यायेन (घ) धनोपार्ज्जनं कर्त्तव्यम्, अर्थिषु समत्वं विधेयम्; तान्येव राज्ञः पञ्चमहायज्ञकर्माणि। उक्तञ्च,—

दुष्टस्य दण्डः सुजनस्य पूजा
न्यायेन कोषस्य च सम्प्रवृद्धिः।

---

(क) कौतुकेति।—कौतुकेन कुतूहलेन, यो रसो रागः, तेन यो रभसः औत्सुक्यं, तस्य वशंवदः तदायत्तः।

(ख) भूमण्डले—धरातले, प्रसिद्धः,—विख्यातः। नानेत्यादि।—नाना बहुविधः, यो विनोदः तोषकरपदार्थः, आश्चर्य्यञ्च अद्भुतञ्च, ताभ्यां पूर्णः सम्पन्न इत्यर्थः।

राज्ञां चारचक्षुष्ट्वे प्रमाणमाह, गाव इति।—गावः गोप्रमुखाः पशवः, गन्धेन गन्धद्वारा, पश्यन्ति जानन्ति, पदार्थान् निरूपयन्ति इत्यर्थः, द्विजातयः ब्राह्मणाः, वेदैनैव श्रुतिद्वारैव, पश्यन्ति राजानः नृपाः, चारैः प्रणिधिभिः, पश्यन्ति राज्यस्थसर्व्ववृत्तान्तं जानन्ति, इतरे अन्ये जनाः, चक्षुर्भ्यां नयनाभ्यां, पश्यन्ति॥ १३०॥

(ग) लोकसंस्थितिः,—लोकमर्य्यादा।

(घ) न्यायेन—सदुपायेन।

दुष्टदमन-शिष्टानुरञ्जनादिनैव राज्ञा पञ्चमहायज्ञफललाभो भवति इति प्रमापयितुं श्लोकमाह, दुष्टस्येति।—दुष्टस्य दुर्वृत्तस्य, दण्डः निग्रहः, सुजनस्य शिष्टस्य,

अपक्षपातोऽर्थिषु राज्यरक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ १३१ ॥

अपिच,—

किं दैवकार्य्याणि नराधिपानाम् ?
किं वा विरोधः परिपन्थिभिश्च ? ।
तद्दैवकार्य्यं जपयज्ञहोमाः
यदश्रुपाता न भवन्ति राष्ट्रे ॥ १३२ ॥

एवमेव विक्रमे राज्यं कुर्वति सति, एकदा चाराः भूमण्डलं परिभ्रम्य राजसकाशमागताः, राज्ञा पृष्टाः प्रोचुः,—"भो देव ! काश्मीरदेशे महाद्रव्यसम्पन्नः कश्चिद्वणिगास्ते। तेन वणिजा पञ्चक्रोशविस्तारं तड़ागमेकं खानितम् ; तन्मध्ये नवनिर्म्मित-दिव्यप्रासादे जलशयनस्य लक्ष्मीनारायणस्य ( ङ ) शयनं कारितं, परमुदकं न लगति। पुनः तेन वणिजा जलोद्गमनिमित्तं

---

पूजा समादरः, न्यायेन धर्म्मानुसारेण, कोषस्य धनस्य, सम्प्रवृद्धिः सम्यग्वर्द्धनम्, अर्थिषु विचारार्थमागतेषु याचकेषु वा जनेषु, अपक्षपातः निरपेक्षत्व, तुल्यदृष्टिरित्यर्थः, राज्यरक्षा राज्यस्य पालनञ्च, नृपाणा राज्ञां, पञ्चैव दुष्टदमनादिरूपा एते पञ्चैव, न तु स्मृत्युक्तस्वाध्यायपाठाग्निहोत्रयागातिथिपूजनपितृतर्पणबलिकर्म्माभिधेया इत्येवकारार्थः, यज्ञाः यागाः पञ्चयज्ञाः, कथिता. उक्ताः । उपजातिवृत्तम् ॥ १३१ ॥

कि बहुना, प्रजारञ्जनमेव राज्ञां जपहोमादीनि दैवकार्य्याणि नान्यत् किमपि, इति प्रतिपादयितुमाह, किमिति ।—नराधिपाना राज्ञा दैवकार्य्याणि जपयज्ञादीनि, किम् ? तदकरणेऽपि न दोषस्पृष्टा भवन्ति मनुजाधिपा इत्यर्थः। वा अथवा, परिपन्थिभि विपक्षैः सह, विरोधः विग्रहश्च, किम् ? न सोऽपि तादृगावश्यकः तेषाम् इत्यर्थः। राष्ट्रे राज्ये यत् अश्रुपाताः प्रजाना नयनजलपाताः न भवन्ति, तत् तदेव, तेषा जपयज्ञहोमा. जपयज्ञहोमस्वरूपं, दैवकार्य्यं, भवतीति शेषः। प्रजानामश्रुनिवारणमेव राज्ञां प्रधानकार्य्यं नान्यत् किमपि इति भावः। उपजातिवृत्तम् ॥ १३२ ॥

( ङ ) जलेति ।—जले शयन शय्या यस्य तस्य क्षीरोदशायिन इत्यर्थः। लक्ष्मीनारायणस्य—लक्ष्म्या सहितो नारायणः लक्ष्मीनारायणः तस्य सलक्ष्मीकविष्णोरित्यर्थः।

चक्रिणम् (च) उद्दिश्य ब्राह्मणैर्जपपूजाहवनमभिषेकादि च कारितं, तथाऽप्युदकं न समुद्गतम्। ततोऽतिखिन्नः सन् स वणिक् तड़ागपाल्युपरि (छ) उपविश्य प्रतिदिनं निश्वसिति, —'अहो! केनाप्युपायेनोदकं न प्रादुर्भवति, वृथा श्रमो जातः' इति।

एकदा तत्र तड़ागपाल्युपरि उपविष्टे श्रेष्ठिनि जलाऽऽगम-चिन्तामग्नचित्ते सति सहसा गगने अमानुषी (ज) वाक् उदचरत्, (झ)—"किमिति भो वणिक्पुत्र! निश्वसिषि? द्वात्रिंशल्लक्षणयुक्तपुरुषस्य (ञ) कण्ठरक्तेन यदा तड़ागं सिच्यते, तदाऽत्र विमलोदकम् उद्गमिष्यति, नान्यथा"। तच्छ्रुत्वा तेन वणिजा कासारपरिसरे महदन्नसत्त्रं (ट) कारितम्। तस्मिन् सत्त्रे भोक्तुं विदेशवासिनो जनाः सर्व्वे

(च) चक्रिण—विष्णुम्।

(छ) तडागेति।—तडागपाली तडागस्य सरोवरस्य, पाली सेतुः, जलनिर्गमन-स्थानमिति यावत्, यद्वा—पालो तटदेशः, ("पाहाड" इति वङ्गभाषा) तस्या उपरि।

(ज) अमानुषी—दैवीत्यर्थः।

(झ) उदचरत्—उद्गता।

(ञ) द्वात्रिंशल्लक्षणानि यथा काशीखण्डे एकादशाध्याये,—"पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः। त्रिपृथुर्लघुगम्भीरो द्वात्रिंशल्लक्षणस्त्विति॥ पञ्च दीर्घाणि शस्या(स्ता ?)नि यथा दीर्घाण्यथास्य वै। भुजौ नेत्रे हनू नासावक्षसी तनयस्य ते॥ त्वक्केशाङ्गुलिदशना सर्व्वाण्यङ्गुलिजान्यपि। तस्याश्च (एतस्य ?) पञ्च सूक्ष्माणि दिक्पालपदभाक् यथा॥ पाण्यङ्घ्रितलनेत्रान्त तालुजिह्वाऽधरोष्ठकम्। सप्ताकणञ्च सनखमस्मिन् राज्यसुखप्रदम्॥ कक्षाकुच्यलिकस्कन्धकरवक्त्रं षडुन्नतम्। तथाऽत्र दृश्यते बाले महदैश्वर्य्यभाक् यतः॥ ललाटकटिवक्षोभिस्त्रिविस्तीर्णो यथा ह्यसौ। सर्वतेजोऽतिगैश्वर्य्यं तथा प्राप्स्यति नान्यथा॥ ग्रीवाजङ्घामेहनैश्च त्रिभिर्ह्रस्वोऽयमीडितः। स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीर शिशुः शुभः॥" इत्येतद्द्वात्रिंशच्छुभलक्षणसमन्वितस्य पुंसः।

(ट) कासारपरिसरे—तड़ागसमीपवर्त्तिस्थाने, महत्—प्रभूतम्, अन्नसत्त्रम्—आगतेभ्यः सदा अन्नदानम्।

समायान्ति। तत्र स्थिताः अधिकारिणस्तेषां विदेशवासिनां पुरतः एवं वदन्ति,—'यः कोऽपि द्वात्रिंशल्लक्षणलक्षितः स्वकण्ठ-रुधिरेण तड़ागं सेचयिष्यति, तस्मै शतभारं (ठ) सुवर्णं दीयते' इति। तद्वचः सर्व्वे शृखन्ति, परं न कोऽपि तत् सहसा अङ्गीकुरुते, इति महच्चित्रं दृष्टम्"।

तेषां वचनं श्रुत्वा विक्रमार्को राजा स्वयं तत्र गतो जलाशयस्थस्य विष्णोर्महाप्रासादमतिमनोहरं तथा विशालं तड़ागं दृष्ट्वा विस्मयं गतो मनसि विचारयति,—"इदं तड़ागं यदि स्वकण्ठरक्तेन सेचयिष्यामि, तर्हि निःसंशयं जलैः परिपूर्णं भविष्यति, तदा च सकललोकस्योपकारो भविष्यति। इदं मम शरीरं सर्व्वथा वर्षशत स्थित्वाऽपि नाशमेव यास्यति, अतः सदसज्ज्ञानवता महता पुरुषेण शरीरे ममत्व न कार्य्यम्; परोपकारार्थं शरीरमपि दातव्यम्। उक्तञ्च,—

"शतमपि च समानां जीवितं धारयित्वा
शयनमधिशयानः सर्व्वथा नाशमेति।
सुलभविपदि देहे सर्व्वलोकैकनिन्द्यं
न विदधति ममत्वं ये हि लोकोत्तरास्ते॥ १३३॥

---

(ठ) शतभारं—भारः अष्टसहस्रतोलकपरिमाणं, तस्य शतं शतगुणितम् इति पूर्वनिपात.।

सर्व्वथा नश्वरे देहे परोपकाराय हेयत्वबुद्धिः महापुरुषलक्षणम् इति दर्शयितुमाह, शतमिति।—समाना वत्सराणा, शत वर्षशत व्याप्येत्यर्थ., जीवित प्राणान् धारयित्वा, अपि च शयनम् उत्तमशय्याम् अधिशयानो जनः, सर्वथा निश्चयमेव, नाशं मृत्युम्, एति प्राप्नोति, ये जनाः सुलभविपदि विपद्बहुले देहे तनौ, सर्वलोकानाम् एकं केवलम्, एकमात्रमित्यर्थः, निन्द्य निन्दनीय, ममत्वं ममताज्ञान, न विदधति न कुर्वन्ति, ते हि ते एव, लोकोत्तराः उत्तमलोकाः, आदर्शपुरुषा इति यावत्, भवन्तीति शेषः। अत्र मालिनी वृत्तम्॥ १३३॥

सर्वदैव रुजाऽऽक्रान्तं सर्वदैव शुचो गृहम्।
सर्वदा पतनप्रायं देहिनां देहपञ्जरम्॥ १३४॥
तैरेव फलमेतस्य गृहीतं पुण्यकर्म्मभिः।
विरज्य जन्मनः स्वार्थे यैर्न देहः कदर्थितः"॥ १३५॥

एवं विचार्य्य असौ पुरःस्थितप्रासादगतजलशयनस्य विष्णोः पूजां विधाय नमस्कृत्य च भणति,—"भो जलदेवते! त्वं द्वात्रिंशल्लक्षणयुक्तपुरुषस्य कण्ठरक्तं वाञ्छसि, तर्हि सहर्षमुपपन्नस्य (ड) मम अनेन कण्ठरक्तेन तृप्ता सती इदं तड़ागं जलैः परिपूर्णं कुरु" इत्युक्त्वा यावत् कण्ठे खड्गं प्रहारोद्यतं करोति, तावद्देवतया तया खड्गं धृत्वा भणितं,—"भो वीर। तव अनेन औदार्य्येण अहं प्रसन्नाऽस्मि, वरं वृणीष्व"। राजा अवदत्,—"देवि। यदि मम प्रसन्ना जाताऽसि, तर्हि इदं तड़ागं जलैः परिपूर्णं कुरु" इति। पुनर्देव्या भणितं,—"भो राजन्। त्वम् अस्मात् स्थानात् त्वरितं निर्गच्छ, ततो निर्गच्छन् यावत् पश्यसि, तावज्जलैरिदं परिपूर्णं भविष्यति"। तच्छ्रुत्वा राजा सत्वरं तड़ागपालीं गतः, तड़ागश्च जलैः परिपूर्णमभूत्।

देहस्य असारतां प्रतिपादयन् परोपकार एव देहधारणैकफलम् इति द्वाभ्यां प्रदर्शयति, सर्व्वदेति।—देहिनां शरीरिणां देहपञ्जरं देहरूपपञ्जरं, सर्व्वदैव सदैव, रुजा रोगेण, आक्रान्तम् अभिभूतं, सर्वदैव सततमेव, शुचः शोकस्य, गृहम् आश्रयभूतं, सर्वदा सदा, पतनप्रायं विनाशोन्मुखं, भवतीत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ १३४॥

तैरेवेति।—यैः जनैः, जन्मनः विरज्य पुनर्जन्मग्रहणं प्रति विरक्तीभूय, स्वार्थे निजार्थसाधनायैव देहः शरीरं, न कदर्थितः न निन्दापात्रीकृतः, तैरेव तादृशैरेव, पुण्यकर्म्मभिः पुण्यं कर्म्म येषां तैः तथाभूतैः पुरुषैः, एतस्य देहस्य, फलं साफल्यं, गृहीतं प्राप्तम्। ये हि परार्थे जीवनोत्सर्गं कुर्वन्ति, तेषामेव शरीरस्य साफल्यमिति भावः। पथ्यावक्त्रं वृत्तम्॥ १३५॥

(ड) सहर्षमिति।—हर्षेण सह वर्त्तमानं सहर्षं सानन्दम्, उपपन्नस्य प्राप्तस्य, स्वयमुपस्थितस्येत्यर्थः।

एवम् आश्चर्य्यमवलोक्य सहर्षः राजा विक्रमोऽपि स्वनगरमगमत्"।

एवं कथां कथयित्वा पुत्तलिका भोजराजमवादीत्,—"भो राजन्। त्वयि एवमौदार्य्यं तथा परोपकारसत्त्वसारप्रभृतयो (ढ) गुणा विद्यन्ते चेत्, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे सत्त्वपूरणं नाम अष्टमोपाख्यानम्] ॥ ८ ॥

## अथ राक्षसवधो नाम नवमोपाख्यानम्।

अथ भोजः समुत्कण्ठितचेताः सिंहासनं प्रतिगच्छन् सङ्गृह्य हस्तयोः निवार्य्यमाणः पुत्तलिकयाऽपरया निजगदे,—"भो राजन्। एतत्सिंहासने तेनैव अध्यासितव्यं, यस्य विक्रमतुल्यं शौर्य्यौदार्य्यादिकमस्ति"। भोजेनोक्तं,—"भोः पुत्तलिके! कथय तस्य शौर्य्यौदार्य्यवृत्तान्तम्"। सा वदति "नरलोकाधिनाथ! विक्रमे राज्यं कुर्वति भट्टिर्मन्त्री बभूव, उपमन्त्री गोविन्दः, चन्द्रशेखरः सेनापतिः, त्रिविक्रमः पुरोहितः। तत्र त्रिविक्रमस्य पुत्रः कमलाकरः, स पितुः प्रसादात्

(ढ) परेति।—परेषाम् अन्येषां, स्वभिन्नानामित्यर्थः उपकारः साहाय्यं, सत्त्वं चित्तौदार्य्यं, सारः दार्ढ्यं, ते प्रभृतयः आदिभूता येषां तथाविधाः।

इति अष्टमोपाख्यानम् ॥ ८ ॥

घृतौदनं (क) भुक्त्वा वस्त्र-भूषण-ताम्बूलादिना सम्पुष्टशरीरो (ख) विषयसुखमनुभवन् तिष्ठति स्म।

एकदा पित्रोक्तं,—"रे पुत्र! ब्राह्मणजन्म प्राप्य त्वया कथमेवं स्वेच्छावृत्त्या स्थीयते? अयमात्मा जन्मशतं नानायोनिं प्राप्नोति। ब्राह्मणकुले जन्म महता पुण्येन लभ्यते, तल्लब्ध्वाऽपि किमेवं त्वं दुष्टाचारो जातः? सर्वदा वहिरेव वससि, भोजनकाले गृहमायासि, अनुचितमेतत् त्वया क्रियते। तवायं विद्याभ्यासकालः; अस्मिन् काले विद्याभ्यासं न करोषि चेत्, उत्तरत्र महान् मनःसन्तापो भविष्यति। यतः,—

ये बालभावे न पठन्ति विद्यां
कामातुरा यौवननष्टचित्ताः।
ते वृद्धकाले परिभूयमाणाः
दहन्ति गात्रे शिशिरेऽपवस्त्राः॥ १३६॥

किञ्च,—येषां न विद्या न तपो न दानं
न चापि शीलं न गुणो न धर्म्मः।

---

(क) घृतौदनम्—आज्यमिश्रान्नम्। ["भक्ष्येण मिश्रीकरणम्" (२।१।३५ पा०) इति समासः]।

(ख) सम्पुष्टशरीरः,—सवर्द्धिततनुः।

अविद्य सर्वे एव परिभवन्ति, इति दर्शयितुमाह, ये इति।—ये जनाः, बालभावे बाल्यावस्थायां विद्या शास्त्र, न पठन्ति नाभ्यस्यन्ति, कामातुराः कामपीड़िताश्च सन्तः, यौवने यौवनावस्थाया, नष्ट विपर्य्यस्तं चित्त मनः येषा ते तथाभूताः, भवन्ति, ते तादृशजनाः, वृद्धकाले वार्द्धकावस्थायां, परिभूयमाणाः दुःखैरभिभूयमानाः सन्तः, शिशिरे शीतकाले, अपवस्त्राः वस्त्रहीनाः जना इव, गात्रे देहे, दहन्ति दाहवत् शरीरशोषकं क्लेशं लभन्ते। शीतकाले बस्त्रहीनाः यथा क्लिश्यन्ति, तथा मनस्तापमनुभवन्ति इत्यर्थः। इन्द्रवज्रा वृत्तम्॥ १३६॥

विद्याहीनाः मानवाकाराः पशव एव इत्यर्थे श्लोकमाह, येषामिति।—येषा जनानां, विद्या शास्त्रज्ञानं, न नास्ति, तपः तपस्याऽनुष्ठानं, न नास्ति, दानं सत्पात्रे

ते मर्त्यलोके खलु भारभूताः
मनुष्यरूपेण मृगाश्चरन्ति ॥ १३७ ॥

अस्मिन् संसारे पुरुषस्य विद्यायाः परं भूषणं नास्ति।

उक्तञ्च,—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते न हि धनं, विद्याविहीनः पशुः ॥१३८॥

अपि च,—

किं कुलेन विशालेन विद्याहीनस्य देहिनः ?।
अकुलीनोऽपि यो विद्वान् सर्वैरेव स पूज्यते ॥ १३९ ॥

---

अर्पणं, न नास्ति, शीलं सुशीलताऽपि न च विद्यते, गुणः सद्गुणः, न नास्ति धर्म्मश्च न नास्ति भारभूता. जगतो भारस्वरूपाः, ते तादृशजनाः मर्त्यलोके इह जगति, खलु निश्चये, मनुष्यरूपेणोपलक्षिताः मनुष्यरूपधरा इत्यर्थः, मृगाः पशवः चरन्ति विचरन्ति। विद्यातपोदानादिविहीना. मनुष्या. पशव एवेति तात्पर्य्यम्। इन्द्रवज्रावृत्तम् ॥ १३७ ॥

विद्यायाः सर्वसुखाकरत्व वर्णयति विदेति।—विद्या शास्त्रज्ञान, नाम सम्भावनाया, नरस्य मनुष्यस्य, अधिकम् उत्कृष्ट, स्वसौन्दर्य्यादिति शेष, रूपं सौन्दर्य्यं, व्याध्यादिभिरहार्य्यत्वादिति भावः, प्रच्छन्नगुप्त गोपनभावेन रक्षितम्, अतिगुप्तमित्यर्थः, धनं सम्पदिव, चौरादिभिरहार्य्यत्वादिति भाव. . विद्या भोगकरी भोगसम्पादिका, यश.सुखकरी यशसा कीर्त्तिसञ्चारेण सुखकरी सुखसम्पादिका विद्या गुरूणां पितादीनाम्, अपिरत्वाध्यापार्य्यः, गुरुः गुरुस्थानीया, पूज्येत्यर्थः, विदेशगमने प्रवासे, विद्या, बन्धुजन. सहायः, तद्वदुपकारिकेत्यर्थ. , विद्या पर महत्, दैवत परमदेवतावत् आराध्या इत्यर्थः, विद्या राजसु नृपेषु, राजसन्निधानेष्वित्यर्थः पूज्यते आद्रियते, राजानो हि विद्वांसं समाद्रियन्ते इति भाव, न हि धनं, पूज्यते इति शेषः, तस्मात् विद्याविहीन. मूर्खः जनः, पशुः पशुतुल्यः, गण्यते इति शेषः, एवञ्च विद्या सर्वथैव अर्ज्जनीयेति भावः। शार्दूलविक्रीडित वृत्तम् ॥ १३८ ॥

विदुषः सर्वपूज्यता न तु कुलीनस्य इति दर्शयितुमाह किमिति।—विद्याहीनस्य मूर्खस्य, देहिनः पुरुषस्य, विशालेन उन्नतेन, कुलेन वंशमर्य्यादया, किम् ? किं फलम् ?

रे पुत्र! यावदहं जीवामि, तावत् त्वया विद्यैवाभ्यसनीया। यतः,—

यावत् स्वस्थमिदं शरीरमरुजं, यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता, यावत् क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्य्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः? ॥ १४० ॥

अपि च, अभ्यस्ता विद्या तव सकलमपि बन्धुकृत्यं करिष्यति। उक्तञ्च,—

"मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्त्तिं
किं किं न साधयति कल्पलतेव विद्या?" ॥ १४१ ॥

---

न किमपीत्यर्थः, यो जनः, विद्वान् पण्डितः, सः अकुलीनोऽपि नीचकुलोत्पन्नोऽपि, सर्वैरेव सकलैरेव जनैः, पूज्यते समाद्रियते। अनुष्टुप् वृत्तम् ॥ १३९ ॥

विद्याऽभ्यासस्य आत्मश्रेयोजनकतया अवश्यकर्त्तव्यतां प्रतिपादयितुं कालावधिसूचकं श्लोकमुदाहरति, यावदिति।—यावत् इदं शरीरम्, अरुजं नीरोगम्, अत एव स्वस्थं प्रकृतिस्थं, यावत् जरा वार्द्धकं, दूरतः दूरे, तिष्ठेदिति शेषः, जराऽऽगमनस्य विलम्बोऽस्तीति भावः, यावच्च इन्द्रियाणां चक्षुरादीनां, शक्तिः सामर्थ्यम्, अप्रतिहता अविलुप्तेत्यर्थः, यावत् आयुषः जीवितकालस्य, क्षयः अवसानं, न, तावदेव विदुषा विज्ञेन, आत्मश्रेयसि निजमङ्गले, विद्याऽर्ज्जनादिरूपे इत्यर्थः, महान् अतिशयः, प्रयत्नः चेष्टा, कार्य्यः विधेयः, भवने गृहे, सन्दीप्ते सम्यक् प्रज्वलिते सति कूपखननं कूपं खनित्वा तन्निर्वापणार्थं जलानयनमिति यावत्, प्रति उद्दिश्य उद्यमः उद्योगः, कीदृशः? न फलद इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १४० ॥

विद्यायाः सर्वाभावसाधकत्वं सर्व्वबन्धुत्वञ्च वर्णयति, मातेव इति।—विद्या मातेव जननीव, रक्षति पालयति, पितेव जनक इव, हिते हितानुष्ठाने, नियुङ्क्ते प्रेरयति, कान्तेव पत्नीव, खेदं क्लेशम्, अपनीय दूरीकृत्य च, अभिरमयति सुखयति, लक्ष्मीं श्रियं, तनोति वर्द्धयति, दिक्षु दिङ्मण्डलेषु, कीर्त्तिं यशश्च, वितनोति विस्तारयति,

एवं तत् पितृवचनं श्रुत्वा पश्चात्तापयुक्तः कमलाकरः 'यदाऽहं सर्व्वज्ञो (ग) भविष्यामि, तदैव पितरं स्वमुखं दर्शयिष्यामि' इत्युक्त्वा काश्मीरदेशं जगाम। तत्र चन्द्रमौलिभट्टोपाध्यायसमीपं गत्वा दण्डवत् प्रणम्योक्तवान्,—"भोः स्वामिपादाः! अहं मूर्खः, भवतां नामधेयं गुणगौरवञ्च श्रुत्वा विद्याऽभ्यासार्थमागतः। मयि कृपां विधाय यथा मे विद्या भवेत्, तथा विधेयं श्रीमद्भिः" इति पुनर्दण्डवत् प्रणाममकरोत्। ततस्तैरङ्गीकृते अहर्निशं तेषां शुश्रूषामकरोत्। यतः,—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थेनोपपद्यते॥ १४२॥

एवं शुश्रूषां कुर्वतो महान् कालो गतः। एकदा उपाध्यायः तस्योपरि कृपां विधाय सिद्धसारस्वतमन्त्रोपदेशं (घ) कृतवान्। तेनोपदेशेन सर्व्वज्ञो भूत्वा स कमलाकर उपाध्यायस्यानुज्ञां गृहीत्वा स्वनगरं प्रतिगच्छन् मार्गवशात् काञ्चीनगरम् अवाप। तत्र राजा नरसेनः। "तस्य नगर्यां नरमोहिनीनाम्नी काचित् वारवनिता अस्ति, सा रूपेण अद्वितीया; तां यः कोऽपि पश्यति, स कामज्वरपीड़ितः उन्मादावस्थां प्राप्नोति; यः पुनः सम्भोगान्ते तया सह निद्राति, तस्य रक्तं विन्ध्याचलवासी कश्चिद्राक्षसः तत्र आगत्य पिबति, तदा स निर्जीवो

---

विद्या कल्पलतेव, किं किं न साधयति? अपि तु सर्व्वमेव साधयतीत्यर्थः। वसन्ततिलक वृत्तम्॥ १४१॥

(ग) सर्व्वज्ञ,—पण्डितः।

विद्यालाभस्य उपाय वर्णयन्नाह, गुर्व्विति।—गुरुशुश्रूषया गुरुसेवया, वा अथवा, पुष्कलेन प्रचुरेण, धनेन अर्थेन, अथवा विद्यया निजविद्याविनिमयेन, विद्या उपपद्यते लभ्यते, चतुर्थैः पूर्व्वोक्तत्रिविधोपायातिरिक्तान्योपायैः, न, उपपद्यते इत्यनेनान्वयः॥१४२॥

(घ) सिद्धेत्यादि।—सरस्वत्या अयं सारस्वतः, स चासौ मन्त्रश्चेति सारस्वतमन्त्रः, सिद्धस्य अमोघस्य, सारस्वतमन्त्रस्य उपदेशः तम्।

भवति” इति किंवदन्तीं (ङ) श्रुत्वा तत्र तिष्ठन्, कमलाकरो ऽप्येतत् कौतुकं स्वचक्षुषा प्रत्यक्षीकृत्य निजनगरमगमत्। सुचिरकालात् परं तं विद्याविनयादिगुणभूषितं गृहे प्रत्यागतं दृष्ट्वा मातापित्रोः महान् हर्षो जातः। तथा च—

विद्याविहीना बहवोऽपि पुत्राः
कल्पाऽऽयुषः सन्तु पितुः किमेतैः?।
क्षयिष्णुना वाऽपि कलावता वा
तस्य प्रमोदः शशिनेव सिन्धोः॥ १४३॥

द्वितीयदिवसे स्वपित्रा स राजभवनं गत्वा राज्ञे आशीर्वादम् अकरोत्, सभायां निजवैदग्धञ्च (च) अदर्शयत्। ततो विक्रमार्केण असौ वस्त्रादिना सम्भाव्य पृष्टः,—“भोः कमलाकर! त्वं यत्र देशे गतः, तत्र किं चित्रं दृष्टम्?” तेनोक्तं,—“भो राजन्! तत्र देशे किमपि न दृष्टं, परं प्रत्यागमनसमये काञ्चीनगरे अपूर्वमेकं कौतुकं दृष्टम्”। राज्ञोक्तं,—“किं दृष्टं तत् कथय”। कमलाकरेणोक्तं,—“नरसेनभूपतिशासिते काञ्चीनगरे नरमोहिनी

---

(ङ) किंवदन्ती—जनश्रुतिम्।

पुत्रे श्लाघनीयगुणिनि सति तमालोक्य पित्रोरानन्द समर्थयमान आह, विद्येति।—कल्पायुषः कल्पान्तजीविनः, दीर्घायुष इत्यर्थः, विद्याविहीना मूर्खाः, पुत्राः तनयाः, बहवः अनेकसङ्ख्यका अपि, सन्तु वर्त्तन्ताम्, एतैः तादृशैः पुत्रैरित्यर्थः, पितुः जनकस्य, किं किम्प्रयोजनम्? न किमपि इत्यर्थः, वाशब्दः त्वर्थे, तेन किन्तु इत्यर्थः। क्षयिष्णुना क्षयशीलेन, अल्पायुषेत्यर्थः, पक्षे—कृष्णपक्षे कलाक्षयविशिष्टेन अपि, [कल्पान्तस्थायित्वे तु हर्षाधिक्यमेव इत्यपिना सूच्यते] कलावता वा कलाविद्याविशिष्टेनैव, पक्षे—षोडशकलायुक्तेन, पूर्णेन इत्यर्थः, शशिना चन्द्रेण, सिन्धोः समुद्रस्येव, तस्य पितुः, तादृशेन पुत्रेणेति शेषः, प्रमोदः हर्षः हृदयोद्वेलनमित्यर्थः, भवति इति शेषः। सम्भावितसमीपक्षयपूर्णिमाचन्द्रवत् अल्पाऽऽयुषाऽपि विदुषा सुतेन पितुः प्रमोदः इति भावः। उपजाति वृत्तम्॥ १४३॥

(च) निजवैदग्ध्यं—निजपाण्डित्यम्।

नाम्नी सुरूपा काचिद्वारवनिता (छ) अस्ति, यस्तां पश्यति, स उन्माददशां प्राप्नोति ; यः पुनः रजन्यां तया सह स्वपिति, तस्य रक्तं विन्ध्याचलवासी कश्चिद्राक्षसः तत्रागत्य पिबति ; ततः स निर्जीवो भवति। एतत् कौतुकं मया दृष्टम्"। तत् श्रुत्वा राज्ञा भणितं,—"यद्येवं, त्वं तर्हि आगच्छ, तत्र गच्छावः"।

अथ तेन सह राजा काञ्चीनगरमागत्य कौतुकान्वितः नरमोहिनीगृहं गत्वा, तस्या रूपं दृष्ट्वा विस्मयं प्राप्तः। तया च पादप्रक्षालनाभ्यङ्गसुगन्धिपुष्पादिना (ज) सम्भावितः ; उक्तश्च,—"भो राजन्! अद्य अहं धन्या जाताऽस्मि, मम गृहञ्च श्लाघ्यमभूत् भवच्चरणप्रसादेन"। ततः सा तस्मै वीटिकां दत्तवती। राजाऽपि तां गृहीत्वा तया सह मधुरैरनिन्दिताऽऽलापैः कियन्तं कालमतिवाहितवान्। ततः सा राजानं सविनयमभाषत,—"भो राजन्! स्थानमिदं नापच्छन्नम् ; अत्र मदन्यः यः कश्चित् रात्रौ स्वपिति, उषसि (झ) स गतप्राणः परिलक्ष्यते, तत्प्रतिविधातुं भवते निवेदितम् ; अत्र यदुचितं तत् सम्पाद्यताम्" इति उक्त्वा विरराम। ततः प्राग्विदित-वृत्तान्तः राजा अभयदानपुरःसरम् अवोचत्—"त्वमधुना सुखं निद्रामाश्रय, तत्प्रतिकारार्थं यथोचितं यतिष्ये" (ञ) इति।

एवं रात्रेरतिक्रान्ते प्रथमप्रहरे नरमोहिनी निद्रां गता ; द्वितीयप्रहरावसाने घोरदर्शनः करालदशनः नरशोणित-

(छ) वारवनिता—वारवधूः वेश्या इति शेषः।

(ज) पादेति।—पादप्रक्षालन—चरणधावनम्, अभ्यङ्गः,—स्निग्धपुष्पसाराणाम् ("आतर" इति भाषा) परिच्छदेषु सचणं, सुगन्धिपुष्प—मनोहरगन्धवत् यूथिकादि-कुसुमं, तानि आदीनि यस्य तेन।

(झ) उषसि—प्रत्यूषे।

(ञ) यथोचितं—यथाकर्त्तव्यम्, यतिष्ये—सचेष्टो भविष्यामि।

लोलुपो (ट) राक्षसो विकटाऽऽरावेण (ठ) यावत् तत्र समायातः, सजागरः निर्भीकचेताः राजा तं युद्धावकाशमदत्त्वा निशित-करवालेन तत्क्षणादेव निजघान।

तत्पतनशब्देन सा नरमोहिनी व्यपगतनिद्रा, हतं राक्षसं दृष्ट्वा सप्रश्रयं (ड) राजानं भणति,—"भो राजन्! यन्मादृशेषु अकिञ्चनजनेषु भवादृशः सम्यगनुकम्पते नाम, तत्केवलं निशा-करकिरणानामिव महतां श्रेष्ठनीचजनेषु समवृत्तितैव (ढ)। भवत्प्रसादात् अहं निर्भया जाता; अद्य प्रभृति (ण) मे राक्षसोप-द्रवो गतः। त्वत्कृतोपकारात् कथमहमुत्तीर्णा (त) भवामि?" राज्ञा तु "बहुप्राणिनां प्राणविनाशिनं दुराचारं निशाचरं हत्वा मया प्रतिपालितः (थ) स्वकीयो धर्मः, तेनैव सञ्जातः मे महान् परितोषः; नास्ति ते करणीयम् अत्र किमपि" इत्युक्त्वा कमलाकरेण सह उज्जयिनीं प्रति प्रतस्थे"।

इमां कथां कथयित्वा पुत्तलिका भोजराजमवादीत्,—"भो राजन्! त्वयि एवं धैर्यशौर्य्यौदार्य्यादिकं विद्यते चेत्, तदस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे राक्षसवधो नाम नवमोपाख्यानम्] ॥ ९ ॥

---

(ट) घोरदर्शनः,—भीषणाकृतिः; करालदशनः,—विकटदन्तः। नरेति।—नराणां मानवानां शोणितेषु रक्तेषु लोलुपः लुब्धः।

(ठ) विकटाऽऽरावेण—कर्कशनिर्घोषेण, हुङ्कारेण इत्यर्थः।

(ड) सप्रश्रयम्—सविनयम्।

(ढ) समवृत्तितैव—तुल्यदर्शितैव, अपक्षपातित्वमेवेति यावत्।

(ण) प्रभृति—आरभ्य।

(त) उत्तीर्णा—मुक्ता इत्यर्थः।

(थ) प्रतिपालितः,—संरक्षितः।

इति नवमोपाख्यानम् ॥ ९ ॥

## यज्ञलब्धफलदानं नाम दशमोपाख्यानम् ।

पुनरन्या पुत्तलिका तदेव सिंहासनं समारोढ़कामं भोजं कथयति,—"श्रूयतां राजन् ! विक्रमार्के राज्यं कुर्वति, कश्चित् योगी उज्जयिनीं प्रति आगतः । स च वेदशास्त्र-वैद्यक-ज्योतिष-भरतशास्त्रादिसकलकलाविचक्षणः, (क) किं बहुना ? तत्-सदृशोऽन्यो नास्ति । स साक्षात् सर्वज्ञ एव ।

एकदा विक्रमो राजा तस्य प्रसिद्धिं श्रुत्वा, तमाह्वातुं पुरोहितं प्रेषितवान् । पुरोहितोऽपि तदन्तिकं गत्वा नमस्कृत्याऽब्रवीत्,—"भोः स्वामिन् ! राजा भवन्तमाह्वयति, तत्रागन्तव्यम्" । योगिनोक्तं,—"तर्हि गम्यते" । ततः तत्र गत्वा राजानं प्रति भणितं,—"भो राजन् । त्वं चेत् मन्त्रसाधनं करिष्यसि, तर्हि तेन जरामरणरहितो भविष्यसि" । राज्ञोक्तं, —"त्वं मन्त्रं ममोपदिश, अहं मन्त्रं साधयिष्यामि" । ततो योगिना तस्मै मन्त्रमुपदिश्य भणितं,—"भो राजन् ! अमुं मन्त्रं ब्रह्मचर्य्येण वर्षमेकं पठित्वा दूर्वाङ्कुरैर्दशांशहवनम् अग्नौ करिष्यसि, ततः पूर्णाहुतिसमये होमकुण्डात् कश्चित् पुरुषः फलहस्तो निर्गत्य फलमेकं तुभ्यं दास्यति । तत्फलभक्षणेन त्वं जरामरण-रहितो वज्रकायश्च भविष्यसि" इति राज्ञे मन्त्रमुपदिश्य स योगी निजस्थानं गतः ।

राजाऽपि ग्रामाद्बहिर्वर्षमेकं ब्रह्मचर्य्येण मन्त्रं पठित्वा, दूर्वादलैर्दशांशं होममग्नौ कृत्वा यावत् पूर्णाहुतिं करोति,

---

(क) वेदशास्त्रेति ।—वेदशास्त्रम्—ऋगादित्रयीविद्या, वैद्यकम्—आयुर्वेद-शास्त्रं, ज्योतिष—ग्रहनक्षत्रादीनां गतिस्वरूपनिर्णायकं पञ्चाङ्गशास्त्रं, भरतशास्त्रं—नाट्यशास्त्रं तानि आदीनि यासां तासु, सकलासु—सर्व्वासु, कलासु—चतुःषष्टि-विद्यासु, विचक्षणः,—अभिज्ञः ।

तावद्धोमकुण्डात् कश्चित् पुरुषो विनिर्गत्य दिव्यमेकं फलं राज्ञे ददौ। राजाऽपि तत् फलं गृहीत्वा पुरं प्रविश्य यदा राजमार्गं समायाति, तदा कुष्ठव्याधिना विशीर्णावयवः (ख) कश्चिद् ब्राह्मणो राज्ञे आशिषं प्रयुज्याऽवदत्,—"भो राजन्! राजा नाम लोकस्य मातापित्रादिस्थाने नियोजितः। उक्तञ्च,—

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम्।
राजा माता पिता चैव सर्वस्यार्तिहरो गुरुः॥ १४४॥

यतः त्वं विश्वस्यार्त्तिं परिहरसि, अतः ममापि आर्त्तिं नाशय। अनेन व्याधिना मम शरीरं विनश्यति, शरीरनाशादनुष्ठानमपि नष्टं, यतः सर्व्वस्यापि धर्म्मकार्य्यस्य शरीरमेव साधनम्। तर्हि ममैतच्छरीरं निरामयम्, (ग) उपभोग्यञ्च यथा भवति, तथा कर्त्तव्यम्"। तद्ब्राह्मणवचनं श्रुत्वा, स राजा तस्मै तत् फलं ददौ। ततो ब्राह्मणः फलं भुक्त्वा निरामयः दिव्यदेहश्च परं सन्तोषं प्राप्य निजस्थानं गतः। राजाऽपि स्वभवनमगमत्"।

इति कथयित्वा पुत्तलिका भोजराजमवादीत्,—"भो राजन्! एवमौदार्य्यं धैर्य्यञ्च त्वयि चेत् विद्यते, तर्ह्यस्मिन् सिंहासने समुपविश"। तच्छ्रुत्वा राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे यज्ञलब्धफलदानं नाम दशमीपाख्यानम्]॥ १०॥

---

(ख) विशीर्णावयवः,—क्षयिताङ्गः।

राज्ञो मातापित्रादिस्थानीयत्वे प्रमाणभूतं महाजनभाषितमाह,—राजा इति।—राजा नृपः, अबन्धूनां बन्धुहीनानां, बन्धुः मित्रस्वरूपः, अचक्षुषां चक्षुर्हीनानां, चक्षुः चक्षुःस्वरूपः, राजा एव, माता पिता च मातापितृस्वरूपः, सर्व्वस्य सकलजनस्य, आर्त्तिहरः दुःखनाशकः, गुरुः, गुरुरिव भवतीति शेषः। पथ्यावक्त्रं वृत्तम्॥ १४४॥

(ग) निरामयं—निर्नास्ति आमयः व्याधिर्यत्र तत्, रोगशून्यमित्यर्थः।

इति दशमीपाख्यानम्॥ १०॥

# रक्षोभीतिवारणं नाम एकादशोपाख्यानम् ।

अथ भोजे समाचङ्क्रम्यमाणे सिंहासनं पुत्तलिकाऽन्या कथयति,—"भो राजन्! श्रूयतां,—विक्रमे राज्यं कुर्व्वति, भूमण्डले पिशुनः (क) तस्करश्च पापकर्म्मनिरतो नासीत्। अन्यच्च,—यस्य राज्ञः सदा राज्यभारचिन्ता बलवद्वैरिविजयचिन्ता च अस्ति, स रात्रौ निद्रामपि नाधिगच्छति। उक्तञ्च,—

अर्थातुराणां न पिता न बन्धुः
कामातुराणां न भयं न लज्जा।
चिन्तातुराणां न सुखं न निद्रा
क्षुधातुराणां न बलं न तेजः ॥ १४५ ॥

अयं विक्रमादित्यो राजा तथाविधो न भवति। सर्व्वान् अर्थिभूभुजः स्वपादपद्माश्रितान् (ख) विधाय आज्ञाप्रदानेन राज्यं करोति। उक्तञ्च,—

आज्ञामात्रफलं राज्यं ब्रह्मचर्य्यफलं तपः।
ज्ञानमात्रफला विद्या दत्तभुक्तफलं धनम् ॥ १४६ ॥

---

(क) पिशुनः—खलः।

राज्यादिचिन्तातुराणा निद्रासुखराहित्ये शिष्टोक्तिमाह, अर्थेति।—अर्थातुराणां धनासक्तानां जनाना, न पिता, न बन्धुः, अर्थात् पिता बन्धुश्च तैर्नापेक्ष्यते इति भाव, कामातुराणां कामासक्ताना, भय लज्जा च नास्ति इति शेषः, चिन्तातुराणां चिन्ताऽऽसक्ताना, सुख निद्रा च न भवति इति शेषः, क्षुधातुराणां क्षुधार्त्तानां, बलं तेजश्च न विद्यते इति शेषः। वृत्तमुपजातिः ॥ १४५ ॥

(ख) अर्थिभूभुजः—"मा राज्यभ्रष्टं मा कुरु, स्वपदे स्थापय" इत्यादिरूपप्रार्थनाकारिनृपान्। स्वपादेति।—स्वस्य पादपद्म चरणकमलम्, आश्रयन्ति ये ते तान् शरणागतानित्यर्थः।

अथ.इत्याज्ञत्वमेव राज्ञो राजत्वम् इति प्रदर्शयितु शिष्टभाषितमाह, आज्ञेति।—

एकदा स राज्यभारं मन्त्रिषु निधाय स्वयं योगिवेशेन देशान्तरं निर्गतः। यत्राऽऽत्मनश्चित्तस्य सुखं भवति, तत्र कतिचिद्दिनानि तिष्ठति, यत्राश्चर्य्यं पश्यति, तत्रापि कालं नयति।

एवं पर्य्यटन् स एकस्मिन् दिवसे यदा महाऽरण्यमध्ये प्राविशत्, तदा सूर्य्योऽस्तं गतः। तद्दृष्ट्वा राजा वृक्षमूलमेकमाश्रित्य रात्रौ स्थितः। तस्य वृक्षस्योपरि वृद्धः चिरञ्जीविनामा कश्चित् पक्षिराज आसीत्। तस्य पुत्राः पौत्राश्च देशान्तरं गत्वा स्वोदरपूरणं विधाय, सायंकाले प्रत्येकमेकैकं फलमादाय, वृद्धाय तस्मै चिरञ्जीविने प्रतिदिनं प्रयच्छन्ति। तथा च,—

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥ १४७ ॥

ततो रात्रौ चिरञ्जीवी सुखेनोपविष्टस्तान् पक्षिणः अपृच्छत्।—राजाऽपि वृक्षमूले स्थितस्तद्वचः शृणोति।—"भोः पुत्राः! युष्माभिर्नानादेशान् पर्य्यटद्भिः किं चित्रं दृष्टम्?" तत्रैकेन पक्षिणा भणितं,—"मया किमप्याश्चर्य्यं न दृष्टम्; परम् अद्य मम चेतसि महादुःखं भवति"। चिरञ्जीविनोक्तं,—"तत् कथय किं निमित्तं दुःखम्"। तेनोक्तं,—"केवलं कथनेन किं

---

राज्य राजत्वम् आज्ञामात्रं फलं यस्य तादृशम्, अव्याहताज्ञत्वं राज्यफलमित्यर्थः, तपः तपस्या, ब्रह्मचर्य्यं फलं यस्य तादृशं भवति, ब्रह्मचर्य्यपालनं तपःफलमित्यर्थः, विद्या शास्त्राभ्यासः, ज्ञानमात्रं फलं यस्याः तादृशी ज्ञानोदयफला विद्या इत्यर्थः, धनं, सम्पद् दत्तं दानं, भुक्तं भोगश्च फलं यस्य तादृशं भवति, दानभोगादिकं धनसञ्चयफलमित्यर्थः। पथ्यावक्त्रं वृत्तम् ॥ १४६ ॥

वृद्धमातापितृपोषणस्य येन केनाप्युपायेन अवश्यकर्त्तव्यतां प्रतिपादयति मनुवचनेन, वृद्धाविति।— वृद्धौ स्थविरौ, मातापितरौ जननीजनकौ, साध्वी पतिव्रता भार्य्या पत्नी, शिशुः सुतः बालपुत्रश्च, एते अकार्य्यशतं कृत्वाऽपि अन्याय्यकार्य्यानुष्ठानेनापि, भर्त्तव्याः पालनीयाः, मनुः एतत् इति शेषः अब्रवीत् कथयामास। पथ्यावक्त्रं वृत्तम् ॥ १४७ ॥

भवति ?" वृद्धेनोक्तं,—"भोः पुत्र। यो दुःखी, स सुहृदि (ग) दुःखं निवेद्य सुखी भवति"।

तस्य वाक्यं श्रुत्वा स दुःखकारणं कथयति,—"भोः तात! श्रूयताम्,—अस्ति उत्तरदेशे शैवालघोषो नाम पर्व्वतः। तत्-पर्व्वतसमीपे पलाशनगरमस्ति; तस्मिन् पर्व्वते स्थितः कश्चित् राक्षसः प्रतिदिनं नगरमागत्य सम्मुखागतं य कञ्चन मानुषं स्त्रियं बालकादिकं वा पर्व्वते नीत्वा भक्षयति। एकदा स नगरवासिभिः जनैः उक्तः,—"भो बकासुर! त्वं यथेच्छं सम्मुख-पतितं यं कमेवं मा भक्षय, वयं तुभ्यं प्रतिदिनमाहारार्थम् एकं मानवं दास्यामः"। तद्वचः तेनाङ्गीकृतम्।

तदनन्तरं तत्रत्यो जनः प्रतिदिनं गृहक्रमेणैकैकं मानुषं तस्मै प्रयच्छति। एवं महान् कालो गतः। अद्य पूर्व्वजन्मनि सञ्जातसौहार्द्दस्य मम मित्रस्य कस्यचित् ब्राह्मणस्य वारः (घ) समायातः; तस्यैक एव पुत्रः। पुत्रं ददाति चेत्, सन्ततिच्छेदो भविष्यति; आत्मानं प्रयच्छति चेत्, भार्य्या विधवा भविष्यति; वैधव्यं पुनर्महादुःखम्। पत्नीं दास्यति चेत्, आश्रमभ्रंशो भवति। तेषां दुःखेनाहं महादुःखी। इति मम महद् दुःख-कारणम्।"

तस्य तद्वचनं श्रुत्वा तत्रत्यैः पक्षिभिर्भणितम्,—"अहो! अयमेव सुहृत्, यः सुहृदो दुःखेन स्वयं दुःखी भवति। एतदेव मित्रत्वम्। उक्तञ्च,—

सुखिते सुखी सुहृदि यः दुःखिनि दुःखी च स बन्धुर्भवति।
उदिते मुदितः सिन्धुः शशिन्यस्तमयति सुक्षीणः॥ १४८॥

---

(ग) सुहृदि—आत्मीये।

(घ) वारः,—क्रमप्राप्तसमयः।

मित्रलक्षणमाह, सुखिते इति।—यो जनः, सुहृदि मि०, सुखिते आनन्दिते

अपि च,—

क्षीरेणात्मगतोदकाय हि गुणा नष्टा: पुरा तेऽखिला:
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुत:।
गन्तुं पावकमुन्मनस्तदभवत् दृष्ट्वा तु मित्राऽऽपदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी" ॥ ४९॥

इति पक्षिणो वच: श्रुत्वा विहङ्गरवार्थविद् राजा तत्र नगरे वध्यशिला (ङ) समीपे गत:। तत्र ब्राह्मणं निरीक्ष्य, अभयं

---

सति, सुखी आनन्दवान्, दु:खिनि क्लेशवति सति, दु:खी क्लिष्टश्च भवति, स: तादृशो जन:, बन्धु: बन्धुपदवाच्य:, अत्र दृष्टान्तमाह—शशिनि चन्द्रे, उदिते सति, सिन्धु: समुद्र:, मुदित. हृष्ट: उद्वेल इत्यर्थ. भवति, अस्तमयति अस्तं गते सति, सिन्धु: सुक्षीण: विशेषक्षयप्राप्तो भवति। चन्द्रोदये सागराम्भसो वृद्धे: अस्तगमने च ह्रासात्, उभयो: प्रकृष्टबन्धुत्व प्रसिद्धम्। आर्य्या वृत्तम् ॥ १४८ ॥

सन्त: मित्रव्यापदं कदापि न सहन्ते, कदाचित् व्यापन्ने तमनुगच्छन्त्येव न परिहरन्ति, इति प्रदर्शयितु क्षीरोदकयोर्मैत्रीम् उत्प्रेक्षया वर्णयति, क्षीरेणेति।—क्षीरेण दुग्धेन, आत्मगतोदकाय निजाश्रितस्य जलस्य निमित्त, पुरा प्रथमं ते प्रसिद्धा:, ["ते" इत्यत्र "स्वे" इति पाठो युक्त: ] अखिला: समस्ता:, गुणा: गाढतामिष्टतादय., नष्टा: परित्यक्ता:, हि निश्चये, [ "नष्टा·" इत्यत्र "दत्ता." इति ग्रन्थान्तरीयपाठे—अर्पिता:, मित्रप्रीत्यर्थं स्वगुणसम्पत् तस्मै प्रदत्ता इत्यर्थ:, ] , तेन पयसा जलेन, मित्रेणेति भाव:. क्षीरे सुहृदि इति भाव., तापम् आवर्त्तनसमये वह्निसन्तापरूपं मित्रक्लेशम्, अवेक्ष्य दृष्ट्वा, कृशानौ वह्नौ आत्मा निजदेह: अपिशब्दोऽत्र ऊह्य:, हुतो हि आहुति: दत्त एव, मित्रक्लेशप्रतिकारार्थं नीरमेव प्रथम वाष्पाकारेण स्वविग्रहमत्यजत् इति भाव: ; तत् क्षीरन्तु, मित्राऽऽपद मित्रस्य जलस्य आपद विपद, दृष्ट्वा विलोक्य पावकम् अग्निं, गन्तु पतितुम्, उन्मन: उत्सुकं, सन्तापक्षुब्धान्तराऽऽवर्त्तसमन्वितमित्यर्थ:, अभवत् ; तेन जलेन वारिणा, युक्त सत् शाम्यति निवर्त्तते च. सता सज्जनानान्तु, मैत्री मित्रता, पुन. निश्चितम्, ईदृशी एवंविधा, क्षीरजलयो: सदृशी इत्यर्थ:, भवतीति शेष:। शार्दूलविक्रीडित वृत्तम् ॥ १४९ ॥

( ङ ) वध्यशिला—वधनिमित्तस्थापितप्रस्तरखण्ड:।

दत्त्वा, खगृहं सम्प्रेष्य च, तत्समीपस्थे सरोवरे स्नात्वा बध्य-शिलायामुपविष्ट।

तस्मिन् समये राक्षसः समागत्य, प्रहसितवदनं पुरुषं दृष्ट्वा विस्मितस्तं वदति,—"भो महासत्त्व! (च) अत्र शिलायां प्रतिदिनं यः उपविशति, स मदागमनात् पूर्व्वमेव म्रियते। त्वं पुनः महाधैर्य्यसम्पन्नः प्रहसितवदनो दृश्यसे। यस्य मरणकालः समायाति, तस्येन्द्रियाणि ग्लानिं प्राप्नुवन्ति; त्वं पुनरधिकां कान्तिं प्राप्य प्रहससि। तर्हि कथय को भवान्" इति। राजा भणति,—"मया परार्थमेतच्छरीरं दीयते स्वेच्छया, अतो न मे कापि ग्लानिः; यद् भवतु, किमनेन विचारेण तव? स्वमात्मनः समीहितं (छ) कुरु"।

तदा राक्षसेन स्वमनसि विचारितम्,—"अहो!! साधुरयं, यः आत्मनः सुखभोगेच्छां विहाय परदुःखेन दुःखी भूत्वा अत्र एति। उक्तञ्च,—

त्यक्त्वाऽऽत्मसुखदुःखेच्छां सर्व्वसत्त्वगुणैषिणः।
भवन्ति परदुःखेन साधवोऽत्यन्तदुःखिनः॥ १५०॥
परोपकारनिरता ये स्वार्थसुखनिस्पृहाः।
जगद्धिताय जनिताः साधवस्त्वीदृशा भुवि"॥ १५१॥

---

(च) महासत्त्व!—उदारचरित!

(छ) समीहितं—वाञ्छितम्।

सन्तः स्वसुखनिरपेक्षाः परदुःखप्रहरणैषिणः भवन्ति, इत्यत्र प्रमाणभूतं श्लोकमुदाहरति, त्यक्त्वेति।—साधवः सुजनाः, सर्व्वसत्त्वानां सकलप्राणिनां, गुणैषिणः उत्कर्षकामिनः सन्तः, आत्मनः स्वस्य सुखदुःखेच्छां सुखदुःखाभिलाषं, त्यक्त्वा विहाय, परदुःखेन अन्यजनदुःखेन अत्यन्तदुःखिनः अतिशयं दुःखिताः भवन्ति। इतः १५७ श्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तम्॥ १५०॥

परहितव्रता एव साधवः इति दर्शयति, परेति।—ये जनाः, स्वार्थसुखे स्वार्थं स्वप्रयोजनमेव सुखं तस्मिन्, निजसुखार्थकर्म्मणि, निस्पृहाः निष्कामाः सन्तः, परोप-

एवं विचार्य्य स राजानमब्रवीत्,—"भोः महापुरुष! त्वं सर्व्वस्यार्त्तिहरो गुरुः, यतः त्वं विश्वस्यार्त्तिं परिहरसि। परार्थं शरीरं प्रयच्छतस्तवैव एतच्छरीरं श्लाघ्यम् (ज)। कुतः,—

पशवोऽपि हि जीवन्ति केवलं स्वोदरम्भराः।
तस्यैव जीवितं श्लाघ्यं यः परार्थे हि जीवति १५२ ॥

भवादृशां परोपकारिणामेतच्चित्रं न भवति। तथा चोक्तम्,—

किमत्र चित्रम्? यत् सन्तः परानुग्रहतत्पराः।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ १५३ ॥

भो महासत्त्व! अनेनैव परोपकारेण त्वं सर्वाः सम्पदः प्राप्नोषि। यदुक्तम्,—

परोपकारव्यापारो पुरुषो यः प्रजायते।
सम्पदं स समाप्नोति परत्राऽपि परं पदम्" ॥ १५४ ॥

---

कारनिरताः परेषामुपकारपरायणाः, भवन्तीति शेषः, ये च जगद्धिताय जगतां मङ्गलाय, जनिताः उत्पन्नाः, ईदृशाः एतादृशाः जनाः, भुवि पृथिव्यां साधवः सज्जनाः, कथ्यन्ते इति शेषः ॥ १५१ ॥

(ज) श्लाघ्यं—प्रशंसनीयम्।

परोपकारिण एव श्लाघनीया इत्येवमर्थं श्लोकेनाह, पशव इति।—केवलम् एकमात्रं स्वोदरम्भराः आत्मोदरपूरणकारिणः पशवोऽपि हि, जीवन्ति प्राणान् धारयन्ति, न तेन काचित् प्रशंसा इति भावः, यो हि जनः, परार्थे परोपकाराय, जीवति, तस्यैव जनस्य, जीवितं जीवनं, श्लाघ्यं प्रशंसनीयं, भवतीति शेषः ॥ १५२ ॥

सतां परोपकारशीलत्वे न किमपि वैचित्र्यम् इति प्रतिपादयति, चन्दनदृष्टान्तद्वारेण, किमिति।—सन्तः साधुजनाः, यत् परानुग्रहतत्पराः परोपकारनिरताः, भवन्ति, अत्र किं चित्रं किमाश्चर्य्यम्? न किमपीत्यर्थः, चन्दनद्रुमाः चन्दनवृक्षाः, स्वदेहशैत्याय निजदेहस्य शीतलतानिमित्तं, न हि नैव, जायन्ते उत्पद्यन्ते, परन्तु परेषां शैत्याऽऽपादनायैव जायन्ते इत्यर्थः ॥ १५३ ॥

परोपकारिणाम् इहामुत्र श्रेयोभाक्त्वं दर्शयति, परोपकारेति।—यः पुरुषः जनः, परोपकार एव व्यापारः कार्य्यं यस्य तादृशः सन्, प्रजायते उत्पद्यते, स पुरुषः,

एवं भणित्वा पुनः राजानमब्रवीत्,—"भो महासत्त्व! तवाहं तुष्टोऽस्मि, वरं वृणीष्व"। राज्ञोक्तं,—"भो राक्षस! त्वं यदि मम प्रसन्नोऽसि, तदद्य प्रभृति मनुष्यभक्षणं परित्यज। अन्यमपि मया अभिधीयमानमुपदेशं शृणु।—

यथाऽऽत्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा।
तस्मान्मृत्युभयात् तेऽपि त्रातव्याः प्राणिनो बुधैः॥ १५५॥

अन्यच्च,—

जन्म-मृत्यु-जरा-दुःखैर्नित्यं संसारसागरे।
क्लिश्यन्ति जन्तवो घोरे मर्त्यास्त्रस्यन्ति मृत्युतः॥ १५६॥
मरिष्यामीति यद् दुःखं पुरुषस्योपजायते।
शक्यते नानुमानेन तद्वक्तुं केनचित् क्वचित्॥ १५७॥

---

सम्पदं धनम्, इहलोके इति शेषः, समाप्नोति लभते, परत्र परलोकेऽपि. परं श्रेष्ठं, पदं स्थानं विष्णुलोकादिकं, समाप्नोति इति पूर्वेण सम्बन्धः॥ १५४॥

प्राणवतां प्राणिवधः सर्व्वथा न विधेयः, इत्यर्थं उपदेशश्लोकमाह, यथेति।— आत्मनः स्वस्य, प्राणाः यथा यद्वत्, प्रियाः प्रेमास्पदानि, सर्वेषां सकलानां, प्राणिनां जीवानामपि, तथा तद्वत्, प्राणाः प्रियाः, तस्मात् कारणात्, बुधैः विज्ञजनैः, तेऽपि अन्येऽपि, प्राणिनः जीवाः, मृत्युभयात् मरणभयात्, त्रातव्याः रक्षणीयाः॥ १५५॥

दुःखैकफलेऽस्मिन् संसारे प्राणिना मरणभयं सर्वेभ्योऽपि अधिकम्, अतो मृत्युभयात् सर्वेऽपि प्राणिनो यथाशक्ति त्रातव्या इति प्रतिपादयितुं श्लोकद्वयमाह, जन्मेत्यादि।— घोरे भीषणे, संसारसागरे संसाररूपसमुद्रे, वर्त्तमानाः इति शेषः, मर्त्याः मरणधर्म्मिणः, जन्तवः प्राणिनः, नित्यं सततं जन्ममृत्युजरादुःखैः गर्भक्लेशेन, मृत्युक्लेशेन, जराक्लेशेन च, क्लिश्यन्ति क्लेशं प्राप्नुवन्ति, तथापि मृत्युतः मरणात्, त्रस्यन्ति बिभ्यति, एवंविधक्लेशभोगसत्त्वेऽपि जीवनमतिप्रियं मन्यन्ते इति भावः॥ १५६॥

मरिष्यामीति।—पुरुषस्य जनस्य, मरिष्यामीति ज्ञानेन, यद्दुःखं यादृक् क्लेशः, उपजायते उत्पद्यते, तत् दुःखम्, अनुमानेन वक्तुम् अनुमानेनावधार्य्य कथयितुं, केनचित् केनापि, क्वचित् कुत्रापि, न शक्यते। तत्कथयितुमशक्यमित्यर्थः॥ १५७॥

तथा च—

यथा भवेज्जीवितमात्मनः प्रियं
तथा परेषामपि जीवितं प्रियम्।
निरीक्ष्यते जीवितमात्मनो यथा
तथा परेषामपि रक्ष जीवितम्" ॥ १५८ ॥

राज्ञा इति निरूपितः (क) राक्षसः तदाप्रभृति जीवमांसं तत्याज। राजा च स्वनगरीं प्रत्यगात्"।

इमां कथां कथयित्वा पुत्तलिका भोजराजं प्रति अब्रवीत्,—"त्वयि एवं परोपकार-दयादयः गुणाः विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे रक्षोभीतिवारणं नाम एकादशोपाख्यानम् ] ॥ ११ ॥

---

आत्मवत् परजीवनमपि द्रष्टव्यं रक्षणीयञ्च इत्यर्थं उपदेशश्लोकमाह, यथेति।—आत्मनः स्वस्य, जीवितं जीवनं, यथा यादृक्, प्रियं प्रेमाऽऽस्पदं, भवेत् स्यात्, परेषाम् अन्येषामपि, जीवितं जीवनं, तथा प्रियं तादृगेव प्रेमास्पदं भवति, आत्मनः स्वस्य, जीवितं यथा यादृक्, निरीक्ष्यते विलोक्यते, परेषाम् अन्येषामपि, जीवितं तथा तादृक् विविच्य, रक्ष पालय। वंशस्थविलं वृत्तम् ॥ १५८ ॥

(क) निरूपितः,—उपदिष्ट इत्यर्थः।

इति एकादशोपाख्यानम् ॥ ११ ॥

———

## ब्राह्मणीशापमोचनं नाम द्वादशोपाख्यानम्।

अथ पुनस्तथैव प्रवर्त्तमानं भोजमन्या पुत्तलिकाऽवदत्.—"भो राजन्! श्रूयतां,—विक्रमादित्ये राज्यं कुर्व्वति सति तस्य नगरे भद्रसेनो नाम कश्चित् वणिगासीत्। तस्य सम्पदां मर्य्यादा नाभूत्, परं स स्तोकोऽपि व्ययशीलो नासीत्। ततः काले गच्छति भद्रसेनो मृतः। तस्य पुत्रः पुरन्दरः पितुः सर्व्वस्वं प्राप्य तस्य यथेच्छं त्यागं (ख) कर्त्तुमुपक्रान्तवान्।

ततः एकदा तस्य प्रियमित्रेण धनदेन भणितं.—"भोः पुरन्दर! त्वं वणिक्पुत्रो भूत्वाऽपि महाक्षत्रियकुमार इव धनव्ययं करोषि, नैतत् वणिक्कुलसम्भवस्य लक्षणं भवति। वणिक्पुत्रेण येन केनापि उपायेन सङ्ग्रहः कर्त्तव्यः, वराटिकाया (ग) अपि व्यये कुशलेन भवितव्यम्। उपार्ज्जितं द्रव्यं कदाचित् कस्याञ्चिदापदि पुरुषस्योपयोगं (घ) व्रजति। अतो बुद्धिमता आपदर्थे धनसङ्ग्रहः कर्त्तव्यः। उक्तञ्च,—

आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि" ॥ १५९ ॥

---

(ख) त्याग—व्ययम्।

(ग) वराटिकाया.,—कपर्द्दकस्य।

(घ) उपयोगं—कार्य्यसाधकताम्।

आपदर्थे धनसङ्ग्रहस्य कर्त्तव्यताया प्रमाणभूता शिष्टोक्तिमुदाहरति, आपदिति।—आपदर्थे आपद उद्धरणार्थं, धनं सम्पदं, रक्षेत् सञ्चिनुयात्, धनैरपि धनव्ययेनापि, दारान् स्त्रियं, रक्षेत् प्रतिपालयेत्, दारैरपि स्त्रियाऽपि, धनैरपि धनव्ययेनापि, सततं नित्यम्, आत्मानं रक्षेत् त्रायेत। सर्व्वस्वेनापि आत्मरक्षा कर्त्तव्येत्यर्थः। पथ्यावक्त्रं वृत्तम् ॥ १५९ ॥

एतद्वचनं श्रुत्वा पुरन्दरः प्राह,—"भो धनद! 'उपार्जितं वित्तं कदाचित् कस्याञ्चिदापदि उपयोगाय भवति' इति यो वदति, सः विचारशून्यः प्रतिभाति। यदा आपदः आयास्यन्ति, तदा उपार्ज्जितमपि धनं नङ्क्ष्यति। अतो बुद्धिमता पुरुषेण गतस्य शोकः, आगामिनोऽर्थस्य चिन्ता च न कार्य्या, परं वर्त्तमानमेव विचारणीयम्। उक्तञ्च,—

गतशोको न कर्त्तव्यो भाविनं नैव चिन्तयेत्।
वर्त्तमानेषु कार्य्येषु चिन्तयन्ति विचक्षणाः॥ १६०॥

यद्भवितव्यं तदनायासेनापि भविष्यति। यद्गन्तव्यं तत् गमिष्यत्येव। तथा चोक्तम्,—

भवितव्यं भवत्येव नारिकेलफलाम्बुवत्।
गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत्" ॥ १६१॥

एवं पुरन्दरवचनेन धनदो निरुत्तरोऽभूत्। ततः पुरन्दरः पितृद्रव्यस्य सर्व्वस्य व्ययमकरोत्। ततो निधनं पुरन्दरं बन्धु-

---

वर्त्तमानमेव चिन्तनीयं, किं भूतं, किं वा भविष्यति इति चिन्ता न कार्य्या इत्यर्थे केनचिदुक्तं श्लोकमुदाहरति, गतेति।—गतशोकः गतस्य अतीतस्य कार्य्यस्य, शोकः अनुशोचनं, न कर्त्तव्यः न विधेयः, भाविनं भविष्यद्विषयं, नैव चिन्तयेत न भावयेत् एव, विचक्षणाः कुशलाः जनाः, वर्त्तमानेषु विद्यमानेष्वेव, कार्य्येषु कर्म्मसु विषयेषु, चिन्तयन्ति भावयन्ति, हिताहितमिति शेषः। पथ्यावक्त्रं वृत्तम्॥ १६०॥

भवितव्यगन्तव्ययोरवश्यम्भावित्व-गामित्वे उपमाप्रदर्शनेन प्रमाणयितुमुक्तं श्लोकमाह, भवितव्यमिति।—भवितव्यम् अवश्यम्भावि वस्तु, भवत्येव निश्चयेन भवति, अत्र उपमामाह, नारिकेलफलाम्बुवदिति।—यथा नारिकेलफलमध्ये कस्याप्यज्ञातमारेण जलं भवति तद्वत्, प्रयत्नमन्तरेणापि तस्य सद्भावादिति भावः। गन्तव्यं यच्च अवश्यं विनाशि, तत् गजेन भुक्तं यत् कपित्थ तद्वत् [ कपित्थस्य फलम् इति कपित्थम् अण्, "फले लुक्' ( ४।३।१६३ पा० ) इति तद्धितलोपः, "त्रिष्वीनं प्रसवे सर्व्वम्" इत्यमरोक्तेः नपुंसकता ] गजभुक्तस्य कपित्थफलस्यान्तः यथा शून्य भवति तद्वत् इति भावः, गतं नष्टमेव, इति आहुः कथयन्ति, पण्डिता इति शेषः। पथ्यावक्त्रं वृत्तम्॥ १६१॥

मित्रादयो न मानयन्ति। किं बहुना, तेन सह गोष्ठीम् (ङ) अपि न कुर्व्वन्ति। तदा पुरन्दरेण स्वमनसि चिन्तितं—"मम हस्ते यावत् धनमासीत्, तावदेते मित्रादयो मम सेवका इव आसन् इदानीं मया सह वाक्यालापमपि न कुर्व्वन्ति। अथवा यस्यार्थोऽस्ति, तस्यैव मित्रादयः सन्ति। उक्तञ्च,—

यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः।
यस्यार्थः स पुमान् लोके यस्यार्थः स च पण्डितः॥१६२॥

अपि च,—

पुंसि क्षीणधने न बान्धवजनः पूर्व्वं यथा वर्त्तते
स्थित्या केवलयाऽऽश्रितः परिजनः स्वच्छन्दतां मुञ्चति।
लोलत्वं सुहृदः प्रयान्ति बहुशः किं चापरैर्भाषितैः
भार्य्याया ह्यपि निश्चितं गतधने वादो मुहुः स्याद्भृशम्॥१६३॥

---

(ङ) गोष्ठी—परस्परालापम्।

अर्थवानेव जगति आदरणीयः दरिद्रो न कैरपि आद्रियते, अपि तु पराभूयते इत्यर्थे प्रमाणप्रदर्शनपरं श्लोकचतुष्टयमाह, यस्येति।—यस्य जनस्य, अर्थः धनं, विद्यते इति शेषः, तस्य जनस्य मित्राणि सुहृदः, सन्ति सर्व्वे एव सुहृदः भवन्तीत्यर्थः, यस्यार्थः विद्यते, तस्य बान्धवाः स्वजनाः, विद्यन्ते, निर्धनस्य तु मित्रादयः वार्त्तामपि न पृच्छन्तीति भावः, यस्यार्थः विद्यते, स जनः, लोके जगति, पुमान् पुरुषपदवाच्यः, भवतीति शेषः, यस्यार्थः विद्यते, स जनः, पण्डितश्च विद्वानपि, लोकैः कथ्यते इति शेषः, अर्थयुक्तः मूर्खोऽपि पण्डितवत् लोके पूज्यो भवतीति फलितार्थः। अनुष्टुप् वृत्तम्॥ १६२॥

पुंसीति।—पुंसि पुरुषे, क्षीणधने धनहीने सति बान्धवजनः स्वजनः, पूर्वं यथा पूर्व्ववत्, न वर्त्तते न तिष्ठति न पूर्व्ववत् व्यवहारं करोति इत्यर्थः, परिजनः परिवारवर्गः, केवलया एकया, स्थित्या वर्त्तनेन, आश्रितः रक्षितः सन्, धनहीनतया भरणपोषणादिना प्रतिपालयितुमशक्यत्वादिति भावः, स्वच्छन्दता स्वाभिप्रायानुसरणं, मुञ्चति त्यजति; नाममात्र तदधीने तिष्ठति, किन्तु तस्य अभिप्रायानुरूपं न करोतीति भावः; सुहृदः मित्राणि, लोलत्वम् अस्थिरत्व, प्रयान्ति गच्छन्ति अपरैः अन्यैः, बहुशः भाषितैः अधिककथाभिः, किम्? किं फलम्? भार्य्याया अपि सर्व्वथा स्ववशगायाः पत्न्या अपि,

किञ्च,—

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति॥ १६४॥

तथाच,—

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय क्षीणे कस्यास्ति सौहृदम्?॥ १६५॥

अतो दारिद्र्यात् मरणमेव वरम्। उक्तञ्च,—

उत्तिष्ठ क्षणमेकमुद्वह सखे! दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम्।
इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवः
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः॥१६६॥

---

गतधने धनहीने सति, पत्यौ इति शेषः, हि निश्चितं, मुहुः वार वार, भृशम् अतिशयं, वादः कलहः, स्यात् भवेत्। शार्दूलविक्रीडित वृत्तम्॥ १६३॥

यस्येति।—यस्य नरस्य, वित्तं धनम्, अस्ति स नरः कुलीनः श्रेष्ठकुलोत्पन्नः, स पण्डितः विद्वान् स श्रुतवान् शास्त्रज्ञः, गुणज्ञश्च भवति, स एव वक्ता वाग्मी, स च दर्शनीयः सुन्दरश्च भवति, अतः सर्वे गुणाः कुलीनत्वादिसकलगुणाः, काञ्चन धनम् एवेत्यर्थः, आश्रयन्ति आश्रित्य वर्त्तन्ते। उपजाति वृत्तम्॥ १६४॥

वनानीति।—मारुतः वायु, वनानि दहतः वनदाहं कुर्व्वतः प्रबलस्येति भावः, वह्नेः अग्नेः, सखा मित्र, सहाय इत्यर्थः, भवति, स एव मारुतः, दीपनाशाय क्षुद्र-दीपस्य नाशकारी भवति, क्षीणे दुर्ब्बले जने, कस्य सौहृदं मित्रता, अस्ति? वर्त्तते? न कस्यापीति भावः। पथ्यावक्त्रं वृत्तम्॥ १६५॥

किं बहुना, दारिद्र्यात् मरणमपि वरमिति प्रतिपादनपरं श्लोकमाह, उत्तिष्ठेति।—सखे! हे मित्र! उत्तिष्ठ, क्षणमेकं कियत्क्षण, मम दारिद्र्यभारं दरिद्रताख्यं भारम्, उद्वह धारय, चिरात् दीर्घकालात् आरभ्येति शेषः, श्रान्तः क्लान्तः, दारिद्र्यभारेण इति भावः, अहं तावत् यावत् त्वं मम दारिद्र्यभारं वहसि तत्कालपर्य्यन्त, त्वदीयं भवदीय, मरणजं मृत्युजनितं, सुखं सेवे अनुभवामि, श्मशाने धनवर्ज्जितस्य निर्धन

तथा च,—

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम्।
मृतमश्रोत्रियं दानं मृतो यागस्त्वदक्षिणः॥ १६७॥

अपि च,—

माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते।
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत्
तस्मादर्थमुपार्ज्जयस्व च सखे! ह्यर्थस्य सर्व्वे वशाः॥१६८॥

इत्येवं विचार्य्यासौ देशान्तरं गतः। ततो नानादेशं परिभ्रमन् हिमाचलसमीपस्थितं नगरमेकमगमत्। तस्य नातिदूरे

---

जनस्य, इति एवम्प्रकारम्, उक्तं कथितं, वचनं वाक्यं, श्रुत्वा आकर्ण्य, शवः मृतदेहः, दारिद्र्यात् मरणं वरं वरम् अतीवश्रेयः, (वरं वरमिति वीप्सा, मरणात् अपि दारिद्र्यस्य क्लेशभूयस्त्वज्ञापनार्थम् इति ज्ञेयम्) इति ज्ञात्वैव एव विचार्य्यैव, तूष्णीं स्थितः निरुत्तरः तिष्ठति। शार्दूलविक्रीडितं वृत्तम्॥ १६६॥

दरिद्रस्य जीवनमपि निरर्थकम् इत्याह, मृतः इति।—दरिद्रः धनहीनः, पुरुषः जनः, मृतः मृततुल्यः, अप्रजं सन्तानोत्पादवर्जितं, [समासविधेरनित्यत्वात् "नित्यमसिच् प्रजामेधयोः" (५।४।१२२ पा०) इति प्रजाशब्दादसिच् निषेधः] मैथुनं स्त्रीसङ्गः, मृतं निष्फलम्, अश्रोत्रियं दानम् अश्रोत्रियाय दत्तं दानं, मृतं निरर्थकम्, अदक्षिणः दक्षिणावर्जितः, यागः यज्ञश्च, मृतः निष्फलः। पथ्यावक्त्रं वृत्तम्॥ १६७॥

धनहीनस्य सर्व्वैरेव उपेक्ष्यत्वं दर्शयितुमाह मातेति।—माता निन्दति, पिता न अभिनन्दति नाद्रियते, निर्धनपुत्रमिति शेषः, भ्राता न सम्भाषते नालपति, निर्धनं भ्रातरमिति शेषः; भृत्यः कुप्यति, निर्धनाय प्रभवे इति शेषः, सुतः पुत्रः, न अनुगच्छति, निर्धनं पितरमिति शेषः कान्ता च न आलिङ्गते, निर्धनं भर्त्तारमिति शेषः, सुहृत् सखा, अर्थप्रार्थनशङ्कया धनयाच्ञाभयेन, आलापमात्रमपि दूरमास्तां प्रणयातिशय्यं केवलं कथोपकथनमपि, न कुरुते, निर्धनसुहृदेति शेषः, हे सखे! तस्मात् कारणात्, अर्थम् उपार्ज्जयस्व धनं सञ्चिनु, हि यतः, सर्वे जनाः, अर्थस्य वशाः अधीनाः, भवन्तीति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ १६८॥

वेणूनां (च) वनमासीत्। तत् ग्रामाभ्यन्तरं गत्वा रात्रौ कस्यचिद्गृहे वेदिकायां (छ) सुष्वाप। अत्रान्तरे अर्द्धरात्रसमये वेणुवनमध्ये रुदन्त्याः कस्याश्चित् स्त्रिया हाहारवेण जागरितः स एवं रोदनध्वनिमश्रौषीत्,—"भो महाजनाः! मां परित्रायध्वं परित्रायध्वं, कोऽपि राक्षसो मां मारयति" इति।

ततः प्रभातसमये ग्रामस्थान् जनान् अपृच्छत्,—"भो महोदयाः। किमेतदत्र वेणुवनमध्ये काचित् स्त्री रात्रौ रोदिति?" तैरुक्तम्,—"अत्र वेणुवनमध्ये प्रतिरात्रि रोदनध्वनिः श्रूयते, परं न कोऽपि तत्र भयाद्गच्छति, न विचारयति (ज) च"।

ततः पुरन्दरः कियत्कालानन्तरं स्वनगरमागत्य राजानमद्राक्षीत्। ततो राज्ञा पृष्टः,—"भोः पुरन्दर! देशान्तरं गच्छता त्वया किं किमपि अपूर्व्वं दृष्टम्?" ततः पुरन्दरो वेणुवनवृत्तान्तं राज्ञे समकथयत्।

तत् कौतुकं श्रुत्वा राजा तेन सह तन्नगरं गत्वा, रात्रौ वेणुवनमध्ये स्त्रिया रोदनशब्दं श्रुत्वा यावद्वनमध्ये प्रविशति, तावदतिभयङ्कररूपं, रुदतीम् अनाथां स्त्रियं मारयन्तं राक्षसमेकमपश्यत्, अब्रवीच्च,—"रे पापिष्ठ! स्त्रियमनाथां किमर्थं ताडयसि?" राक्षसेनोक्तं,—"तव किमनेन विचारेण? त्वमात्ममार्गेण गच्छ, अन्यथा वृथैव मम हस्तात् (झ) मरिष्यसि"।

---

(च) वेणूना—वंशानाम्।

(छ) वेदिकाया—वितर्द्दौ, गृहस्थितचतुरस्रोन्नतमृत्तिकास्तूपे इत्यर्थः। ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः)।

(ज) न विचारयति—किमेतदिति वितर्कमपि न करोति।

(झ) हस्तात्—करात्, [विवक्षाधीनमपादान, हस्त प्राप्य इत्यर्थे ल्यब्लोपे वा पञ्चमी]।

तच्छ्रुत्वा राजा कुपितः तं खड्गेन अताड़यत्; ततश्च उभयोर्युद्धं जातम्; राज्ञा स राक्षसो मारितः।

ततः सा स्त्री समागत्य राज्ञः पादयोः पतित्वा भणति स्म,—"भोः राजन्। तव प्रसादान्मम शापावसानमभूत्। महतो दुःखसागरात् त्वयाऽहम् उद्धृता"। राज्ञा भणितं,—"काऽसि त्वम्?" तयोक्तम्,—"अस्मिन्नेव नगरे महाधनसम्पन्नः कश्चित् ब्राह्मणः आसीत्, तस्य भार्य्याऽहम्; व्यभिचारिणीभूताया मम तस्योपरि कियत्यपि प्रीतिर्नासीत्, परन्तु तस्य ममोपरि महाननुरागः अस्यात्। रूपादिगर्वयुताऽहं तेन सम्भोगार्थमाहूताऽपि नागमम्। अतो यावज्जीवं कामसन्तप्तः स मम पतिः देहावसानसमये (ञ) मामशपत्,—'किमिति (ट) रे दुराचारे! यथा यावज्जीवं त्वया मम सुदुःसहो मनःसन्तापः उत्पादितः,तथैव वेणुवनवासी कश्चिदतिभयङ्कररूपो राक्षसो रात्रौ त्वामनिच्छन्तीं सुरतार्थं प्रतिदिनं ताड़यतु' इति। एवमभिशप्तया मया पुनः शापावसानं याचितं,—'किमिति (ठ) भो नाथ! शापस्यावसानं देहि' इति। तेनोक्तं,—'यदा परोपकारी महाधैर्य्यसम्पन्नः पुरुषः कश्चित् समागत्य तं राक्षसं हनिष्यति, तदा त्वं तत्पादौ नत्वा शापमुक्ता भविष्यसि। मदीयमिदं धनं तस्मै देहि' इति। मामेवमुक्त्वा स प्राणान् अत्यजत्। तदवधि अहं राक्षसहस्तेन प्रतिरात्रि निगृहीताऽभवम्; अधुना तव प्रसादात् मम शापावसानं जातं, तदिमं गृहाण" इत्युक्त्वा सा धनपूर्णघट-

(ञ) देहेति।—देहस्य अवसानं जीवनधारणकालशेषः, तदेव समयः तस्मिन्, मृत्युकाले इत्यर्थः।

(ट) किमिति—कुत्सायाम्।

(ठ) किमिति—किञ्चिदपीत्यर्थं; "न हि न हि, एव मा शप" इति निषेधार्थको वा।

मेकं दत्तवती। राजा तु तं धनपूर्णघटं समादरात् स्वीकृत्य, (ड) पुरन्दरवणिजे दत्त्वा तेन सहोज्जयिनीमगात्; ब्राह्मणभार्य्याऽपि स्वभवनमयासीत्"।

पुत्तलिका इमां कथां कथयित्वा भोजमब्रवीत्,—"भो राजन्! त्वय्येवं धैर्य्यमौदार्य्यं विद्यते चेत्, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे ब्राह्मणी-शापमोचनं नाम द्वादशोपाख्यानम् ] ॥ १२ ॥

## अथ ब्रह्मराक्षसोद्धारो नाम त्रयोदशोपाख्यानम्।

अथ पुनः समारोहणकामनया सिंहासनसमीपे विक्रममार्गं भोजं सन्निरुध्य अन्या पुत्तलिका समवदत्,—"शृणु राजन्! एकदा विक्रमो राजा राज्यभारं मन्त्रिवर्गे निधाय, स्वयं योगि-वेशेन पृथ्वीपर्य्यटनं कर्त्तुं प्रवृत्तः। ग्रामे एकरात्रं (ढ) नयति, नगरे पञ्चरात्राणि गमयति। एवं परिभ्रमन्नेकदा नगरमेक-मगमत्। तन्नगरसमीपस्थिते नदीतटे देवालयः एकः आसीत्।

(ड) स्वीकृत्य—गृहीत्वा, [ अस्वं स्वं कृत्वा इति स्वीकृत्य, अभूततद्भावे च्विप्रत्ययः ]।

इति द्वादशोपाख्यानम् ॥ १२ ॥

(ढ) एकरात्रम्—एका रात्रिः इति एकरात्रं, "सङ्ख्यापूर्व्वा रात्रिः" (न० अ० १६पा०) इति लिङ्गानुशासनसूत्रेण नपुंसकत्वं, ततोऽत्यन्तसंयोगे द्वितीया। "एकरात्रं वसेत् ग्रामे" इत्यादि मनुप्रतिपादितधर्म्ममनुसृत्यैतदुक्तम्।

तस्मिन् देवालये सर्वे महाजनाः पौराणिकात् पुराणं (ण) शृण्वन्ति। राजाऽपि नद्यां स्नात्वा, देवालयं गत्वा, देवं नमस्कृत्य च महाजनसमीपे उपविष्टः। तस्मिन् समये पौराणिकः पुराणवाक्यानि पठति। तत् यथा,—

"अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसङ्ग्रहः। १६९॥
श्रूयतां धर्म्मसर्व्वस्वं यदुक्तं ग्रन्थकोटिभिः।
परोपकारः पुण्याय पापाय परपीडनम्। १७०॥
यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः।
सुखितानि सुखी वाऽपि स धर्मं वेद नैष्ठिकम्॥ १७१॥
जाने भूयांस्ततो धर्म्मः कश्चिन्नान्योऽस्ति देहिनः।
प्राणिना भयभीतानामभयं यः प्रयच्छति॥ १७२॥

(ण) पौराणिकात—पुराणं वेत्ति अधीते वा इति तस्मात् पुराणविदः सकाशात्। पुराणं—"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥" इत्युक्तलक्षणव्यासादिप्रणीतशास्त्रविशेषम्।

सर्व्वभूतेषु दयासेवाभयदानादयः धर्म्माः प्राणिभिरवश्यमाचरणीया, इति प्रतिपादनपरान् पौराणिकश्लोकानाह, अनित्यानीत्यादिभिः।—शरीराणि देहाः, अनित्यानि नश्वराणि, विभवः सम्पत् नैव शाश्वतः न चिरस्थायी एव, मृत्युः मरणं, नित्यं सदा, सन्निहितः निकटवर्त्ती भवति अतः धर्म्मसङ्ग्रहः धर्म्मस्य सञ्चयः, कर्त्तव्यः, विधेयः। पथ्यावक्त्रं वृत्तम॥ १६९॥

श्रूयतामिति।—ग्रन्थकोटिभिः बहुग्रन्थैः, यत् धर्म्मसर्व्वस्वं धर्म्मसारः, उक्तं कथितं, तत् श्रूयताम् आकर्ण्यताम्, परोपकारः पुण्याय धर्म्माय, परपीडनञ्च पापाय अधर्म्माय, भवति इति शेषः। पथ्यावक्त्रं वृत्तम्॥ १७०॥

यः इति।—यो जनः, दुःखितानि क्लिष्टानि, भूतानि प्राणिनः, दृष्ट्वा दुःखितः क्लिष्टः, भवति, सुखितानि हृष्टानि, अपि भूतानि दृष्ट्वा सुखी हृष्टः, वाऽव चार्थे, तेन सुखी च भवति, स तादृश एव जनः नैष्ठिकं शाश्वतं, धर्मं वेद जानाति। पथ्यावक्त्रं वृत्तम्॥ १७१॥

जाने इति।—यः जनः, भयभीतानां भयार्त्तानां, प्राणिनां जीवानाम्, अभयं प्रयच्छति ददाति, अत्र तस्य इति पदम् अध्याहार्य्यं, यत्तदोर्नित्यसम्बन्धात्, देहिनः

वरमेकस्य त्रस्तस्य प्रदातुर्जीवितं फलम्।
न च विप्रसहस्रेभ्यो गोसहस्रं फलं भवेत्॥ १७३॥

अभय सर्व्वभूतेभ्यो यो ददाति दयापरः।
तस्य पुण्यस्य कल्पान्ते क्षय एव न विद्यते॥ १७४॥

हेम-धेनु-धरादीनां दातारः सुलभा भुवि।
दुर्लभः पुरुषो लोके सर्व्वजीवे दयापरः॥ १७५॥

महतामपि यज्ञानां कालेन क्षीयते फलम्।
तत्राभयप्रदानस्य कलां नार्हति षोड़शीम्॥ १७६॥

चतुःसागरपर्य्यन्तां यो दद्याद्वसुधामिमाम्।
यश्चाभयञ्च भूतेभ्यस्तयोरभयदोऽधिकः॥ ७७॥

लोकस्य, तत उन. तद्भिन, भूयान् नाधिक कश्चिद् धर्म्म नास्ति न विद्यते, इति जाने विवेचयामि। पथ्यावक्त्रं वृत्तम्॥ १७२॥

वरमिति।—एकस्य त्रस्तस्य भीतजनस्य जीवित जीवनं, प्रदातु. प्रयच्छतो जनस्य, फल वर श्रेष्ठ, विप्रसहस्रेभ्यः सहस्रब्राह्मणेभ्यः, गोसहस्रं धेनुसहस्रं, प्रदातुः प्रयच्छतो जनस्य, फलं न च तादृशं भवेत्। पथ्यावक्त्रं वृत्तम्॥ १७३॥

अभयमिति।—यः जनः दयापरः दयायुक्तः सन्, सर्व्वभूतेभ्यः सकलजीवेभ्यः, अभयम् अभीति, ददाति सर्व्वान् विपदः परित्रायते इत्यर्थः तस्य जनस्य, पुण्यस्य सर्व्वेभ्यः अभयदानजनितस्येत्यर्थः, क्षयः नाशः, कल्पान्ते प्रलयकालेऽपि, न विद्यते एव न भवत्येव। पथ्यावक्त्रं वृत्तम्॥ १७४॥

हेमेति।—हेम धेनु-धरादीना सुवर्ण-गो-भूमिप्रभृतीनां, दातारः दानकर्त्तार., भुवि पृथिव्यां, सुलभा. सुप्राप्याः बहवो दृश्यन्ते इत्यर्थः, सर्व्वजीवे सर्व्वस्मिन् प्राणिनि, दयापर. दयावान्, पुरुष. जन', लोके इह जगति, दुर्लभः विरल', भवतीति शेषः। पथ्यावक्त्रं वृत्तम्॥ १७५॥

महतामिति।—महता प्रधानाना, यज्ञानाम् अश्वमेधादीनामपि. फल स्वर्गादिलाभः, कालेन क्षीयते कालक्रमेण नश्यति. तत्र तत्फलञ्च, अभयप्रदानस्य षोडशी कला षोडशभागमपि, नार्हति षोडशभागसदृशं न भवतीत्यर्थ। पथ्यावक्त्रं वृत्तम्॥ १७६॥

चतुरिति।—यः जन, चतुःसागरपर्य्यन्तां चतुःसागरसीमान्वितान्, इमां वसुधां पृथिवीं. दद्यात् प्रयच्छेत्, यश्च जनः, भूतेभ्यः जीवेभ्यः, अभयञ्च दद्यात्, तयोः एतयोर्मध्ये, अभयदः अभीतिदाता, अधिक. श्रेष्ठ.। पथ्यावक्त्रं वृत्तम्॥ १७७॥

अध्रुवेण शरीरेण प्रतिक्षणविनाशिना।
ध्रुवं यो नार्ज्जयेत् धर्म्मं स शोच्यो मूढचेतनः॥ १७८॥
यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते।
ततः किं पोषणं तस्य प्रत्यहं क्रियते नृभिः?"॥ १७९॥

एवं पुराणकथनसमये कश्चित् वृद्धो ब्राह्मणः पत्न्या सह नदीमुत्तरन्, महापूरेण (त) नीयमानो हाहाकारं कुर्व्वन् नदीमध्ये महाजनान् प्रति (थ) वदति,—"भो भो महात्मानः! धावध्वं धावध्वं, (द) वृद्धः सपत्नीको ब्राह्मणोऽहं नदीप्रवाहेण बलात् नीयमानोऽस्मि। कोऽपि सत्त्वाधिको धार्म्मिकः मम सपत्नीकस्य जीवदानं करोतु"। जलेनोह्यमानस्य इत्थं दीनध्वनिं (ध) श्रुत्वा महाजनाः सर्व्वेऽपि सकौतुकं पश्यन्ति, परं न कोऽपि नदीमध्ये प्रविश्य प्रवाहात् रक्षितुं तस्याभयं (न) प्रयच्छति।

ततो विक्रमो राजा "मा भैषीः" इति तस्याभयं दत्त्वा नदीमध्ये प्रविश्य, पत्न्या सह तं ब्राह्मणं महापूरादाकृष्य

अध्रुवेणेति।—यः जनः, अध्रुवेण अनिश्चितेन, प्रतिक्षण सर्व्वदैव, विनाशिना विनाशशङ्काऽन्वितेन, शरीरेण देहेन, ध्रुव निश्चित, धर्मं नार्ज्जयेत् न सङ्गृह्णीयात् स तादृशः, मूढचेतन' मूर्खजनः, शोच्यः अनुशोचनार्हो भवति। पथ्यावक्त्रं वृत्तम्॥ १७८॥

यदीति।—यदि चेत्, अयं देहः शरीरमिद, प्राण्युपकाराय जीवानाम् उपकार-साधनाय, नोपयुज्यते नोपयुक्तो भवति, ततः तर्हि, नृभिः मनुष्यैः, प्रत्यहं प्रतिदिनं, तस्य शरीरस्य, पोषण पुष्ट्यादिसम्पादनं, कि कथ, क्रियते? निरर्थक तदित्यर्थः। पथ्यावक्त्रं वृत्तम्॥ १७९॥

(त) महापूरेण—प्रबलजलवेगेन प्रखरजलस्रोतसा इत्यर्थः।

(थ) महाजनान् प्रति—सज्जनान् लक्ष्यीकृत्येत्यर्थः।

(द) धावध्व—त्वरितमागच्छत [सम्भ्रमे द्विरुक्ति]।

(ध) उह्यमानस्य—नीयमानस्य। इत्थम्—एवम्भूतम्। दीनध्वनिं—कातरार्त्तनादम्।

(न) अभयम्—आश्वासमित्यर्थः।

तटमानीतवान्। ब्राह्मणोऽपि स्वस्थः सन् राजानमवदत्,—"भो महासत्त्व! ममैतच्छरीरं पूर्वं मातापितृभ्यामुत्पादितम्, इदानीं त्वत्सकाशात् द्वितीयं जन्म प्राप्तम्। अतः प्राणदानात् महोपकारिणस्तव किमपि प्रत्युपकारं न करिष्यामि चेत्, तर्हि मम जीवितं व्यर्थं स्यात्। तस्मात् गोदावर्य्युदकमध्ये द्वादश-वर्षपर्य्यन्तं मन्त्रजपस्य मदीयं पुण्यं तुभ्यं दीयते। अन्यच्च,—मम यत् कृच्छ्रचान्द्रायणादिना किमपि सुकृतमुपार्जितमस्ति, तत् सर्वं गृहाण" इत्युक्त्वा स स्वपुण्यं राज्ञे समर्प्याशिषं दत्त्वा पत्न्या सह निजस्थानं गतः।

तस्मिन्नवसरे अतिभयङ्कररूपः कश्चित् ब्रह्मराक्षसः (प) राजसमीपमागतः। राजाऽपि तं दृष्ट्वा अवदत्,—"भो महा-सत्त्व! कोऽसि त्वम्?" तेनोक्तम्,—"अहमेतन्नगरवासी कश्चित् ब्राह्मणः सर्वदा ब्रह्मस्वापहारी दुष्प्रतिग्रहजीवी (फ) अयाज्य-याजकश्च आसम्; तथाविधश्च गुरून्, वृद्धान्, साधून्, महतश्च अदूषयम्। तस्मात् पातकवशात् अस्मिन् अश्वत्थपादपे ब्रह्म-राक्षसो भूत्वा अत्यन्तदुःखितो दशवर्षसहस्रं (ब) तिष्ठामि। 'भवान् परोपकारी सुकृतचरितः, तवानुग्रहेण अहं पातका-न्मुक्तो भविष्यामि' इति विश्वस्य त्वां शरणम् आश्रयामि" इति। तद्वाक्यं श्रुत्वा राज्ञा तदैव ब्राह्मणादधिगतं तत् पुण्यं तस्मै दत्तम्। सोऽपि तेन पुण्येन तस्मात् जन्मनो मुक्तो दिव्यरूप-

(प) ब्रह्मराक्षसः,—मरणानन्तरं रूपान्तरपरिणतः करालविग्रहः ब्रह्मस्वाप-हर्त्ता "अपहृत्य च ब्रह्मस्वं भवति ब्रह्मराक्षसः" इति मनुवचनात्।

(फ) दुष्प्रतिग्रहजीवी—दुः—दुष्टेन, निषिद्धेनेत्यर्थः, प्रतिग्रहेण—दानग्रहणेन, जीवति यः स तथाविधः।

(ब) दशवर्षसहस्रं—वर्षाणां सहस्रं वर्षसहस्रं, दश च तत् वर्षसहस्रञ्चेति विग्रहः, दशसहस्रवर्षमित्यर्थः।

धरः (भ) सन् राजानं स्तुत्वा स्वर्गं जगाम; राजाऽपि स्वनगरमगमत्"।

इति कथां कथयित्वा पुत्तलिका भोजमवदत्,—"त्वय्येवं चेत् परोपकारो धैर्य्यमौदार्य्यञ्च विद्यते, तर्ह्यस्मिन् सिंहासने समुपविश"। राजाऽप्यधोमुखो बभूव।

[इति विक्रमार्कचरिते सिंहासनीपाख्याने अप्सरी-भोजसंवादे ब्रह्म-राक्षसोद्धारो नाम त्रयोदशोपाख्यानम्] ॥ १३ ॥

---

## अथ काश्मीरलिङ्गदानं नाम चतुर्द्दशोपाख्यानम् ।

---

पुनरपि राजा यदा सिंहासने समुपवेष्टुं गच्छति तदाऽन्या पुत्तलिका तं निवार्य्याब्रवीत्,—"एकदा विक्रमादित्यो राजा 'पृथ्वीतले कस्मिन् स्थाने किमाश्चर्य्यं, के च सन्तः, किं तीर्थं, का वा देवताऽस्ति?' इत्यादिकं विलोकयन् स्वयं योगिवेशेन परिभ्रमन् नगरमेकमगमत्। तन्नगरसमीपे तपोवनमेकम् अस्ति। तस्मिंस्तपोवने जगदम्बिकायाः (म) महान् प्रासादः आसीत्। तत्समीपे च काचित् नदी वहति। राजा नद्यां स्नात्वा देवतां नमस्कृत्य च तत्र देवालये उपविष्टो यावत् पश्यति, तावत् अवधूतमारो नाम कश्चित् योगी तत्र समागतः, "सुखी त्वम्" इत्युक्त्वा, तेन सह तत्र देवालये उपविष्टः।

---

(भ) दिव्यरूपधरः,—ज्योतिर्म्मयाकृतिविशिष्टः।

इति त्रयोदशोपाख्यानम् ॥ १३ ॥

---

(म) जगदम्बिकायाः,—जगन्मातुः दुर्गाया इत्यर्थः।

योगिनोक्तं—"कुतः समागतो भवान्?" राज्ञोक्तं,—"मार्गस्थोऽहं कोऽपि तीर्थयात्रिकः"। योगिनोक्तं,—"त्वं विक्रमादित्यो राजा ननु, मया एकदा उज्जयिन्यां दृष्टोऽसि, अतोऽहं जानामि; किमर्थम् आगतोऽसि?" राजाऽब्रवीत्,—"भो योगिराज! मम मनसि एवम् इच्छा वर्त्तते यत्,—पृथ्वीपर्य्यटनेन किमप्याश्चर्य्यं विलोकनीयमिति, तथा च सतां सन्दर्शनमपि भविष्यति"। अवधूतसारोऽब्रवीत्—"भो राजन्! त्वं तादृशः विचक्षणोऽपि प्रमत्तः (य) इव देशान्तरम् आगतोऽसि॥ राज्यमध्ये कश्चित् विप्लवः (र) चेद्भविष्यति, तदा किं करिष्यसि?" राज्ञोक्तम्,—"अहं सर्वमपि राज्यभारं मन्त्रिहस्ते निधाय (ल) समागतः"। योगिनोक्तं,—"राजन्! तथाऽपि त्वया नीतिशास्त्रविरोधः कृतः। यतः,—

नियोगिहस्तार्पितराज्यभारा-
स्तिष्ठन्ति ये शैलविहारसाराः।
विड़ालवृन्दाहितदुग्धकुम्भाः
स्वपन्ति ते मूढ़धियः क्षितीन्द्राः॥ १८०॥

---

(य) प्रमत्तः,—अनवहितः, असावधान इति यावत्।

(र) विप्लवः,—परनृपतिराष्ट्रादितो भयम्।

(ल) निधाय—समर्प्य।

अमात्यादावाहितराज्यभारस्य निश्चिन्तस्य राज्ञो मूढतां प्रतिपादयितुं नीतिशास्त्रोक्तिमाह, नियोगीति।—ये क्षितीन्द्रा नृपाः, नियोगिना प्राप्तकार्य्यभाराणां भृत्यानां हस्तेषु अर्पितः प्रदत्तः राज्यभारः यैः ते तादृशाः, शैलविहारः पर्व्वतेषु सुखनिवास एव, सारः येषां ते तादृशाः सन्तः तिष्ठन्ति, ते मूढधियः मन्दमतयः, विडालानां वृन्दे समूहे, आहितः विन्यस्तः, दुग्धकुम्भः यैस्ते तादृशाः सन्तः, स्वपन्ति निद्रां यान्ति। भृत्यहस्ते राज्यभारसमर्पणं विडालहस्ते दुग्धकुम्भसमर्पणमिवेति भावः। वृत्तमुपजातिः॥ १८०॥

अन्यच्च,—राज्यं स्ववंशागतमिति नोपेक्षणीयम्; (व) अपि तु पुनः सुदृढ़ञ्च कर्त्तव्यम्; उक्तञ्च,—

कृषिर्विद्या वणिक् भार्य्या स्वधनं राज्यसम्पदः।
सुदृढ़ञ्चैव कर्त्तव्यं कृष्णसर्पमुखं यथा" ॥ १८१ ॥

तच्छ्रुत्वा राजा भणति,—"योगिन्! सर्वमेतदनर्थकम्, (श) अत्र दैवबलमेव बलवत्। सुदृढ़ीकृते सर्वसामग्रीसहितेऽपि राज्ये पौरुषयुक्तोऽपि पुरुषो दैववैमुख्यात् पराभवं प्राप्नोति। तदुक्तम्,—

नेता यस्य वृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः,
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावती वाहनम्।
इत्यैश्वर्य्यसमन्वितोऽपि बलभिद्भग्नः परैः सङ्गरे
तद्युक्तं ननु दैवमेव शरणं धिग्धिग् वृथा पौरुषम् ॥ १८२ ॥

---

(व) स्वेति।—स्वस्य—निजस्य, वंशात्—कुलात्, आगत—प्राप्त, कुलक्रमागतमिति यावत्। नोपेक्षणीय—शिथिलतया न पालनीयमित्यर्थः।

सुरक्षितमपि राज्य पुनः सुरक्षणीयमेव, नोपेक्षणीयमिति दर्शयति, कृषिरिति।—कृषिः कृषिकार्य्य, विद्या ज्ञानसञ्चय, वणिक वैश्यः, लक्षणया तत्कर्म्म वाणिज्यमित्यर्थः, भार्य्या जाया, स्वधन निजसम्पत्, तथा राज्यसम्पदश्च राज्यरूपा सम्पत्, राज्यलक्ष्मीरित्यर्थः, एतत्सर्व्व, कृष्णसर्पस्य मुख यथा मुखमिव, सुदृढं सुरक्षितं, कार्य्यं कर्त्तव्यमेव, अन्यथा वपर्य्ययसम्भ विना स्यात् इति भावः। पथ्यावक्त्रं वृत्तम् ॥ १८१ ॥

(श) अनर्थकम्—निष्फलम्।

बलीयसा दैवेन पुरुषकारो व्याहन्यते इति प्रदर्शयितुमाह, नेतेति।—यस्य देवराजस्य वृहस्पतिः देवगुरुः, नेता नायकः अप्रतिमबुद्धिः मन्त्रीत्यर्थः, वज्रम् अशनिः, अस्त्रान्तरदुराधर्षम् अनन्यलभ्यञ्चेति भावः प्रहरणम् अस्त्रं, सुराः देवाः, मरणरहिता इति भावः, सैनिकाः योद्धृपुरुषाः, स्वर्गः पुण्यवतामेव गमनीयमिति भावः, दुर्गं शत्रुदुर्गमस्थानमित्यर्थः, हरेः विष्णोः, दुराराध्यस्य इति भावः, अनुग्रहः यं प्रति प्रसादः, पक्षपात इत्यर्थः, अनन्यसुलभ इति भावः, खलु अस्त्येव, ऐरावतः हस्तिविशेषः, अयोनिसम्भूतत्वात् अप्रतिमगुणसम्पन्नः इति भावः, यस्य वाहनं यानम्, इति इत्थम्, ऐश्वर्य्यसमन्वितोऽपि बलभित् इन्द्रः, सङ्गरे युद्धे, परैः शत्रुभिः, भग्नः पराजितः

तथा च,—

नैवाकृतिः फलति नैव कुलं न शीलं
विद्याऽपि नैव न च यत्नकृताऽपि सेवा।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः॥ १८३॥

अपि च,—

यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुण्ठतामागता।
तद्वक्षोऽपि नृसिंहपाणिकरजैर्दीर्णं हि यत् साम्प्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते॥ १८४॥

---

अभवत्, तत् तस्मात्, दैवमेव अदृष्टमेव, शरणम् आश्रय., इति युक्तम् उचित, ननु निश्चये, त्वया निष्फल पौरुष पुरुषकारं, धिक् धिक् इति निन्दायाम्, [आतिशय्ये द्विरुक्ति.] पुन: पुन: निन्दामीत्यर्थ। दैवाधीनमेव सर्वं भवति पौरुषन्तु व्यर्थमेवेति तात्पर्य्यम्। शार्दूलविक्रीडित वृत्तम्॥ १८२॥

सर्व्वत्रैव दैवमेव फलति, अन्यत्तु सर्व्वमेव अनियतफलकम् इत्याह, नैवेति।— पुरुषस्य आकृतिः सौन्दर्य्यं, नैव फलति आकृत्या न कोऽपि फललाभ इत्यर्थ., कुल सद्वंश नैव फलति, शील सत्स्वभावश्च, न फलति, विद्याऽपि शास्त्रज्ञानमपि नैव फलति, यत्नकृता यत्नेन सम्पादिता, सेवा राजसेवादिरपि, न च फलति नैव फल जनयति, एतैर्न कोऽपि फललाभ इत्यर्थः। पूर्व्वतपसा पूर्व्वजन्मार्ज्जिततपस्यया सञ्चितानि साधितानि, पुरुषस्य नरस्य, भाग्यानि अदृष्टान्येव खलु निश्चये, काले यथाकाले, वृक्षा यथा तरव इव, फलन्ति। अदृष्टानुसारेणैव फललाभो भवतीति भावः। वसन्ततिलक वृत्तम्॥ १८३॥

दुर्भाग्यस्य पौरुषादिकं सर्वमेव व्यर्थं भवतीति दर्शयितु दृष्टान्तमाह, यत्रेति। —यत्र हिरण्यकशिपोर्वक्षसि, आखण्डलदन्तिनः इन्द्रहस्तिनः ऐरावतस्य, दन्तमुसलानि दन्ताः मुसलानि इव तानि, आहवे युद्धे, आखण्डितानि आ सम्यक् खण्डितानि भग्नानि, यत्र यस्मिन् उरःस्थले, पिनाकपाणेः महादेवस्य परशोः कुठारस्य, धारा अग्रभागः, आकुण्ठताम् अकर्म्मण्यताम् आगता प्राप्ता भग्ना इत्यर्थः, तद्वक्षः तादृशस्य असुराधिपतेर्वक्षःस्थलमपि, साम्प्रतम् इदानीं, यत् नृसिंहस्य नरसिंहाकारस्य हरेः,

किं न श्रुता भवता राजशेखरनृपतेः गाथा (ष) इयम् अपूर्व्वविश्वासमूला ?—

'वटवृक्षस्थिता यक्षा ददतीह हरन्ति च।

अक्षान् पातय कल्याणि। यद्भाव्यं तद्भविष्यति' ॥१८५॥इति"।

योगिनोक्तं,—"कथमेतत् ?" राजाऽब्रवीत्,—"अस्ति उत्तरदेशे नदीपर्वतवर्द्धनं नाम नगरम्। तत्र राजशेखरो नाम राजा राज्यभारं वहति स्म। स देवद्विजपरायणोऽतीव धार्म्मिकः आसीत्।

एकदा तस्य दायादाः (स) सर्व्वे समागत्य तेन सह विगृह्य (ह) बलात् राज्यं गृहीत्वा, सपत्नीकं तं नगरात् निरासिषुः। (क) ततः स राजा पत्न्या पुत्रेण च सह नानादेशं पर्य्यटन्, कस्यचिन्नगरस्य समीपस्थे उपवने गतः। तदा सूर्य्योऽप्यस्तं गतः। स पत्न्या पुत्रेण च समन्वितः कस्मिंश्चित् वटवृक्षमूले गत्वोपविष्टः।

---

पाणिकरजैः हस्तनखैः, मुग्धकान्तास्तनसङ्गभङ्गुरैः इति भावः, दीर्णं भग्नं दैवे अदृष्टे, दुर्बलतां गते दुर्बले जाते सति, प्रायेण प्रायशः, तृणमपि वज्रायते वज्रवदाचरति, वज्रवदतिकठिनं भवतीत्यर्थः, हि निश्चये। शार्दूलविक्रीडितं वृत्तम् ॥ १८४ ॥

(ष) गाथा—ऐतिह्यमूलकः श्लोक इत्यर्थः।

भवितव्यं भवत्येव इति प्रदर्शयितुं प्रसिद्धां कथामवतारयति, वटेति।—वटवृक्षस्थिता वटवृक्षवासिनः यक्षाः देवयोनिविशेषाः, ("पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरोक्तेः) इह जगति, ददति धनादिकं प्रयच्छन्ति, हरन्ति त एव गृह्णन्ति च। हे कल्याणि। अक्षान् पाशकान्, पातय आसने प्रक्षिप; यद्भाव्यं भवितव्यं, तद्भविष्यति, तव चिन्ता वृथैवेत्यर्थः। पथ्यावक्त्रं वृत्तम् ॥ १८५ ॥

(स) दायादाः,—दायं पैतृकधनम्, आददते गृह्णन्ति इति दायादाः ज्ञातयः इत्यर्थः।

(ह) विगृह्य—युद्धं कृत्वा।

(क) निरासिषुः,—बहिष्कृ.।

तस्मिंश्च वृत्ते पञ्च यक्षाः आसन्। ते परस्परं आलपन्ति स्म। तत्र एकेनोक्तम्,—"अस्मिन् नगरे राजा मृतः, तस्य च सन्ततिर्नास्ति; को वा राजा भविष्यति?"। द्वितीयेनोक्तं,—"तत्र का चिन्ता? अत्र वटवृक्षमूले यो राजा तिष्ठति, तमेव अस्मिन् राज्ये अभिषिचय"। अन्यैरुक्तं,—"तथाऽस्तु"। सपरिवारो राजाऽपि यक्षाणां तद्वाक्यान्यशृणोत्।

ततः सूर्य्योदयो जातः। सर्व्वे जनाः स्वस्वकर्माणि कर्त्तुं प्रवृत्ताः। राजाऽपि सन्ध्यादिकं विधाय यावद्राजमार्गाभिमुखं निर्गतः, तावत्तद्राज्यराजनिर्वाचन-निमित्तं मन्त्रिभिर्मुक्ता धृत-माला काचित् करिणी राजानं विलोक्य, तस्य कण्ठे मालां निधाय तं स्वपृष्ठमारोप्य राजभवनं निनाय। ततः सर्व्वैर्मन्त्रिभि-र्मिलित्वा अभिषेकं विधाय राजशेखरो राजा राज्ये स्थापितः।

एकदा सर्व्वे प्रतिस्पर्द्धिनः (ख) नृपाः राजशेखरस्य भूयो राज्यप्राप्तिमाकर्ण्य सन्धिबद्धाः (ग) तद्राज्यात् तमुन्मूलयितुं तन्नगरमवरुद्धवन्तः। तस्मिंश्च राजनि स्वदेव्या सह पाशकक्रीड़ां कुर्व्वति चारमुखात् सहसा तद्वृत्तान्तमाकर्ण्य स्वामिनं तत्र सम्यक् उदासीनमालोक्य देव्या सविस्मयं भणितं,—"भोः नाथ! भवता अधुनाऽपि कथं तूष्णीं स्थीयते? प्रत्यर्थिनृपैः (घ) तवैषा नगरी वेष्टिता, प्रभाते न केवलं नगरम्, अस्मानपि ते ग्रहीष्यन्ति"। राज्ञोक्तं,—"भो मुग्धे! किं प्रयत्नेन? यदा दैवमनुकूलं भवति, तदा सर्व्वं कार्य्यं स्वयमेव सम्पद्यते; यदा प्रतिकूलं दैवं, तदा सर्व्वं स्वयमेव नश्यति; त्वया नानुभूतं किं वृद्धौ क्षये च दैवमेव परं कारणम्?—

(ख) प्रतिस्पर्द्धिन.,—प्रतिद्वन्द्विन.।

(ग) सन्धिबद्धा,—सम्मिलिता।

(घ) प्रत्यर्थिनृपैः,—विपक्षराजसमूहैः।

वटवृक्षस्थिता यक्षा ददतीह हरन्ति च।
अक्षान् पातय कल्याणि! यद्भाव्यं तद्भविष्यति॥ इति।

वृक्षमूले स्थितस्य मे येन राज्यं दत्तं, तस्यैव चिन्ताऽपि अधुना नूनम् आपतिता (ङ) भवति"।

एवं कथयतः दैवे परमविश्वस्तस्य तस्य वाक्यमन्तर्यामितया (च) विज्ञाय, येन यक्षेणास्मै राज्यं दत्तं, तेनैवं चिन्तितं,—"अहमेव अमुं प्रतीत्य एतद्राज्यभारमस्मै समर्पितवान्; यदि इदानीं मयाऽस्य रक्षणे प्रयत्नो न क्रियते, तर्हि महत् अयशो मे भविष्यति" इति विचार्य्य, स भयङ्कररूपं धृत्वा सर्वान् शत्रून् अभीषयत्। तस्यातिभीमाऽऽकृतिमालोक्य ते सर्वे प्रतिस्पर्द्धिनः पलायिता बभूवुः। ततोऽसौ राजशेखरो राजा निष्कण्टकं (छ) राज्यमकरोत्। अतोऽहं ब्रवीमि 'वटवृक्षस्थिताः' इत्यादि"। एषा कथा विक्रमेण योगीन्द्रं प्रति कथिता।

ततो योगीन्द्रः इमां कथा श्रुत्वा अतिसन्तुष्टः सन्, राज्ञे काश्मीरलिङ्गमेकं (ज) दत्त्वा अभणत्,—"भो राजन्! एतत् काश्मीरलिङ्गं चिन्तामणिरिव (झ) चिन्तितं वस्तु ददाति; तत् एनं सम्यक् पूजय"। राजा "तथाऽस्तु" इत्युक्त्वा तं प्रणम्य यावन्नगरमार्गं आगच्छति, तावत् ब्राह्मणः कश्चित् समागत्य राज्ञो हस्ते तल्लिङ्गं दृष्ट्वा राजानमाशीर्वादपूर्वकमवदत्,—"भो राजन्!

---

(ङ) आपतिता—सञ्जाता।

(च) अन्तर्यामितया—हृदयस्थविषयज्ञातृत्वेन।

(छ) निष्कण्टक—निर्बाधम्।

(ज) काश्मीरलिङ्गं—काश्मीरदेशजातशिवलिङ्गविशेषः तत्।

(झ) चिन्तामणिरिव—चिन्तितार्थप्रदमणिरिव, "सामर्थ्यसम्पादितवाञ्छितार्थ-चिन्तामणिः स्यान्न कथं हनूमान्" इति भट्टिकाव्ये, यद्वा,—सर्व्वकामप्रदपुरुषोत्तम इव, "आयुरारोग्यमैश्वर्य भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यं सर्व्वकामप्रदो हरिः॥" इत्युक्तेः भगवतोऽपि तथात्वात्।

प्रत्यहं मम शिवलिङ्गपूजने नियमोऽस्ति ; तदनभ्यर्च्च्य कदाऽपि पानीयमपि न पिबामि ; किन्तु मम शिवलिङ्गं नष्टं, तेन दिनत्रयमुपोषितोऽस्मि। (ञ) ततः अद्य मे एतत् शिवलिङ्गं पूजार्थं त्वया दातव्यम्"। राजाऽपि तस्मै ब्राह्मणाय काश्मीरलिङ्गं दत्त्वा निजनगरमगमत्"।

इति कथां कथयित्वा पुत्तलिका भोजराजमवदत्,—"त्वयि एवमौदार्य्यादयो गुणा विद्यन्ते चेत्, तर्ह्यत्र सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे काश्मीरलिङ्गदानं नाम चतुर्द्दशोपाख्यानम् ] ॥ १४ ॥

---

## मन्मथसञ्जीवनीवृत्तान्तो नाम पञ्चदशोपाख्यानम्।

अथ नित्यप्रतिहतसिंहासनाधिरोहणविक्लवमानसमपि (ट) स्वाभीष्टपरवशं भोजदेवं प्रतिषिध्य पुनरन्या पुत्तलिकाऽब्रवीत्,—"शृणु राजन्! विक्रमार्के राज्यं कुर्वति, तस्य पुरोहितो वसुमित्रः अत्यन्तरूपवान्, सकलकलाऽभिज्ञः, राज्ञोऽत्यन्तप्रियतमः, परमोपकारी सर्वलोकस्य, महाधनसम्पन्नश्च आसीत्। तेन एकदा विचारितं, "ननु उपार्जितानां (ठ) पापानां गङ्गास्नानादन्यत् क्षयसाधनं नास्ति। उक्तञ्च—

---

(ञ) उपोषितोऽस्मि—अन्नपानादिवर्ज्जितस्तिष्ठामि।

इति चतुर्द्दशोपाख्यानम् ॥ १४ ॥

---

(ट) नित्येति।—सततप्रतिरुद्धराजासनावस्थानविषण्णचेतसमपीत्यर्थः।

(ठ) उपार्ज्जितानां—दुष्कर्म्मसञ्चितानाम्।

तपसा ब्रह्मचर्य्येण यज्ञैर्दानेन वा पुनः।
गतिमप्राप्य वै जन्तुर्गङ्गां संसेव्य तां व्रजेत्॥ १८६॥
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैर्नियतात्मनाम्।
शुद्धिर्भवति या पुंसां न सा क्रतुशतैरपि॥ १८७॥
अपहृत्य तमस्तीव्रं यथा यात्युदयं रविः।
तथाऽपहाय पापानि भाति गङ्गाजलाप्लुतः॥ १८८॥
अग्निं प्राप्य यथा सद्यस्तूलराशिर्विनश्यति।
तथा गङ्गाप्रवाहेण सर्वं पापं विनश्यति॥ १८९॥
यस्तु सूर्य्यांशुभिस्तप्तं गाङ्गेयं सलिलं पिबेत्।
पञ्चगव्यस्य पानाद्धि सोऽधिकं फलमाप्नुयात्॥ १९०॥

---

गङ्गायाः सर्वपापहन्तृत्वं विवृणोति, तपसा इत्यादिभिरेकादशभिः श्लोकैः।—जन्तुः प्राणी, पुरुष इति यावत्, तपसा तपस्यया, ब्रह्मचर्य्येण शमदमादिना, यज्ञैः यागानुष्ठानैः, दानेन वा धेन्वादिदानेन च, गतिं स्वर्गादिकम्, अप्राप्य अलब्ध्वा, अपीति शेषः, पुनः किन्तु, गङ्गां जाह्नवीं, संसेव्य उपास्य, तां गतिं, स्वर्गादिकमित्यर्थः, व्रजेत् लभेत। इतः १९६ श्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तं ज्ञेयम्॥ १८६॥

स्नातानामिति।—शुचिभिः परिशुद्धैः, गाङ्गेयैः तोयैः गङ्गाजलैः, स्नातानां कृतस्नानानां, नियतात्मनां संयतचित्तानां पुंसां जनानां, या शुद्धिः यादृक् विशुद्धता, भवति जायते, क्रतुशतैः यज्ञशतानुष्ठानेनापि, सा तादृशी शुद्धिः न, भवतीति शेषः॥ १८७॥

अपहृत्येति।—रविः सूर्य्यः, यथा यद्वत्, तीव्रं घोरं, तमः अन्धकारम्, अपहृत्य दूरीकृत्य, उदयं याति उदेतीत्यर्थः, तथा तद्वत्, गङ्गाजलाप्लुतः गङ्गाजलस्नातः, जनः इति शेषः, पापानि दुष्कृतानि, अपहाय पापान्मुक्त इत्यर्थः, भाति शोभते॥ १८८॥

अग्निमिति।—यथा तूलराशिः तूलस्तूपः, अग्निं वह्निं, प्राप्य, सद्यः झटिति, विनश्यति भस्मीभवतीत्यर्थः, तथा तद्वत्, गङ्गाप्रवाहेण गङ्गाजलेन, सर्व्वं सकलं, पापं कल्मषं, विनश्यति विनाशं प्राप्नोति॥ १८९॥

य इति।—यस्तु यो हि जनः, सूर्य्यांशुभिः सूर्य्यकिरणैः, तप्तम् उष्णम्, उद्भासितमित्यर्थः, गाङ्गेयं सलिलं गङ्गाजलं, पिबेत् पानं कुर्य्यात्, स जनः, पञ्चगव्यस्य दधिदुग्धाऽऽज्यगोमूत्रगोमयरूपगव्यपञ्चकस्य, पानादपि, अधिकम् अतिशयं, फलं पुण्यादि-

चान्द्रायणसहस्रेण यः कुर्य्यात् कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातामुभावपि ॥ १९१ ॥
भूतानामपि सर्वेषां दुःखाभिहतचेतसाम् ।
गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः ॥ १९२ ॥
महद्भिः पातकैर्ग्रस्तान् अनेकान् हतमानसान् ।
पततो नरके घोरे गङ्गा रक्षति सेवनात् ॥ १९३ ॥
सप्तावरान् सप्त परान् पितॄंश्चापि हि वै ध्रुवम् ।
नरस्तारयते नित्यं गङ्गातोयावगाहितः । १९४ ॥
दर्शनात् स्पर्शनात् ध्यानात् तथा गङ्गेति कीर्त्तनात् ।
पुनाति पुरुषान् पुण्यान् शतशोऽथ सहस्रशः ॥ १९५ ॥

---

रूपम्, आप्नुयात् लभेत, मन्त्रपूतपञ्चगव्यादपि गङ्गाजलस्य पापनाशिनी शक्तिरधिका इति भाव ॥ १९० ॥

चान्द्रायणेति ।—य. जन चान्द्रायणसहस्रेण सहस्रसङ्ख्यकचान्द्रायणव्रताचरणेन, कायशोधनं देहशुद्धिं, कुर्य्यात् विदध्यात्, यश्चापि जन., गङ्गाम्भः गङ्गाजलं, पिबेत्, उभौ तौ तावपि, समौ तुल्यौ, स्याता भवेताम् ॥ १९१ ॥

भूतानामिति ।—दुःखेन अभिहतम् आक्रान्त, चेत चित्तं येषा तादृशाना, गतिम् उपायम, अन्वेषमाणानाम् [ एषधातोरात्मनेपदित्वे शानचि रूपम् ] अनुसन्दधानाना, सर्वेषा भूताना प्राणिनामपि, गङ्गासमा गङ्गातुल्या, गति उपायः, नास्ति ॥ १९२ ॥

महद्भिरिति ।—गङ्गा जाह्नवी सेवनात् तस्या उपासनात्, महद्भि. पातकै. गुरुतरपापै. ग्रस्तान् आक्रान्तान्, हतमानसान् निराशचित्तान्, घोरे भीषणे, नरके पततः नरकपतनोन्मुखानित्यर्थः अनेकान् बहून् जनान्, रक्षति उद्धरति ॥ १९३ ॥

सप्तेति ।—गङ्गातोयावगाहित. गङ्गाजलस्नातः, नरः लोक., अवरान् अधस्तनान्, सप्त, पुरुषान् इति शेषः, परान् ऊर्द्ध्वतनान् सप्त पितॄन् पितृपितामहादींश्चापि, नित्यं ध्रुवं, तारयते उद्धरति, इति वै ध्रुवं निश्चितम् ॥ १९४ ॥

दर्शनादिति ।—दर्शनात् गङ्गादर्शनेन, स्पर्शनात् गङ्गाजलस्पर्शेन, ध्यानात् गङ्गाचिन्तनात् तथा गङ्गेति कीर्त्तनात् गङ्गेति नामोच्चारणेन च, शतशः सहस्रशश्च पुण्यान् पुण्यवतः, पुरुषान नरान. पुनाति पवित्रीकरोति, गङ्गेति शेषः ॥ १९५ ॥

जात्यन्धा न हि तुल्यास्ते खगैः पशुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पापप्रणाशिनीम्" ॥ १९६ ॥

इत्येवं विचार्य्य बाराणसीं गतो विश्वेश्वरं दृष्ट्वा, प्रयागे पुनः माघस्नानं विधाय स्वनगराभिमुखमगच्छत्। प्रतिनिवृत्तस्य तस्य मार्गे नगरमेकमासीत्। तत्र नगरे शापभ्रष्टा सुराङ्गना काचित् राज्यं करोति, तस्याः भर्त्ता नास्ति। तत्र लक्ष्मीनारायणस्य महान् प्रासादो विद्यते। तत्समीपे विवाहमण्डपः सज्जितोऽस्ति ; देवताप्रासादद्वारे च महति लोहपात्रे तैलं तप्यते। तत्र नियुक्ताः पुरुषाः देशान्तरादागतानेवं वदन्ति,—"यदि कश्चित् सत्त्वाधिकोऽस्मिन् सन्तप्ततैलमध्ये पतिष्यति, तस्य मन्मथसञ्जीवनी नाम्नी अप्सराः कण्ठे मालामर्पयिष्यति"।

वसुमित्रः सर्वमेतत् पश्यन् शृण्वंश्च स्वनगरं ययौ। सर्वैर्बन्धुभिः सह सन्दर्शनं जातम्। असौ क्षेमेण (ड) आगत इति सर्वत्राम आनन्दोऽभूत्। ततः परेद्युः प्रभाते राजमन्दिरं गतः, राजानं दृष्ट्वा राज्ञे गङ्गोदकं विश्वेश्वरप्रसादञ्च दत्त्वोपविष्टः। ततः राज्ञा पृष्टः,—"भो वसुमित्र। कुशलिना तीर्थयात्रा कृता ?" तेनोक्तं,—"भोः स्वामिन्। तव प्रसादात् तीर्थयात्रां विधाय कुशली समागतोऽस्मि"। राज्ञोक्तं,—"तत्र देशान्तरं गतेन किमपूर्वं दृष्टम् ?" राज्ञा एवं पृष्टेन वसुमित्रेण सुराङ्गनातप्ततैलवृत्तान्तः कथितः।

ततः राजा तेन सह तत्र स्थाने गतः। तत्र स्नानं विधाय

---

जात्यन्धा इति। – ये जनाः, समर्थाः सक्षमा अपि, पापप्रणाशिनीं पापनाशकरीं गङ्गा न पश्यन्ति ते तादृशा जनाः जात्यन्धाः चक्षुष्मन्तोऽपि जन्मान्धाः, खगैः पक्षिभिः, तथा पशुभिरेव मृगादिभिरपि च तुल्या न हि, भवतीति शेषः, ततोऽपि हेया भवन्तीत्यर्थः, पशुपक्षिभ्योऽपि ते हीना इति भावः ॥ १९६ ॥

(ड) क्षेमेण—कुशलेन ।

लक्ष्मीनारायणं नत्वा तप्ततैलमध्ये पपात। तद्दृष्ट्वा तत्रत्यैस्तैर्जनै-र्हाहाकारः कृतः। तदा राजशरीरं मांसपिण्डाकारमभूत्। तच्छ्रुत्वा मन्मथसञ्जीवनी अमृतम् (ढ) आनीय मांसपिण्ड-स्याभिषेकमकरोत्। ततः स राजा दैवशक्त्या दिव्यरूपधरः पुरुषो जातः।

ततः सा सुप्रसन्नचित्ता यावद्राजकण्ठे मालामर्पयति, (ण) तावद्राज्ञा भणिता,—"भो मन्मथसञ्जीवनि! यदि त्वं मदीया भवसि, तर्हि मद्वचः शृणु"। तयोक्तं,—"भोः स्वामिन्! निरूप्यतां, (त) सर्वथा भवद्वचनं प्रतिपालयिष्याम्येव"। राज्ञोक्तं,—"यदि मदुक्तं करिष्यसि, तर्हि मत्पुरोहितं वृणीष्व" (थ)। साऽपि "तथाऽस्तु" इत्युक्त्वा, पुरोहितकण्ठे मालां समर्प्य विवाह-मकरोत्। अथ राजा स्वनगरं गतः"।

इमां कथां कथयित्वा पुत्तलिका भोजमवदत्,—"त्वय्येवं धैर्य्यं विद्यते चेत्, तर्ह्यस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे मन्मथसञ्जीवनी-वृत्तान्तो नाम पञ्चदशोपाख्यानम् ] ॥ १५ ॥

---

(ढ) अमृत—पीयूषमित्यर्थः।

(ण) अर्पयति—दास्यति. [ "यावत्पुरानिपातयोः लट्" (३।३।४ पा०) इति भविष्यदर्थे लट् ]।

(त) निरूप्यता—निर्दिश्यताम्, आदिश्यतामित्यर्थः।

(थ) वृणीष्व—पतित्वेन गृहाण।

इति पञ्चदशोपाख्यानम् ॥ १५ ॥

## अथ कन्यातुलितसुवर्णदानं नाम षोड़शोपाख्यानम्।

सिंहासनमस्मदायत्तं, कथमबलाप्रतिषिधानोपवेष्टव्यम्? इति विचार्य्य सिंहासनमधिरोढ़ुकामे राज्ञि तं निवार्य्य पुनरन्या पुत्तलिकाऽब्रवीत्,—"शृणु राजन्! विक्रमार्को राजा दिग्विजयार्थं (द) निर्गत्य पूर्व-दक्षिण-पश्चिमोत्तरदिशः विदिशश्च (ध) परिभ्रम्य, तत्रत्यान् नृपतीन् पादतलावनतान् विधाय, तैः समर्पितमन्यैरनास्वादितं वस्तुजातं (न) गृहीत्वा पुनस्तान् स्वपदे संस्थाप्य, निजनगरं प्रति समायातः।

अथ नगरप्रवेशसमये केनचित् दैवज्ञेनोक्तं,—"भो देव! दिनचतुष्टयं नगरप्रवेशे मुहूर्त्तः (प) नास्ति"। तस्य तद्वचनं श्रुत्वा राजा ग्रामाद्बहिः उपवने पटमण्डपान् (फ) कारयित्वा, तत्रैव दिनचतुष्टयं नेतुमुपक्रान्तवान् (ब)। तस्मिन् समये ऋतुराजो वसन्तः समागतः।

---

(द) दिग्विजयार्थं—सर्व्वभूपपराजयार्थम् इत्यर्थः।

(ध) पूर्वेति।—पूर्व्वा च दक्षिणा च पश्चिमा च उत्तरा च ताः पूर्वदक्षिण-पश्चिमोत्तराः, ताश्च ताः दिशश्चेति पूर्वदक्षिणपश्चिमोत्तरदिशः ["सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति भाष्यवचनात् पूर्वादिशब्दानां पुंवद्भावः]। विदिशः,—विगताः दिशः दिगन्तरालानि वायुऐशान्याग्नेयनैर्ऋतकोणरूपाणि। ("दिशोर्मध्ये विदिक् स्त्रियाम्" इत्यमरः)।

(न) अनास्वादितं वस्तुजातम्—अनुपभुक्तं दुष्प्रापद्रव्यसमूहम्।

(प) मुहूर्त्तः,—शुभसमयः।

(फ) पटमण्डपान्—वस्त्रनिर्म्मितावासस्थानानि "ताँबु" इति प्रसिद्धान्।

(ब) नेतुम—अतिवाहयितुम्। उपक्रान्तवान्—उद्युक्तः।

अथ वसन्तविलासं (भ) दृष्ट्वा सुमन्त्रः मन्त्री राजसमीपमागत्योक्तवान्,—"भो राजन्! ऋतुराजो वसन्तः समायातः, अद्य वसन्तपूजा कर्त्तव्या। तस्मिन् पूजिते सर्वे पि देवाः त्वयि प्रसन्ना भविष्यन्ति, सर्वोऽपि लोकः सुखी भविष्यति, सर्वस्याप्यरिष्टस्य शान्तिः (म) भविष्यति"। तस्य मन्त्रिणः तद्वचनं श्रुत्वा राजा "तथाऽस्तु" इत्यङ्गीकृत्य, वसन्तपूजासम्पादने तमेव समादिदेश।

तदनन्तरं स मन्त्री सुमनोहरं सभामण्डपं (य) कारयित्वा, वेदशास्त्रसम्पन्नान् ब्राह्मणान्, गीतवाद्याभिज्ञान् भरतान्, (र) इतरकलाकुशलाः नर्त्तकीश्च समाह्वयत्; दीनान्ध-बधिर-पङ्ग-कुब्जादयस्तु स्वयमेवागताः। तत्र सभामण्डपे तेन नवरत्न-खचितं (ल) सिंहासनं संस्थाप्य तत्र लक्ष्मीनारायणप्रतिमाद्वयं प्रतिष्ठापितम्। पूजार्थं कुङ्कुम-कर्पूर-कस्तुरिका-चन्दनागुरुप्रभृतीनि सुगन्धिद्रव्याणि, पुष्पाणि जाती-यूथिका-मल्लिका-कुन्द-शतपत्र-मदन-चम्पक-केतकीप्रभृतीनि च समानीतानि।

एव यथाविधानं राजा स्वयं लक्ष्मीनारायणौ स्नपनादि-षोड़शोपचारैः पूजयित्वा, ब्राह्मणादीन् कला-कुशलजनान् (व)

---

(भ) वसन्तविलास—वसन्तशोभाम्।

(म) अरिष्टस्य—अमङ्गलस्य। शान्तिः,—उपद्रवनिवारणम्।

(य) सभामण्डप—परिषत्सदनम्।

(र) भरतान्—नटान्, सङ्गीतज्ञानित्यर्थः।

(ल) नवरत्नखचितं—"मुक्तामाणिक्यवैदूर्य्यगोमेदाः वज्रविद्रुमौ। पद्मरागं मरकतं नीलञ्च" इत्युक्तैः रत्नसमूहैः बद्धम्, अलङ्कृतमिति यावत्।

(व) कला—गीतादिविद्या, सा च चतुःषष्टिविधा शैवतन्त्रोक्ता, यथा,—१ गीतम् २ वाद्यम्, ३ नृत्यम्, ४ नाट्यम्, ५ आलेख्यम्, ६ विशेषकच्छेद्यम्, ७ तण्डुलकुसुमबलिविकाराः, ८ पुष्पास्तरणम् ९ दशनवसनाङ्गरागाः, १० मणि-भूमिकाकर्म्म, ११ शयनरचनम् १२ उदकवाद्यम् १३ उदकघातः, १४ चित्रायोगाः,

वस्त्रादिना सम्भावितवान्। तदनन्तरं गायकाः वसन्तरागालापं कृत्वा वसन्तं जगुः। ततो राजा तेभ्यो वीटिकां (ग) ददौ।

अत्रान्तरे कश्चिद्ब्राह्मणः सकन्यकः समागत्य,—

"कल्याणदायि भवतोऽस्तु पिनाकपाणेः
पाणिग्रहे भुजगकङ्कणभूषितस्य।
सम्भ्रान्तदृष्टि सहसैव नमः शिवायै-
त्यर्द्धोक्तलज्जितनतं मुखमम्बिकायाः" ॥ १८७ ॥

---

१५ माल्यग्रथनविकल्पाः, १६ केशशेखरापीडयोजनम्, १७ नेपथ्ययोगाः, १८ कर्णपत्रभङ्गाः, १९ गन्धयुक्तिः, २० भूषणयोजनम्, २१ इन्द्रजालम्, २२ कौचुमारयोगाः, २३ हस्तलाघवम्, २४ चित्रशाकापूपभक्ष्यविकारक्रिया २५ पानकरसरागासवयोजनम्, २६ सूचीवापकर्म्म २७ वीणाडमरुकसूत्रक्रीडा, २८ प्रहेलिका, २९ प्रतिमा, ३० दुर्वचकयोगाः ३१ पुस्तकवाचनम्, ३२ नाटिकाऽऽख्यायिकादर्शनम्. ३३ काव्यसमस्यापूरणम् ३४ पट्टिकावेत्रबाणविकल्पाः, ३५ तर्कूकर्म्माणि, ३६ तक्षणम्, ३७ वास्तुविद्या, ३८ रूप्यरत्नपरीक्षा ३९ धातुवादः, ४० मणिरागज्ञानम्, ४१ आकरज्ञानम्, ४२ वृक्षायुर्वेदयोगाः. ४३ मेषकुक्कुटलावकयुद्धविधिः ४४ शुकसारिकाप्रलापनम्, ४५ उत्सादनम्, ४६ केशमार्ज्जनकौशलम्, ४७ अक्षरमुष्टिकाकथनम् ४८ म्लेच्छितकविकल्पाः, ४९ देशभाषाज्ञानम् ५० पुष्पशकटिकानिमित्तज्ञानम् ("निमित्तज्ञानम्" इति पृथक् केचित् पठन्ति ) ५१ यन्त्रमातृका, ५२ धारणमातृका ५३ सम्पाठ्यम् ५४ मानसी काव्यक्रिया. ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ अभिधानकोषच्छन्दोज्ञानम्. ५८ वस्त्रगोपनानि ५९ द्यूतविशेषः, ६० आकर्षणक्रीड़ा. ६१ बालकक्रीड़नकानि ६२ वैनायिकीनां विद्याना ज्ञानम्, ६३ वैजयिकीनां विद्यानां ज्ञानम् ६४ वैतालिकीना विद्याना ज्ञानम् [ इति भाग० १०४५ अध्या० २८ श्लोकटीकाया श्रीधरस्वामिलिखिता। क्वचित् पुस्तके सूचीवापकर्म्मसूत्रक्रीडेत्येकं पदं तदुत्तरं वीणाडमरुकवाद्यानीति, "वैतालिकीनाम्" इत्यत्र "वैयासिकीनाम्" इति च पाठो दृश्यते। खिलशुक्रनीतिशास्त्रे तु द्वितीयाध्याये अन्यविधा उक्ता, सा तु तत्र मृग्या ]।

( ग ) वीटिकां—सज्जितताम्बूलम्, तत्तु विदायप्रदाने प्रसिद्धम्।

हरपार्व्वत्योः विवाहवर्णनमूलकम् आशीःश्लोकमाह, कल्याणेति।—भुजगकङ्कणभूषितस्य सर्परूपवलयालङ्कृतस्य, पिनाकपाणेः शिवस्य, पाणिग्रहे विवाहकाले,

इत्याशिषः प्रयुज्य चावदत्,—"भो राजन्! विज्ञप्तिरेकाऽस्ति"। राज्ञोक्तं,—"निवेदय"। ब्राह्मणेनोक्तम्,—"अहं नन्दिवर्द्धननगरवासी ब्राह्मणः। ममाष्टौ पुत्रा एव जाताः, परं नैकाऽपि दुहिता सम्भूता। ततः अतिदुःखितेन सभार्य्येण मया जगदम्बिकायाः पुरतः एवं सङ्कल्पः (ष) कृतः, यत्—'मातः अम्बिके! मम कन्या यदि भविष्यति, तदा तां तव नाम धारयिष्यामि। अन्यच्च,—तत्कन्यया तुलितं (स) सुवर्णं तुभ्यं दास्यामि, कन्याञ्च तां कस्मैचित् वैदिकवराय वराय (ह) सम्प्रदास्यामि' इति। कालेन जगदम्बिकाप्रसादात् मम इयं सुलक्षणा दुहिता समजायत। इदानीम् अस्या विवाहकालः समायातः; सम्प्रति च अस्याः एकादशस्थाने गुरुर्वर्त्तते इति कथमपि अयं कालो नोपेक्षणीयः इति सम्प्रत्येव तस्या विवाहं दातुमुद्युक्तः। अतोऽहं पूर्व्वप्रतिश्रुतं कन्यया तुलितं सुवर्णं देव्यै दातुम् इच्छामि। 'अन्यः कश्चित् विक्रमं विना राजा भूमण्डले नास्ति, यः एतत् कन्यातुलितं सुवर्णं दातुं प्रभवति' (क) इति त्वदन्तिकं समागतोऽस्मि"।

राज्ञोक्तं,—"भो ब्राह्मण! साधु समनुष्ठितं त्वया. तव यावता धनेन कार्य्यं भवति, तावद्धनं गृहाण" इति। ततः राजा भाण्डारिकमाहूयोक्तवान्,—"भो भाण्डारिक! अस्मै ब्राह्मणाय एतत्-

अम्बिकायाः पार्व्वत्याः, कालसर्पं दृष्ट्वा अतिभीतायाः इति भावः, सहसैव हठादेव, सम्भ्रान्तदृष्टि चकितदृष्टियुक्त, नम शिवायेति इत्यस्य वाक्यस्य इत्यर्थः अर्द्धोक्तेन अर्द्धोच्चारणेन, लज्जितं व्रीडितं, नतञ्च नम्रीकृतञ्च, मुखं वदनं, भवतः तव, कल्याणदायि मङ्गलप्रदम्, अस्तु भवतु। वसन्ततिलकं वृत्तम्॥ १८७॥

(ष) सङ्कल्पः,—मानसकर्म्मविशेषः।

(स) तुलितं—परिमितम्।

(ह) वराय—श्रेष्ठाय।

(क) दातुं—वितरितुम्। प्रभवति—शक्नोति।

कन्यातुलितं सुवर्णं देहि, पुनरप्यष्टवर्गार्द्धमष्टकोटिसुवर्णं (ख) पृथक् दीयताम्"। ततस्तेन आज्ञप्तो भाण्डारिकस्तस्मै ब्राह्मणाय तावत् सुवर्णं ददौ। ब्राह्मणोऽप्यतिसन्तुष्टः सन् कन्यया सह निजस्थानमगात्। राजाऽपि शुभे मुहूर्त्ते पुरं प्रविवेश"।

अथ पुत्तलिकाऽब्रवीत्,—"देव! त्वयि औदार्य्यम् एवं विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीम् आसीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे कन्यातुलित-सुवर्णदान नाम षोडशोपाख्यानम्] ॥ १६ ॥

---

## अथ परोपकाराय स्वदेहाहुतिदानं नाम सप्तदशोपाख्यानम्।

अथ तदेव सिंहासनं समाचङ्क्रम्यमाणं राजानं पुनरन्या पुत्तलिकाऽवदत्,—"शृणु राजन्! औदार्य्ये विक्रमसदृशोऽन्यो नासीत्, निर्मलेन औदार्य्यगुणेन त्रिभुवने तस्य कीर्त्तिः विस्तारं गता। सर्व्वेऽर्थिजनास्तमेव राजानं स्तुवन्ति। सर्व्वदा स्वस्तिवचनं दातॄणामेव प्रीत्यै भवति। उक्तञ्च,—

---

(ख) अष्टवर्गार्द्धमष्टकोटिसुवर्णम्—अष्टानां वर्गो समूहः, अष्टगुणिताष्टसङ्ख्या, चतुःषष्टिरित्यर्थः तस्याः अर्द्धं द्वात्रिंशत् इत्यर्थः, तथाविधम् अष्टकोटिसुवर्णं द्वात्रिंशद्गुणिताष्टकोटिसुवर्णं, षट्पञ्चाशदधिकद्विशतकोटिसङ्ख्याकाः सुवर्णमुद्रा इत्यर्थः।

इति षोडशोपाख्यानम् ॥ १६ ॥

दातॄणामेव सम्प्रीत्यै स्वस्तिवाचो धनार्थिनाम् ।
शूराणां हि प्रहाराय रसितं रणदुन्दुभेः ॥ १९८ ॥

वीर्य्य-धैर्य्य-ज्ञानानुष्ठानादयो गुणाः सर्वेषामेव भवितुमर्हन्ति, न तु त्यागगुणः । उक्तञ्च,—

द्रुह्यन्ति पशवः सर्वे पठन्ति च शुकादयः ।
ददाति कोऽपि दानं यः स शूरः स च पण्डितः ॥ १९९ ॥
केचित् स्वभाववीरा हि दयावीराश्च केचन ।
ते सर्व्वे दानवीरस्य कलां नार्हन्ति षोड़शीम् ॥ २०० ॥

---

गृहीतमुखोच्चरितस्वस्तिवचोभिः दातारः यादृक् प्रीणन्ति न तथा अन्ये, इति दर्शयितुं प्रमाणभूत श्लोकमाह, दातॄणामिति ।—धनार्थिनां याचकानां, स्वस्तिवाचः "स्वस्ति" इति स्वीकारोक्तिरूपमङ्गलवचनानि, दातॄणां दानकारिणामेव, सम्प्रीत्यै सन्तोषाय, भवन्तीति शेष । अत्र दृष्टान्तमाह,—रणदुन्दुभेः युद्धकालीनढक्कायाः, रसित शब्दः, शूराणां हि वीराणामेव, [ अत्र हिशब्दो निश्चयार्थकः ] प्रहाराय युद्धाय, युद्धे उत्साहसम्पादनार्थम् इति यावत् भवतीति शेषः । इतः २०१ सङ्ख्यकश्लोकपर्यन्त पथ्यावक्त्र वृत्तम् ॥ १९८ ॥

दातुरेव शूरत्व पाण्डित्यञ्च इति प्रतिपादयितुमाह, द्रुह्यन्तीति ।—सर्व्वे पशवः हिंस्रजन्तवः, द्रुह्यन्ति परस्परं हिंसन्ति, न च तेन ते शूरपदवाच्या भवन्तीति भाव , शुकादय. शुकप्रभृतयः पक्षिणोऽपि, पठन्ति मनुष्यवत् वाक्य ब्रुवन्ति, चकारात् द्रुह्यन्ति, पर तेनापि न ते पण्डितपदवाच्याः, न वा शूरा इति भावः ; यः कोऽपि दान ददाति, स एव शूरः शूरपदवाच्यः, दानवीर इत्यर्थ., स पण्डितश्च पण्डितपदवाच्यश्च, सार्थकीकृतार्थजातत्वात् इति भावः, कथ्यते लोकैरिति शेषः ॥ १९९ ॥

दानशील एव जगति एक. श्लाघ्यतम इति वक्तुमाह, केचिदिति ।— केचित् जनाः, स्वभाववीरा' शूरस्वभावाः स्वभावतः शूरा वा भवन्ति , केचन जनाः, दयावीराः अत्यन्तदयापराश्च भवन्ति , ते सर्वे सकलाः, स्वभाववीराः दयावीराश्चेत्यर्थ., दानवीरस्य प्रदानोत्साहवत्त्वात् अत्यन्तदानशीलस्य जनस्य, षोडशी कला षोडशभागैकभागमपि, नार्हन्ति वितरणोत्साह-साहसवत्तायाः षोड़शभागैकभागयोग्या अपि न भवन्तीत्यर्थः । दानवीरा एव सर्वविधवीराणा श्रेष्ठा इति भावः ॥ २०० ॥

त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः।
त्यागादेव हि पूज्यन्ते पशुपाषाणपादपाः॥ २०१॥

त्यागो गुणो गुणशतादधिको मतो मे
विद्याऽपि भूषयति तं यदि किं ब्रवीमि ?।
शौर्य्यञ्च नाम यदि तत्र नमोऽस्तु तस्मै
तच्च त्रयं न च मदोऽप्यति विक्रमे यत्॥ २०२॥

एतच्चतुष्टयं (ग) तस्मिन् विक्रमार्के सदैवासीत्।
एकदा परमण्डलस्थस्य (घ) कस्यचिद्राज्ञः पुरतः केनचित्

सर्व्वगुणेषु दानरूपगुणस्य प्राधान्यं प्रदर्शयितुमाह, त्याग इति।—एकः केवलः, त्यागः दानं, श्लाघ्यः प्रशंसनीयः, गुणः, कथ्यते लोकैरिति शेषः, अन्यैः अपरैः, गुणराशिभिः बहुभिः गुणैः, किम् ? किं फलम् ? न किमपि इति भावः, पशुपाषाणपादपाः पशवः प्रस्तराः वृक्षाश्चापि, त्यागादेव स्वायत्तीकरणाभावादेव, पूज्यन्ते गौः शालग्रामादिशिला चैत्यवृक्षाश्च पूजिता भवन्ति, हि निश्चये॥ २०१॥

दातुः शूरत्वविद्वत्त्वादिगुणसद्भावे तु सर्वथा प्रशंसनीयत्वमाह, त्याग इति।—त्यागो गुणः दानगुणः, गुणशतात् अन्यबहुगुणात्, अधिकः श्रेष्ठः, इति मे मतः मम सम्मतः; यदि चेत्, तं त्यागशीलं जनं, विद्याऽपि भूषयति अलङ्करोति, तर्हि किं ब्रवीमि ? अनिर्वचनीयः स भवतीत्यर्थः, तत्र तादृशजने, यदि नाम सम्भावनायां, शौर्य्यं वीरत्वञ्च, स्यात् इति शेषः, तर्हि तस्मै नमोऽस्तु तदानीं सर्वेषामेव स नमस्य इत्यर्थः, तत् पूर्व्वोक्तं, त्रयं गुणत्रयञ्च, विक्रमे राजनि, विद्यते इति शेषः. अपि मदश्च अत्र अपि सम्भावनायां, तेन सम्भावितो गर्व्वश्च इत्यर्थः, न तस्मिन् न विद्यते इत्यर्थः इति यत् तदेव अति तस्य आधिक्यम्। [ननु अत्र अतिशब्दस्य उपसर्गत्वेन वाचकत्वाभावात् कथं स्वशक्त्या आधिक्यवाचकत्वमिति चेन्न, "स्वजनेन च सन्त्यक्तास्तेषु हार्दी तथाऽप्यति" इति देवीमाहात्म्योक्तवचनबलेन उपसर्गभिन्नस्य अव्ययस्यापि अतिशब्दस्य प्रमातुं शक्यत्वादिति न कोऽप्यनुपपत्तिलेशः] अतोऽनन्यसाधारणः स इति भावः। वसन्ततिलकं वृत्तम्॥ २०२॥

(ग) एतच्चतुष्टयं—दान, विद्या, शौर्य्यं, मदराहित्यञ्चेत्यर्थः।

(घ) परमण्डलस्थस्य—परमण्डले उभयतो विंशतियोजनमितदेशान्तरविशेषे, तिष्ठति यः सः तस्य, चतुःशतयोजनमितदेशविशेषाधिपस्य इत्यर्थः, परमण्डले राष्ट्रान्तरे शत्रुमध्ये वा तिष्ठतीति तस्य, राष्ट्रान्तराधिपस्य इति वाऽर्थः।

स्तुतिपाठकेन विक्रमार्कस्य गुणावली पठिता। तेन राज्ञा तां श्रुत्वा मनसि स्पर्द्धां विधाय, स्तुतिपाठकं प्रति उक्तं,—"भो वन्दिन्! किमर्थमेते सर्वे स्तुतिपाठकाः विक्रममेव राजानं स्तुवन्ति? किमन्यो राजा त्रिभुवने नास्ति?" वन्दिनोक्तं,—"भो राजन्! त्यागे, उपकारे, साहसे, शौर्य्ये, धैर्य्ये च तेन सदृशो राजा त्रिभुवनेऽपि नास्ति। परोपकारकरणे तस्य स्वदेहेऽपि ममत्वं नासीत्"।

तस्य तद्वचनं श्रुत्वा स राजा, "अहमपि परोपकारं करिष्यामि" इति मनसि विचार्य्य, कञ्चन योगिनमाहूय अवादीत्,—"भो योगिन्! परोपकारकरणार्थं प्रतिदिनं नवं नवं द्रव्यं यथा भवति, तथा कश्चिदुपायोऽस्ति न वा?" योगिनोक्तं,—"भो राजन्! किमिति नास्ति?" राज्ञोक्तम्,—"अस्ति चेत्, तमुपायं ममाग्रे निवेदय, अहं तं साधयामि"। योगिनोक्तं,—कृष्णचतुर्द्दशीदिवसे चतुःषष्टियोगिनीचक्रं (ङ) पूजनीयं, तत्पुरतो मन्त्रपुरश्चरणं (च) विधाय तद्दशांशहोमः (छ) कर्त्तव्यः, होमावसाने पूर्णाहुतिनिमित्तं (ज) स्वशरीरमग्नौ होतव्यम्"।

ततो राज्ञा तथाऽनुष्ठिते योगिनीचक्रं तस्य मांसं भक्षयित्वा अतीव प्रसन्नं भूत्वा अमृतेनाभिषिच्य च राज्ञे नवं शरीरं दत्त्वा भणति,—"भो राजन्! वरं वृणीष्व"। राज्ञोक्तं,—"भो मातरः! यदि प्रसन्नाः सन्ति भवत्यः, तर्हि मम गृहे ये सप्त

---

(ङ) चतुरिति।—अक्षोभ्यादिचतुःषष्टियोगिनीवृन्दम्।

(च) मन्त्रपुरश्चरणं—गृहीतमन्त्रसिद्धिहेतुकप्रयोगविशेषम्।

(छ) तद्दशांशहोमः,—अभीष्टदेवोद्देशकसञ्जप्तमन्त्रसङ्ख्यायाः दशांशहवनम्।

(ज) पूर्णाहुतिनिमित्तं—पूर्णाहुतिः होमसमाप्तौ कार्य्या आहुतिः, तन्निमित्तमित्यर्थः।

महावटाः सन्ति, तान् प्रतिदिनं सुवर्णपूर्णान् कुर्वन्तु"। ताभिरेवमुक्तं,—"त्वम् एवं मासत्रयं प्रतिदिनं स्वशरीरमग्नौ होष्यसि चेत्, तर्हि तथा वयं करिष्यामः"। राजाऽपि "तथाऽस्तु" इत्युक्त्वा प्रतिदिनं स्वशरीरमग्नौ जुहोति; योगिनीचक्रमपि प्रतिदिनं तथैव करोति।

एकदा विक्रमार्को राजा कथाप्रसङ्गेन इमां वार्त्तां श्रुत्वा तत् स्थानं समागत्य, तत्रत्यनृपतेः आगमनात् प्रागेव पूजादिकं विधाय पूर्णाहुतिसमये होमाग्नौ स्वदेहं पातयामास। ततो भक्षणसमये योगिनीभिः परस्परं भणितम्,—"अद्य तन्वन्तरमांसम् (भ) अतीव स्वादुतरं विद्यते, अस्य हृदयं महासारम् (ञ) अस्ति, इत्यसाधारणसत्त्वसारो न भक्षणीयः" इत्युक्त्वा पुनस्तमुज्जीव्य भणितं,—"भो महासत्त्व! (ट) को भवान्? तव शरीरत्यागे किं वा प्रयोजनम्?" तेनोक्तं,—"मया परोपकारार्थं शरीरमग्नौ हुतम्"। योगिनीभिर्भणितं,—"तर्हि वयं प्रसन्नाः स्मः, वरं वृणीष्व"। राज्ञोक्तं,—"यदि मयि प्रसन्नाः सन्ति भवत्यः, तर्हि अयं राजा मरणात् प्रतिदिनं महत् कष्टम् अनुभवति, तत् निवारणीयम्; विनैव देहपातम् अस्य सप्त महाघटाः नित्यं सुवर्णेन पूरणीयाः। योगिनीभिर्भणितं,—"भवतु, तथा करिष्यामः" इति अङ्गीकृत्य ताभिः राज्ञः मरणं निवारितं, घटाश्च प्रत्यहं सुवर्णेन पूरिताः। अथ राजा निजनगरं प्रत्यागतः"।

इमां कथां कथयित्वा पुत्तलिका भोजमवदत्,—"भो राजन्! त्वयि एवं परोपकारः, धैर्य्यं, दया च विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे परोपकाराय स्वदेहाहुतिदानं नाम सप्तदशोपाख्यानम्] ॥ १७॥

## अथ सूर्य्यलोकगमनं नाम अष्टादशोपाख्यानम्।

पुनरपि भोजो यावत् सिंहासने समुपवेष्टुकामो याति, तावदन्या पुत्तलिका तं निवारयन्ती भणति,—"भो राजन्! नीतिकुशलो विक्रमो राजा सुनयेन प्रजाः पालयन् औदार्य्यादिगुणैः सर्व्वलोकानां वरणीयोऽभवत्। तस्येदं सिंहासनं, तदनुरूपा नीतिकुशलता औदार्य्यादयो गुणाश्च त्वयि सन्ति चेत्, तर्हि एतत् सिंहासनम् अध्यासितव्यम्"। राज्ञोक्तं,—"नीतिमार्गः (ढ) कीदृशः कथ्यताम्"। पुत्तलिकयोक्तं,—"भो राजन्! श्रूयतां,—मणिपुरे गोविन्दशर्मा ब्राह्मणः सकलनीतिशास्त्रज्ञः स्वपुत्राय नीतिशास्त्रं कथयति, तदा मयाऽपि नीतिशास्त्रं श्रुतम्; तत् तुभ्यं निवेदयामि"। राज्ञोक्तं,—"निरूपय" (ड)। पुत्तलिकयोक्तं,—"श्रूयतां राजन्। बुद्धिमता पुरुषेण दुर्जनैः सह सङ्गो न कर्त्तव्यः, यतः स एव अनर्थपरम्पराया हेतुर्भवति। उक्तञ्च,—

दुर्वृत्तसङ्गतिरनर्थपरम्पराया
हेतुः सतां भवति किं वचनीयमत्र ?।

(भ) तन्वन्तरेति।—तन्वन्तरस्य अन्यदेहस्य मासम्।

(ञ) महासार—सारवत्तया अतीवश्रेष्ठम, अतिसुमिष्टमित्यर्थः।

(ट) महासत्त्व—महाप्राण, महाबल इति वा।

इति सप्तदशोपाख्यानम् ॥ १७ ॥

---

(ढ) नीतिमार्ग,—नीतिशास्त्रोक्ताचारपथ.।

(ड) निरूपय—वर्णय इत्यर्थ.।

हाभ्या श्लोकाभ्या दुर्जनसमगेस्य दोषमाह, दुर्वृत्तेति।—दुर्वृत्तेन दुर्जनेन सह,

लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥ २०३ ॥

अपि च।—

अपनयति विनयमनयं घटयति नाशयति च यशांसि।
निरयं रचयति तरसा पुंसामसतः समागमो जगति ॥ २०४ ॥

सज्जनानां सङ्गो विधेयः। लोके सत्सङ्गात् परो लाभो नास्ति, यतो महानन्दादयो गुणा जायन्ते। उक्तञ्च—

कन्दलयत्यानन्दं निन्दति यो मन्दानिलेन्दुचन्दनम्।
दमयति च मन्दभावं सन्धत्ते सम्पदोऽपि सत्सङ्गः ॥ २०५ ॥

अन्यच्च—केनापि वैरं न कर्त्तव्यं, परेषां सन्तापो न

---

सङ्गति. सङ्गः, सता सज्जनानाम्, अनर्थपरम्परायाः अनिष्टधारायाः, हेतुः कारणं, भवति, अत्र अस्मिन् विषये किं वचनीयम्? वक्तव्यम्? अस्तीति शेषः, न किमपि इत्यर्थः, अत्र दृष्टान्तमाह,—लङ्केश्वरः रावणः, दाशरथेः रामचन्द्रस्य, कलत्रं पत्नीं, हरति जहारेत्यर्थः, अथ तस्य दोषेण प्रतिवासी दक्षिणसिन्धुराजः दक्षिणसागरः, बन्धं बन्धनं, प्राप्नोति प्राप्तवानित्यर्थः। सिन्धुतीरे एव लङ्कायाः अवस्थानात् सागरस्य दुर्वृत्तलङ्काधिपतिसंसर्गः सदैव अपरिहार्य्य आसीत्, अतस्तस्य दुर्वृत्तसङ्गतेः सिन्धुबन्धप्राप्तिरूपानर्थस्य कारणत्वं युज्यते एवेति भावः। वसन्ततिलकं वृत्तम् ॥ २०३ ॥

अपनयतीति।—जगति इहलोके, असतः दुर्जनस्य, समागमः सङ्गः, पुंसां जनानां, विनयं नम्रतागुणम् अपनयति विनाशयति, अनयं दुर्नीतिं, घटयति जनयति, यशांसि कीर्त्तींश्च, नाशयति विलोपयति, तरसा बलेन निरयं नरकं, रचयति निर्म्माति च, नरकगमनमूलमित्यर्थः। उद्गीतिनामा आर्य्याभेदश्छन्दः ॥ २०४ ॥

सत्सङ्गे जायमानान् गुणानाह कन्दलयतीति।—सत्सङ्गः सज्जनसमागमः, आनन्दं सन्तोषसुखं, कन्दलयति उद्गमयति, वर्द्धयतीत्यर्थः, यः सत्सङ्गजनितः आनन्दः, मन्दानिलं मन्दवायुम्, इन्दुं चन्द्रं चन्दनञ्च निन्दति, [मन्दानिलश्च इन्दुश्च तौ मन्दानिलेन्दू ताभ्यां सहितं चन्दनम् इति मन्दानिलेन्दुचन्दनम् इति विग्रहः] एतेभ्योऽपि सत्सङ्गजानन्दः अधिकप्रीतिप्रद इति भावः। मन्दभावं मन्दतां, जडतामित्यर्थः, दमयति नाशयति, सम्पदोऽपि धनानि च, सन्धत्ते प्रापयतीत्यर्थः। आर्य्या वृत्तम् ॥ २०५ ॥

करणीयः, निरपराधा भृत्या न दण्डनीयाः, महादोषं विना स्त्री न त्याज्या. यतो नरकभाक् (ढ) भवति। उक्तञ्च—

आज्ञासम्पादिनीं दक्षां सुरूपां शीलमण्डनाम्।
योऽदृष्टदोषां त्यजति सोऽक्षयं नरकं व्रजेत्॥ २०६॥

लक्ष्मीः स्थिरेति न मन्तव्या, परं पद्मपत्रस्थवारि इव चञ्चला। उक्तञ्च,—

अनुभव दरदं वित्तं मान्यान् मानय सज्जनान् भजत।
अतिपरुषपवनविलुलितदीपशिखेव चञ्चला लक्ष्मीः॥ २०७॥

न स्त्रियै गुह्यं वचनं निवेदनीयं, भविष्यच्चिन्ता न कार्य्या, वैरिणामपि हितमेव कथनीयं, नित्यं दानाध्ययनादिकं विना दिवसं न यापयेत्, पित्रोः सेवा कर्त्तव्या, चौरैः सह सम्भाषणं न कर्त्तव्यं, सर्वदा निष्ठुरमुत्तरं न वाच्यम्, अल्पनिमित्तं न बहु करणीयम्। (ण) उक्तञ्च।—

---

(ढ) नरकभाक्—पापानुरूपरौरवादियन्त्रणाभोगी।

निरपराधायाः स्त्रियाः त्यागे निरयभागित्व प्रदर्शयित प्रमाणभूत श्लोकमाह, आज्ञेति।—यः जनः, आज्ञासम्पादिनीम् आदेशानुवर्त्तिनी, दक्षा कार्य्यनिपुणा, सुरूपां सुन्दरी, शीलमण्डनां सत्स्वभावभूषिताम्, अदृष्टदोषा न दृष्ट. दोषो यस्यास्ताम्, अनवधारितदोषामित्यर्थ., स्त्रियमिति शेष., त्यजति वर्जयति, स. तादृशजनः, अक्षयं चिरस्थायि, नरक निरय, व्रजेत् गच्छेत्, विना दोषेण स्त्रीत्यागो महापापजनकः इति भाव। पथ्यावक्त्र वृत्तम्॥ २०६॥

सत्सङ्गः अवश्यमेव विधेय' इत्युपदेष्टु तदन्तरायभूतानां सम्पदाम् अनर्थकारणत्वम् अस्थायित्वञ्चाह, अनुभवेति।—वित्त धनं, दरः भय, [दीर्य्यते अस्मात् दृ भये अप् (३।३।५७ पा०) "दरः स्यात् भयगर्त्तयो." इत्यमरः] त ददातीति तं दरद भयप्रदम्, अनुभव जानीहि, मान्यान् माननीयजनान्, मानय आद्रियस्व, सज्जनान् साधुजनान् भजत सेवध्व, यतः लक्ष्मीः सम्पत्, अतिपरुषपवनेन अतिप्रबलवायुना, विलुलिता सञ्चालिता, या दीपशिखा तद्वत् चञ्चला अस्थिरा, भवतीति शेषः। आर्य्या वृत्तम्॥ २०७॥

(ण) अल्पेत्यादि।—सामान्यकार्य्यार्थं विपुलाड़म्बरः व्ययो वा न कार्य्यः इत्यर्थः।

न स्वल्पस्य क्वते भूरि नाशयेन्मतिमान् नरः।
एतदेव हि पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम् ॥ २०८॥

आर्त्ताय दानं दातव्यं, धर्म्मज्ञानेन मनसा, कर्मणा, वाचा परोपकारः कर्त्तव्यः। एतत् सामान्यपुरुषाणां (त) नीतिशास्त्रमुपदिष्टम्। स विक्रमो राजा स्वभावत एव नीतिशास्त्रज्ञः।

एवं काले गच्छति, एकदा कश्चित् वैदेशिकः समागत्य राजानं दृष्ट्वा उपविष्टः। ततो राज्ञा भणितं,—"भो महात्मन्! तव निवासः कुत्र?" तेनोक्तं,—"भो राजन्! अहं वैदेशिकः, मम कोऽपि निवासो नास्ति, सर्वदा परिभ्रमणमेव करोमि"। राज्ञोक्तं,—"पृथिवीं भ्रमता त्वया किं किम् अपूर्वं दृष्टम्?" तेनोक्तं,—"भो राजन्! महदेकम् आश्चर्य्यं दृष्टम्"। राज्ञोक्तं,—"किं तत्?" तेनोक्तम्,—"उदयाचले (थ) आदित्यस्य महान् प्रासादोऽस्ति, तत्र गङ्गा प्रवहति, गङ्गातटे पापविनाशनो नाम शिवालयोऽस्ति। तत्र गङ्गाप्रवाहात् कश्चित् सुवर्णस्तम्भो निर्गच्छति, तस्य उपरि नवरत्नखचितं सिंहासनमस्ति। स सुवर्णस्तम्भः सूर्य्योदयादुपरि (द)

---

स्वल्पकर्म्मणः स्वल्पेन सम्पादन पाण्डित्यलक्षणमिति वक्तु शिष्टोक्तिं दर्शयति, नेति। —मतिमान् बुद्धिमान्, नर लोकः, स्वल्पस्य अत्यल्पवस्तुनः क्वते निमित्तं भूरि प्रभूतद्रव्य, न नाशयेत् स्वल्पार्थं प्रभूतव्ययो न कार्य्य इत्यर्थ., तदुक्त रघौ—"अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः—" इत्यादि। स्वल्पात् स्वल्पापेक्षया, यत् भूरिरक्षण प्रभूतवस्तुरक्षा, एतदेव पाण्डित्य विज्ञस्य कार्य्यमित्यर्थ., हि निश्चये। पथ्यावक्त्र वृत्तम् ॥ २०८॥

(त) सामान्यपुरुषाणा—साधारणजनाना. सर्व्वेषामेव पुसामित्यर्थ।

(थ) उदयाचले—उदयगिरौ, सूर्य्याद्युदयस्थाने, पर्व्वतवत् आच्छादके भूवृत्तपादे इति यावत्।

(द) सूर्य्योदयादुपरि—सूर्य्योदयात् पश्चात्काले, सूर्य्योदयानन्तरमित्यर्थः।

पूर्णवृद्धिं लब्ध्वा मध्याह्ने सूर्य्यमण्डल (ध) प्राप्नोति। ततः सूर्य्यो यावदस्तं गच्छति, तावत् स्वयमेव प्रत्यावृत्य गङ्गाप्रवाहे मज्जति। प्रतिदिनमेवं तत्र भवति। एतन्महदाश्चर्य्यं मया दृष्टम्"।

राजा विक्रमोऽपि तच्छ्रुत्वा, तेन सह तत् स्थानं गतो रात्रौ निद्रां गतः। प्रभातसमये सूर्य्यस्य यावदुदयो भवति, तावत् गङ्गाप्रवाहात् रत्नसिंहासनयुक्तो हेमस्तम्भः (न) निर्गतः। तस्मिन् समये स्तम्भे राजा स्वयमुपविष्टः। स्तम्भोऽपि सूर्य्यमण्डलं प्रति गन्तुं प्रवृत्तः यावत् सूर्य्यसमीपं गच्छति, तावदग्निकणासदृशैः सूर्य्यकिरणैः राजशरीरं मांसपिण्डाकारमभूत्। ततः पिण्डरूपेण सूर्य्यमण्डलं प्राप्य,—

"नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने" ॥ २०९ ॥

इत्येवं नमश्चकार। सूर्य्यः स्तम्भम् अमृतेनाभ्यषिञ्चत्। तेन राजा दिव्यशरीरो जातः। सूर्य्येणोक्तं,—"भो राजन्! त्वं

(ध) सूर्य्यमण्डलं—रविचक्रवालं, रवेः चक्राकारेण वेष्टनमित्यर्थः।

(न) हेमस्तम्भः,—कनकस्थूणा।

सूर्य्यस्य प्रणामपरं श्लोकमाह, नमः इति।—जगदेकचक्षुषे जगताम् एकमात्रचक्षुःस्वरूपाय, तेजोमयत्वात् जगत. प्रकाशकत्वाच्च इत्यर्थः, जगतां प्रसूतिः उद्भवः, स्थितिः अवस्थानं नाशः लयः, तेषां हेतवे निदानाय, सृष्टिस्थितिलयकारणायेत्यर्थ., त्रयीमयाय वेदस्वरूपाय, त्रिगुणात्मधारिणे त्रिगुणा सत्त्वरजस्तमोगुणमयी प्रकृतिः, आत्मानः जीवाश्च, तेषामाश्रयभूताय विरिञ्चिः ब्रह्मा, नारायणः विष्णुः, शङ्करः शिवश्च, आत्मा स्वरूप यस्य तादृशाय, सवित्रे सूर्य्याय, नमः। वंशस्थविलं वृत्तम् ॥ २०९ ॥

महासत्त्वाधिकोऽसि, (प) यदेतन्मण्डलं कस्यापि (फ) अगम्यं, तत्र त्वं प्राप्तोऽसि ; तदहं प्रसन्नोऽस्मि, वरं वृणीष्व"। राजा वदति,—"किं मत्तोऽधिकः परोऽस्ति ? यन्मुनीनामप्यगम्यं तव स्थानं, तदहं प्राप्तः। तव प्रसादात् सर्वमप्यर्थजातं (ब) मम सञ्जातम्"। तद्वचनेनातिसन्तुष्टः सूर्यो नवरत्नखचिते स्वकीय-कुण्डले (भ) दत्त्वा भणति,—"भो राजन्! एतत् कुण्डलद्वयं प्रतिदिनमेकं सुवर्णभारं (म) प्रयच्छति"। ततो राजा कुण्डल-द्वयं गृहीत्वा, पुनः सूर्यं नमस्कृत्य प्रत्यावृत्तात् तस्मात् स्तम्भादुत्तीर्य यावदुज्जयिनीं प्रति आगच्छति, तावत् कश्चित् ब्राह्मणो मार्गे समागत्य,—

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः" ॥२१॥

---

(प) महेति।—महत् सत्त्वं येषा ते महासत्त्वाः महात्मानः, महाबलाः वा, तेषु अधिकः श्रेष्ठः, असि भवसि।

(फ) कस्यापि—केनापीत्यर्थः, [ कृद्योगात् कर्त्तरि षष्ठी ]।

(ब) अर्थजात—भोग्यवस्तुसमूहः।

(भ) स्वकीयकुण्डले—स्वीयकर्णाभरणे।

(म) सुवर्णभारम्—अष्टसहस्रतोलकपरिमितं स्वर्णम्।

भगवतः महेश्वरस्य कल्याणजननसामर्थ्यं प्रतिपादयन् आशीःश्लोकमाह, वेदान्तेष्विति।—वेदान्तेषु उपनिषच्छास्त्रेषु, यं स्थाणुं, रोदसी द्यावापृथिव्यौ, ("—रोदश्च रोदसीति च। दिवि भूमौ पृथक् च स्यात् सहोक्त्याऽप्येतयोस्तथा"॥ इति मेदिनी) व्याप्य स्थितं सर्व्वव्यापिनमित्यर्थः, एकपुरुषम् अद्वितीयम्, आहुः कथयन्ति, (अत्र श्रुतिप्रमाणं यथा,—"अस्मिन् द्यौः पृथिवी चान्तरीक्षमोत मनः सह प्राणैश्च सर्वैः तमेवैकं जानीथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति) यस्मिन् स्थाणौ, अनन्य-विषयः नास्ति अन्यः तद्भिन्न इत्यर्थः, विषयः प्रतिपाद्य, यस्य तादृशः, ईश्वर इति शब्दः

इत्याशीर्वादमुच्चार्य्य भणति,—"भो यजमान! (य) अहं कुटुम्बी, (र) ब्राह्मणः, परं दरिद्रः, सर्वत्र भिक्षाऽटनं (ल) करोमि, तथाऽपि उदरं न पूर्य्यते"। तच्छ्रुत्वा राजा कुण्डलद्वयं तस्मै दत्त्वा भणति,—"भो ब्राह्मण! एतत् कुण्डलयुगलं नित्यं सुवर्णभारमेकं तुभ्यं दास्यति"। तच्छ्रुत्वा ब्राह्मणोऽतिसन्तुष्टो राजानं सविशेषं सम्मान्य निजस्थानं जगाम; राजाऽप्युज्जयिनीमगात्"।

इति कथां कथयित्वा पुत्तलिका अब्रवीत्,—"भो राजन्! त्वयि एवम औदार्य्यं धैर्य्यञ्च विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं बभूव।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे सूर्य्यलोकगमनं नाम अष्टादशोपाख्यानम् ] ॥ १८॥

---

यथार्थाक्षर: सार्थकः, अणिमाद्यष्टैश्वर्य्यसद्भावात् इति भाव:, यश्च स्थाणु:, नियमिताः संयमिता: प्राणादय: प्राणापानसमानोदानव्यानाख्याः पञ्च शरीरवायव: यै: तादृशै:, मुमुक्षुभि: मोक्षार्थिभिः योगिभिः, अन्तः आत्मनि, मृग्यते चिन्त्यते, ("एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥" इति श्रुते:) स्थिरेण अचलेन, अनन्येनेत्यर्थ:, भक्तियोगेन सुलभ: लब्धुं शक्य:, स स्थाणु: शिव:, व: युष्माकं निश्चितं श्रेय: इति नि:श्रेयसम् [ '"अचतुर—" (५।४।७७ पा०) इति तत्पुरुषे अजन्तो निपात: ] तस्मै नि:श्रेयसाय, मङ्गलाय, अस्तु भवतु। शार्दूलविक्रीडितं वृत्तम्॥ २१०॥

(य) यजमान—यजति इति यजमान: [ "पूङ्यजोः शानन्" (३।२।१२८ पा०) इति शानन्प्रत्यय: ] तत्सम्बुद्धौ यागकारिन् इत्यर्थ:।

(र) कुटुम्बी—बहुपरिजन:।

(ल) भिक्षाटन—भिक्षार्थं अटनं भ्रमणम्।

इति अष्टादशोपाख्यानम्॥ १८॥

# अथ बलिसन्दर्शनं नाम एकोनविंशोपाख्यानम्।

पुनरपि राजा यावत् सिंहासनम् अधितिष्ठासुर्याति, तावदन्या पुत्तलिका तं निवार्य्यावदत्,—"भो राजन्। तव विक्रमस्येव औदार्य्यादिगुणाः सन्ति चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राज्ञोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्"। सा कथयति,—"श्रूयतां राजन्! विक्रमे सुमहद्भूमण्डलं (व) शासति, सर्व्वेऽपि लोकाः आनन्दपरिपूर्णहृदयाः आसन्। ब्राह्मणाः षट्कर्म्मनिरताः, (श) स्त्रियः पतिव्रताः, शतायुषः पुरुषाः, सदाफलाः (ष) वृक्षाः, कालवर्षी पर्ज्जन्यः, (स) मही सर्व्वदा सम्पूर्णशस्यशालिनी, सर्व्वेषां लोकानां पापात् भयम्, अतिथीनां पूजा, जीवेषु दया, गुरूणां सेवा, सर्व्वदा दीनेभ्यो दानञ्च. एवं प्रजासु वृत्तिः (ह) आसीत्।

अथ एकदा विक्रमः सिंहासने उपविष्टः आसीत्। तत्र सभायामुपविष्टाः नानादेशीयाः सामन्तराजकुमाराः (क)

---

(व) भूमण्डल—पृथ्वीवलयम्।

(श) षडिति।—यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपे षड्विधे कर्म्मणि, निरताः प्रवृत्ताः।

(ष) सदेति।—सदा नित्यं फलं येषां ते सदाफलाः नित्यफलवन्त' इत्यर्थः।

(स) कालेति।—काले यथाकाले वर्षति इति कालवर्षी प्रयोजनानुरूपवर्षणशीलः। पर्जन्यः,—मेघ.।

(ह) वृत्तिः,—व्यवहारः।

(क) सामन्तेति।—सामन्ताः महादेशान्तर्गतक्षुद्रदेशाधिपाः, ये राजानः नृपाः, तेषां कुमाराः।

आसन्। तेषु केचित् स्तुतिपाठकैः स्ववंशावलीः पाठयन्ति, केचनोद्धताः स्वभुजबलं स्वयमेव स्तुवन्ति, केचन षड्विध-दण्डायुधसाधनाभिज्ञाः श्मश्रुलाः (ख) युवानः अन्योऽन्यम् उपहसन्ति, केचन शरणागतपरिपालनप्रवणाः, एके च परत्र विषये ससाधनाः, (ग) केचन च धर्म्मसङ्ग्रहकारिणः इति।

अत्रान्तरे कश्चित् पापर्द्धिः (घ) व्याधः तत्र समागत्य राजानं प्रणम्यावदत्—"भो देव! अरण्यमध्ये अञ्जनपर्व्वताकारः (ङ) महान् वराहः एकः समागतोऽस्ति, तं देवः समागत्य पश्यतु"।

तस्य वचनं श्रुत्वा राजा तैरेव राजकुमारैः सह वनं गत्वा नदीतटस्थितनिकुञ्जान्तर्गतं (च) वराहमेकमपश्यत्। ततोऽसौ वराहोऽपि वीराणां कोलाहलं श्रुत्वा तस्मान्निकुञ्जात् बहिर्निर्गतः। तदनन्तरं सर्व्वैः राजकुमारैः सह महत् स्वहस्त-

---

(ख) षडिति।—षड्विधेत्यादीनां विवृतिः प्राक् भानुमतीकथाया २९ पृष्ठे द्रष्टव्या। "षड्विध' इत्यत्र "षड्विंशति" इति पाठे तु,—षड्विंशतिप्रकाराणि यानि दण्डार्थं शत्रुदमनार्थम्, आयुधानि (तानि अग्रे वक्ष्यन्ते) तेषु तत्प्रयोगेषु, तथा साधनेषु सैन्यनियोजनेषु च, अभिज्ञाः। श्मश्रुलाः,—श्मश्रूणि विद्यन्ते एषामिति श्मश्रुलाः श्मश्रुधारिणः।

(ग) शरणेति।—शरणागतानाम् आश्रितानां, परिपालने रक्षणे, प्रवणाः निरताः, आश्रितप्रतिपालनतत्पराः इत्यर्थः। एके—अन्ये केचन। परत्र विषये—पारलौकिककर्म्मणि। ससाधनाः,—उपायशीलाः, चेष्टावन्तः इत्यर्थः।

(घ) पापर्द्धिः,—पापेन जीवहिंसया, ऋद्धिः वृद्धिः, सम्पत् इति यावत् यस्य सः पापर्द्धिः पापकर्म्मोपजीवीत्यर्थः।

(ङ) अञ्जनपर्व्वताकारः,—स्तूपीभूतकज्जलसदृशः गाढकृष्णवर्णः पर्व्वतवत् बृहदाकारश्चेत्यर्थः।

(च) निकुञ्जान्तर्गतं—लतादिसंवृतस्थानाभ्यन्तरस्थम्।

कौशलं (छ) दर्शयतः विक्रमस्य षड्विंशत्यायुधानि (ज) तस्योपरि निपेतुः। वराहस्तु तान्यायुधानि अगणयन् पर्व्वतान्तर्गतं कञ्चित् कन्दरं विवेश (झ)। राजाऽपि तस्य पृष्ठतो लग्नः (ञ) पर्व्वतमगमत्। तत्र काञ्चन बिलद्वारं (ट) दृष्ट्वा स्वयमेव तत्र प्रविष्टो महत्यन्धकारे कियद्दूरं गतः; उत्तरत्र महान् प्रकाशः (ठ) अभूत्।

ततः कियद्दूरे सुवर्णमयप्राकारं शुभ्राभ्रंलिहप्रासादविशिष्टं (ड) नगरमेकम् अपश्यत्। तत्र च देवालयोपवनादिभिरलङ्कृते समस्तवस्तुपरिपूर्णविपणिभूषिते धनिकलोकसमाकीर्णे नानाविलासिजनसेव्यमानं विलासिनीजनम् (ढ)

---

(छ) स्वहस्तकौशल—स्वहस्तयोः निजभुजयोः, कौशलं पाटवं, शरक्षेपनैपुण्यमित्यर्थः।

(ज) षड्विंशत्यायुधानि—चाप-चक्र-चर्म्म-कृपाण-खड्ग-शक्ति-तोमर-परशु-गदा-शूल-भिन्दिपाल-मुद्गर-कुन्त-प्रास-शैल-नाराच-क्षुरप्र-पट्टिश-हल-मुषल-भल्ल-वज्र-पाश-दण्ड-खल-अङ्कुशाख्यानि षड्विंशतिप्रकाराणि अस्त्राणि।

(झ) कन्दर—गह्वाकारपर्व्वतमध्यस्थगुहाम्। विवेश—अन्तर्जगाम।

(ञ) पृष्ठतः,—पश्चात्। लग्नः,—अनुसृतः, क्षणमपि त दृष्टेरन्तरालं न कृत्वेति शेषः।

(ट) काञ्चन—कामपि, एकामित्यर्थः। बिलद्वार—गुहाविवरनिर्गमप्रवेशपथमुखम्।

(ठ) उत्तरत्र—अग्रे। महान्—अतीव। प्रकाशः,—आतपः, आलोक इति यावत्।

(ड) सुवर्णेति।—सुवर्णमयः स्वर्णनिर्म्मितः, प्राकारः प्राचीरः यत्र तम्। शुभ्रेति।—शुभ्र श्वेतम्, अभ्र मेघं, लिहन्ति चुम्बन्ति इति अभ्रंलिहाः गगनस्पर्शिनः, [ "वहाभ्रे लिहः" (३।२।३२ पा०) इति सञ्ज्ञाया खश्] तादृशैः प्रासादैः सौधैः, विशिष्ट समन्वितम्।

(ढ) समस्तेति।—समस्तैः वस्तुभिः द्रव्यसमूहैः, परिपूर्णेन सम्बद्धेन, विपणिना पण्यविक्रयशालया, भूषिते अलङ्कृते। धनिकेति।—धनिकैः धनवद्भिः, लोकैः जनैः,

अतिमनोहरमपश्यत्। तत्र प्रविश्य विपणिमध्ये यावत् प्रविशति, तावदतीवमनोहरमखण्डपयुक्तं राजभवनमेकमपश्यत्।

तत्र विरोचनसुतो बलिः राज्यं करोति। राजा राजभवनं प्रविष्ट एव बलिना झटिति समागत्य आलिङ्गितः अतिरमणीये सिंहासने च समुपवेशितः, पृष्टश्च,—"भोः स्वामिन्! कुतोऽत्र भवतः समागतिः?" विक्रमेणोक्तम्,—"अहं भवत्सन्दर्शनार्थमत्र समागतोऽस्मि"। तच्छ्रुत्वा बलिः राजानमवदत्,—"अद्य मम सन्ततिः (ण) पवित्रीभूता, सफला च जाता। बहुना पुण्योदयेन भवतोऽस्माकं गृहे समागतिः (त) संवृत्ता"।

विक्रमेणोक्तं,—"भो राजन्! त्वं पवित्रीभूतान्तःकरणः, तवैव जन्म श्लाघ्यं, यतः साक्षात् वैकुण्ठाधिपो नारायणस्तव मन्दिरे सदा विराजते"। अथ बलिनोक्तं—"स्वामिन्! भवतः किमागमनकारणम् अन्यत्?"। विक्रमेणोक्तं,—"भो दानवेन्द्र! अहं भवद्दर्शनार्थमेव समागतोऽस्मि, अत्र नान्यत् किमपि कारणम्"। अथ बलिनोक्तं,—"यदि मां प्रियसुहृत् इति मन्यमानेन स्वामिना समागतं, तर्हि मयि कृपापरवशेन किमपि वस्तु भवता याचनीयम्"। ततो विक्रमेणोक्तं,—"मम किमपि न्यूनं नास्ति, तव प्रसादात् सर्व्वत्र सम्पूर्णोऽस्मि"। बलिनोक्तं,—"भोः स्वामिन्! भवतः किमपि न्यूनमिति न मयोच्यते, किन्तु मैत्रीम् उद्दिश्य किञ्चित् दित्सामि (थ)। उक्तञ्च,—

---

समाकीर्णं व्याप्तं। नानेति।—नाना बहुविधेन, विलासिजनेन शोभनवस्त्रालङ्कारादिभूषितपुरुषेण, सेव्यमानं परिचर्य्यमाणम्। विलासिनीजनं—वेश्याजनम्।

(ण) सन्ततिः,—कुलम्।

(त) समागतिः,—समागमन [समापूर्व्वात् गमेः भावे क्तिन्]।

(थ) दित्सामि—दातुमिच्छामि।

नोपकारं विना प्रीतिः कदाचित् कस्य जायते।
उपयाचितदानेन पश्य देवा ह्यभीष्टदाः ॥ २११ ॥

अन्यच्च,—पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुताऽपि पश्य" ॥ २१२ ॥

एवं भणित्वा तेन विक्रमाय राज्ञे रसायनं रसश्च (द) दत्तः। ततः राजा तस्मादनुज्ञां प्राप्य विलात् निर्गतोऽश्वमारुह्य यावद्राजमार्गं समायाति, तावत् महादैन्ययुतः, पीड़ितः, सपुत्रः कश्चित् वृद्धब्राह्मणः समागत्य,—

---

अहैतुकी प्रीतिर्नोत्पद्यते इत्याह, नेति।—उपकारं विना सन्तोषसाधनादृते, कदाचित् कदाऽपि, कस्यापि जनस्य, प्रीतिः स्नेहः, अनुरागो वा, न जायते न भवति, हि यतः, देवाः सुराः, [अपिरत्राध्याहार्य्यः] उपयाचितस्य दिव्यदोहदस्य, ("मानसिक" इति वङ्गभाषा;—"यद्दीयते देवताभ्यो मनोराज्यस्य सिद्धये। उपयाचितक दिव्यदोहद तद्विदुर्बुधाः॥" इत्युक्तेः) दानेन प्रदानेन, अभीष्टदाः अभिलषितफलसम्पादकाः, भवन्तीति शेषः, पश्य इति दृष्टान्तमवलोकयेत्यर्थः, देवानामपि दानसापेक्षा प्रीतिः, मर्त्यानान्तु सुतरामेवेति भावः। पथ्यावक्त्र वृत्तम् ॥ २११ ॥

पशूनामपि दानवश्यत्व प्रतिपादयितुं दृष्टान्तश्लोकमाह, पुत्रादिति।—तेन वक्ष्यमाणेन हेतुना, वशीकरणरूपेणेति भावः, दानम् अभीष्टवस्तुनोऽर्पण, विवेकविवर्जितस्य सदसद्विवेकविहीनस्य, पशोरपि पशुजातेरपि, पुत्रादपि परमस्नेहनिलयात् सुतादपि, प्रियतरम् अतिशयेन प्रियं, मन्ये सम्भावयामि, खलु निश्चये, येन हेतुना ससुता सवत्सा अपि, महिषी महिषस्य स्त्री, खले तिलकल्के, दत्ते भक्षणार्थमर्पिते सति, खलु निश्चितं, नु भोः, निखिल सकल, स्ववत्सार्थं किञ्चिदरक्षित्वैवेत्यर्थः, दुग्धं क्षीरं, नित्य प्रत्यहं, ददाति प्रयच्छति, इति पश्य दृष्टान्तमवलोकय। अविवेकिनः पशवोऽपि सामान्येन दानेन एव वशीभूताः, का कथा ज्ञानवतां मानवानाम्? इति भाव.। वसन्ततिलक वृत्तम् ॥ २१२ ॥

(द) रसायनं—जराव्याधिनाशनौषधविशेषः। रसः,—स्वर्णेतरधातूनां सुवर्णीकरणरञ्जकद्रवविशेषः।

"कठिनतरदामवेष्टनरेखासन्देहदायिनो यस्य ।
विलसन्ति बलिविभागाः स पातु दामोदरो विष्णुः" ॥२१३॥

इत्याशिषमुक्त्वा राजानमकथयत्,—"भो यजमान ! अहम् अत्यन्तदरिद्रः,पीडितः, बहुकुटुम्बी ब्राह्मणः। अद्य सकुटुम्बस्य मम किमपि भोजनपर्य्याप्तं ( ध ) धनं देहि, महत्या क्षुधा पीडिता (न) वयम्"। तदाकर्ण्य राज्ञा भणित,—"भो ब्राह्मण ! इदानीं मम हस्ते किमपि धनं नास्ति, परं रसश्च रसायनञ्चेति वस्तुद्वयमस्ति, अस्य रसस्य सम्पर्केण ( प ) सप्त धातवः सुवर्णानि भवन्ति ; तथा इद रसायनं यस्तु सेवते, स जरामरणरहितो भवति, त्वमेतयोरुभयोर्मध्ये एकं गृहाण"। तदा पित्रा उक्तं,—"यस्य रसायनस्य सेवनेन जरामरणरहितो भविष्यामि, तद्दीयताम्"।

अनशनक्लिष्टो ब्राह्मण नन्दनन्दन नवनीतहरणकृतबन्धन बुभुक्षाजनितयातनाञ्च सस्मारयन् कदाचित् स्वयमनुभूततादृशदु.खात्तस्मात् स्वाभीष्ट लब्धुकाम आशीःश्लोक-माह, कठिनेति।—कठिनतरेण सुदृढेन, दाम्ना रज्ज्वा, वेष्टनात् बन्धनात्, जाता या रेखा चिह्नं, तस्याः सन्देहदायिनः संशयकराः, रज्जुद्वारा वेष्टनजनितरेखासदृशा इत्यर्थ, यस्य दामोदरस्य, बलिविभागा उदरस्थितत्रिवलयः, ( गोपनन्दनो हि शैशवे कदाचित् बुभुक्षितो माता सुरक्षित नवनीतमपजह्रारेति क्रुद्धया तया उदरे बद्धः, तेन च तत्र रेखाः सञ्जाता, इदानीं वर्त्तमानबलीनामपि तत्स्थानस्थत्वात् तासु तत्त्वसन्देह । तत्र हरिवंशप्रमाण यथा,—"ततो यशोदा संक्रुद्धा कृष्ण कमललोचनम्। आनाय्य शकटीमूले भर्त्सयन्ती पुन पुन ॥ दाम्ना चैवोदरे बद्धा प्रत्यबध्नादुदूखले ॥" इति, "स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात्। घोषे दामोदर इति गोपीभिः परि-गीयते ॥" इति च, ततश्च दाम रज्जु. उदरे यस्य इति व्युत्पादित. दामोदरशब्द अत्र प्रयुक्त. इति ) विलसन्ति भान्ति स तादृशः. दामोदरः विष्णु., ( हस्तबद्धरज्जुभक्षणात् अन्यत्र दामोदरशब्दव्युत्पत्ति कृता, अत्र तु बन्धनार्थम् उदरोपरिनिहितरज्जुत्वात् इति विवेच्यम् ) पातु रक्षतु, भवन्तमिति शेषः। आर्य्या वृत्तम् ॥ २१३ ॥

( ध ) भोजनपर्य्याप्तं—भोजनाय पर्य्याप्त यथेष्टम्।

( न ) पीडिता—क्लिष्टा।

( प ) सम्पर्केण—संयोगेन।

एवमात्मनोऽनभिप्रेतं पितुः प्रार्थनमाकर्ण्य पुत्रेणोक्तं,—"किं क्रियते रसायनेन? तेन जरामरणरहितेनापि पुनर्दारिद्र्यमेवानुभवितव्यम् (फ)। यस्य रसस्य सम्पर्के सति रजतादिः सुवर्णं भवति, स एव ग्राह्यः" इत्युभयोर्विवादो जातः। ततः राजा उभयोर्विवादं श्रुत्वा रसं रसायनञ्चेत्युभयमेव ताभ्यां ददौ। ततो ब्राह्मणः सपुत्रो हृष्टः राजानं वर्णयन् निजनिलयं गतः। राजाऽपि निजभवनमगमत्"।

इमां कथां कथयित्वा पुत्तलिका पुनरब्रवीत्,—भो राजन्! त्वयि एवं धैर्य्यम् औदार्य्यञ्च विद्यते चेत्, तर्हि अस्मिन् सिंहासने उपविश"। राजा तूष्णीमासीत्।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे बलिसन्दर्शनं नाम एकोनविंशोपाख्यानम्]॥ १९॥

---

## अथ योगिसन्दर्शनं नाम विंशोपाख्यानम्।

पुनरपि राजा यावत् सिंहासने समुपवेष्टुम् उपक्रमते, तावदन्या पुत्तलिकाऽब्रवीत्,—"भो राजन्। यदि त्वयि विक्रमस्येव औदार्य्यादयः गुणाः सन्ति, तदा सिंहासने समुपविश"। राजा अवदत्,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यादीन् गुणान्"।

---

(फ) अनुभवितव्य—भोक्तव्यमित्यर्थः।

इति एकोनविंशोपाख्यानम्॥ १९॥

पुत्तलिका अवदत्,—"श्रूयतां राजन्! विक्रमो राजा षण्मासान् राज्य करोति, षण्मासान् देशान्तरेषु भ्रमति। एकदा देशान्तरगतो नानादेशान् परिभ्रमन् पद्मालयं नाम नगरमगमत्। तत्र सुमनोहरे वहिरुद्याने अतिविमलोदकं कञ्चित् सरोवरं दृष्ट्वा, तत्रोदकपानं कृत्वा उपविष्टः। ततोऽन्यतः अन्येऽपि केचन वैदेशिकाः समागत्य, जलपानं विधाय तत्र उपविशाः परस्परं गोष्ठीरकुर्वन्,—"अहो। अस्माभिरनेके देशाः दृष्टाः, बहूनि तीर्थस्थानानि पर्य्यटितानि, अतिदुर्गमाः केरप्यनधिगम्याः (ब) पर्वताश्च आरूढ़ाः, परमेकत्रापि महापुरुषदर्शनं नाभूत्" इति। तत्र एकेन भणितं,—"कथं महापुरुषदर्शनं भविष्यति? यत्र महासिद्धोऽस्ति, तत्र गन्तुं न शक्यते; यतः तत्रत्यो मार्गोऽतिदुर्गमः मध्ये च अनेके विघ्नाः सम्भवन्ति, देहस्य नाशः सम्भाव्यते। येनोद्यमेन प्रथममात्मविनाशशङ्का सञ्जायते, तस्य फलं को वा अनुभवितुमिच्छति? यतः बुद्धिमता सर्वथा आत्मैव प्रथमं रक्षणीयः। उक्तञ्च,—

पुनर्दाराः पुनर्वित्तं पुनः क्षेत्रं तथैव च।
पुनः शुभाशुभं कर्म्म शरीरं न पुनः पुनः॥ २१४॥

---

(ब) अनधिगम्याः,—अधिगन्तुमशक्याः, आरोहणानर्हाः इत्यर्थः।

सर्वापेक्षया आत्मनो रक्षणीयत्वे युक्तिं प्रदर्शयति, पुनरिति।—दाराः कलत्रं, पुनः भूयः, भवन्तीति शेषः, एकस्याः स्त्रियाः अपगमेऽपि अन्या पुनर्भवतीत्यर्थः, वित्तं धनं, पुनर्भवति, एकस्मिन् नष्टेऽपीति शेषः, एवमन्यत्राप्यूहनीयम्, तथैव तद्रूपमेव, क्षेत्रञ्च भूम्यादिरपि, पुनर्भवति, शुभाशुभं मङ्गलम् अमङ्गलञ्च, कर्म्म कार्य्यं, पुनर्भवति, केवलं शरीरं देहः, वर्त्तमानम् इत्यर्थः, पुनः पुनः वारं वारं, न भवति, सर्व्वमेव विनष्टं पुनर्लभ्यते, परन्तु केवलं देहः तथाभूतः पुनः न लभ्यते इति भावः। सदा कौतुकप्रियाणां बालानां प्रमोदजननार्थं श्लोकस्यास्य विपरीतार्थबोधिका कस्यचिदौदरिकस्योक्तिः उपक्षिप्यते, यथा,—"परान्नं प्राप्य दुर्बुद्धे! मा शरीरे दयां कुरु। परान्नं दुर्लभं लोके शरीरं जन्मजन्मनि॥" इति। इतः २१७ सङ्ख्यकश्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तं॥ २१४॥

तस्मात् विवेकिना (भ) पुरुषेण आत्माहितकराणि (म) कार्य्याणि न कर्त्तव्यानि। तथा चोक्तम्,—

व्यसनानि दुरन्तानि सम्यक्व्ययफलानि च।
अशक्यानि च कार्य्याणि नारभेत विचक्षणः॥ २१५॥

तथा च,—

पर्वतं विषमं घोरं बहुव्यालसमाकुलम्।
नारोहेन्मानवः प्राज्ञः संशये हि कदाचन"॥ २१६॥

अथ राजा तेषामेवं वचनं समाकर्ण्य भणति,—"अहो वैदेशिक। किमेवमुच्यते॥ यदा पुरुषेण पौरुषं साहसञ्च क्रियते, तदा तस्य किमपि कार्य्यं दुष्करं न भवति। उक्तञ्च,—

दुष्प्राप्याणि च वस्तूनि लभ्यन्ते वाञ्छितानि च।
पुरुषैः संशयारूढैरलसैर्न कदाचन॥ २१७॥

---

(भ) विवेकिना—सदसद्विचारवता।

(म) अहितकराणि—अनिष्टजनकानि।

'बुद्धिमद्भिरात्माहितकराणि कार्य्याणि नानुष्ठेयानि' इति यदुक्तं, तदेव विशदयति, व्यसनानीति।—विचक्षणः विवेचको जनः, दुरन्तानि दुः दुष्टः अन्तः परिणामः येषां तानि मन्दफलानीत्यर्थः, सम्यक् अतिरिक्तः, व्ययः धननाशः, फलं येषां तानि अत्यन्तव्ययसाध्यानि चेत्यर्थः, व्यसनानि पाशकक्रीडागीतवाद्यादीनि, तथा अशक्यानि असाध्यानि, कार्य्याणि च नारभेत न कुर्य्यात्॥ २१५॥

विचक्षणेन प्राणनाशसन्दिग्धे कर्म्मणि न प्रवर्त्तितव्यम् इत्यर्थे श्लोकमाह, पर्वतमिति।—प्राज्ञः विवेचकः, मानवः जनः, संशये प्राणनाशस्य सन्देहे सति, हि निश्चये, विषमम् उच्चावचं घोरं भयावहं, बहुभिः अनेकैः, व्यालैः हिंस्रजन्तुभिः, समाकुलं व्याप्तञ्च, पर्वतं गिरिं, कदाचन कदाऽपि नारोहेत् तत्र न गच्छेदित्यर्थः॥ २१६॥

पौरुषमेव दुष्करकर्म्मसाधकं नालस्यमिति प्रदर्शयितुं महाजनोक्तिमाह, दुष्प्राप्याणीति।—पुरुषैः पौरुषसमन्वितैः, पुरुषपदवाच्यैरित्यर्थः कार्य्यसिद्धिविषये दृढप्रत्यययुक्तैः अनलसैश्च इति भावः, दुष्प्राप्याणि अन्यैः दुर्लभ्यान्यपि, वस्तूनि द्रव्याणि, तथा वाञ्छितानि अभीप्सितद्रव्याणि च, लभ्यन्ते प्राप्यन्ते, 'कार्य्यं साधयाम्येव' इति निश्चित्य यः पौरुषमाचरति, उद्योगिनस्तस्य सिद्धिः निश्चिता एव इत्यर्थः। संशयारूढ

तथा च,—

पतति कदाचिन्नभसः खाते पातालतोऽपि जलमेति।
दैवमचिन्त्यं बलवत् बलवान् ननु साहसी यस्य ॥ २१८ ॥
क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ २१९ ॥
तस्य कथं न चला स्यात् पत्नी विष्णोर्नृसिंहकस्यापि ?।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ २२० ॥

---

संशयप्राप्तैः, 'सिद्धिर्भवति वा न वा' इत्येवंरूपप्रचलच्चित्तैः, अत एव अलसैः आलस्यपरैः जनैः, न कदाचन न कदाऽपि, लभ्यन्ते इति शेषः। यद्वा,—संशयारूढैः जीवनसंशयं प्राप्तैः, साहसिकैरित्यर्थः, पुरुषैः जनैः, दुष्प्राप्याणि दुर्लभान्यपि वस्तूनि द्रव्याणि, तथा वाञ्छितानि अभिलषितवस्तूनि च, लभ्यन्ते प्राप्यन्ते, अलसैः आलस्यपरैः जनैः, कदाचन कदाऽपि, न लभ्यन्ते। साहसोत्साहाभ्यामेव सकलकार्य्यसिद्धिरिति भावः ॥ २१७ ॥

पौरुषस्य कार्य्यसाधकत्वं पततीत्यादिभिः चतुर्भिः श्लोकैः प्रकारान्तरेणाह,—नभसः आकाशात्, कदाचित् न सर्व्वदेत्यर्थः, जलं पतति आगच्छति, खाते पुष्करिण्यादौ, पातालतः पातालादपि, पुरुषकारेण खनितात् भूगर्भात् अपि इत्यर्थः, सर्व्वदैवेति शेषः, जलम् एति उत्तिष्ठति; दैवम् अदृष्टम्, अचिन्त्यम् अभावनीयं, बलवत् अनिर्द्दिष्टशक्तिसम्पन्नं, भवति; ननु भोः! यस्य यो हि, साहसी पौरुषपरायणः, स तु बलवान् प्रबलशक्तिशाली भवति। दैवाधीनो हि जललाभः सम्पूर्णमनिश्चितः, पुरुषकारेण खननादिकं क्रियते चेत्, तदा भूगर्भादवश्यमेव जलोत्पत्तिर्भवतीति दैवापेक्षया पौरुषमेव समधिकतया आदरणीयमिति भावः। इतः २२१ सङ्ख्यकश्लोकपर्य्यन्तम् आर्य्या वृत्तम् ॥ २१८ ॥

क्लेशस्येति।—इह संसारे, अङ्गं हस्तादिकं, क्लेशस्य दुःखस्य, अदत्त्वा अक्लेशयित्वा इत्यर्थः, सुखानि सुखम् अनायासं यथा तथा, अनायासेनेत्यर्थः, नैव लभ्यन्ते, मधुभित् मधुसूदनः मथनायस्तैः समुद्रमन्थनेन श्रान्तैः, बाहुभिः लक्ष्मीम् आश्लिष्यति आलिङ्गति, "न हि सुखं दुःखैर्विना लभ्यते" इति भावः ॥ २१९ ॥

तस्येति।—यः विष्णुः, जलगतः जले स्थितः सन्, चतुरो मासान् आषाढादीन्, सततं निरन्तरं, निद्रां सेवति भजते, [ अत्र सेवधातोरात्मनेपदित्वेऽपि "परस्मैपदमिच्छन्ति आत्मनेपदिनां क्वचित्" इति नियमात् परस्मैपदित्वं बोध्यम् ] नृसिंहकस्य असुर-

दुरधिगमः परभागो यावत् पुरुषेण पौरुषं न क्षतम्।
जयति तुलामधिरूढ़ो भास्वानपि जलदपटलानि" ॥ २२१ ॥

एतत् राजवचनं श्रुत्वा तैः उक्तं,—"महासत्त्व। किं कार्य्यं, तत् कथय"। राज्ञोक्तम्—"अस्मात् स्थानात् द्वादशयोजनपर्य्यन्तं यदि गम्यते, तर्हि तत्र महारण्यमध्ये विषमः (य) कश्चित् पर्वतोऽस्ति, तदुपरि त्रिकालनाथो नाम योगीश्वरो (र) विद्यते। यदि तस्य दर्शनं क्रियते, तर्हि स सर्वं वाञ्छितमर्थं दास्यति; अहं तत्र गच्छामि"। तैरुक्तं,—"वयमप्यागमिष्यामः"। राज्ञोक्तं,—"सुखेन आगच्छत"।

ततस्ते राज्ञा सह निर्गताः महारण्ये मार्गमतिविषमं दृष्ट्वा राजानं प्रोचुः,—"भो महासत्त्व! कियद्दूरे पर्वतोऽस्ति?" राज्ञोक्तम्,—"इतः (ल) अष्टयोजनदूरे विद्यते"। तैरुक्तं,—"यद्यपि महद्दूरमेतत्, मार्गोऽप्यतिविषमः, तथाऽपि वयं गमिष्यामः" इति ब्रुवन्तः षड्योजनानि अतिक्रम्य पुरतो यावत् गच्छन्ति, तावन्महाकालवदनः विषाग्निमुद्वमन् (व) अति-

---

निधनार्थं नरसिंहमूर्त्तेरपि, तस्य विष्णोः पत्नी लक्ष्मीरित्यर्थः, कथं चला चपलेत्याद्याख्यावती, न स्यात्? पुरुषकारविहीनस्य लक्ष्मीर्न तिष्ठतीति भावः॥ २२०॥

दुरधिगम इति।—पुरुषेण जनेन, यावत् यत्पर्य्यन्तं, पौरुषं पुरुषकारः, न क्षतं नावलम्बितं, तावत् परभागः परमभाग्यम्, उत्कर्ष इत्यर्थः, दुरधिगमः दुष्प्रापः, भवतीति शेषः, पराक्रमं विना महत्त्वं न जायते इति भावः। अत्र दृष्टान्तमाह,—भास्वान् सूर्य्यः, तुला तुलाराशिम्, अधिरूढः आक्रान्तः सन्, जलदपटलानि मेघजालानि, जयति, तुलास्थो रविर्न मेघैराच्छाद्यते इति भावः। तेजस्वी सूर्य्योऽपि पराक्रमं विना वैरिनिर्यातनं कर्त्तुमक्षमः, का कथाऽन्येषाम्? इति तात्पर्य्यम्॥ २२१॥

(य) विषमः,—दुर्गमः।

(र) योगीश्वरः,—तापसश्रेष्ठः।

(ल) इतः,—अस्मात् स्थानात्।

(व) महेति।—महाकालस्य प्रलयकाले संहाररूपिणः शिवस्य वदनम् इव

भयङ्करः कश्चित् सर्पो मार्गमावृत्य (श) तिष्ठति, इति दृष्ट्वा ते सभयाः पलायाञ्चक्रिरे।

राजा तथाऽपि मार्गे गन्तुं प्रवृत्तः। अथ सर्पः समागत्य राजानं वेष्टयित्वा समदशत्। ततः स विषवत् (ष) दष्टस्थानं वस्त्रखण्डेन बद्ध्वा, विषज्वालासमन्वितोऽपि ससर्पः दुर्गमं पर्वतमारुह्य त्रिकालनाथं योगिनं दृष्ट्वा नमश्चकार। योगिसन्दर्शनमात्रेण स सर्पस्तं त्यक्त्वा गतः, राजाऽपि सत्वरं निर्विषो बभूव। ततो योगिनोक्तं,—"भो महासत्त्व! महाप्रमादभूयिष्ठम् (स) एवममानुषं (ह) स्थानम् अतिकष्टेन किमर्थमागतोऽसि?" राज्ञोक्तं,—"भोः स्वामिन्! अहं तव सन्दर्शनार्थम् आगतोऽस्मि"। योगिनोक्तं,—"महत् कष्टम् अनुभूतं खलु त्वया"। राज्ञोक्तं,—"किमपि कष्टं नास्ति, भवत्सन्दर्शनमात्रेण सकलमपि पातकं गतम्। ईदृक्-क्लेशं स्वीकृत्य अद्याहं धन्योऽस्मि, यतो महान्तो हि अतीव दुर्लभदर्शनाः, सकृदपि तैः सङ्गतिः आत्मोन्नतिजननी, महताऽपि विकारहेतुना (क) ते खलु नान्यथाप्रकृतयः (ख)। तथा चोक्तम्,—

वदनं मुखं यस्य सः, अतिभीषणमुख इत्यर्थः। विषेति।—विषम् अग्निरिव तम् उद्गमन् दृष्ट्या निश्वासेन वा उद्गिरन्। जङ्गमविषास्तु षोडशाश्रयाः, तद्यथा भावप्रकाशे,—"दृष्टिनिश्वासदंष्ट्राश्च नखमूत्रमलानि च। शुक्रं लालामुखस्पर्शः सन्दंशस्ववपर्द्दितम्। गुदास्थिपित्तशूकानि दशषट् जङ्गमाश्रयाः॥ तत्र दृष्टिनिश्वासविषाः दिव्याः सर्पाः"। अत्रास्य दिव्यसर्पत्वात् तथात्वं ज्ञेयम्।

(श) मार्गमावृत्य—पन्थानं व्याप्येत्यर्थः।

(ष) विषवत्—सविषमित्यर्थः।

(स) महाप्रमादभूयिष्ठम्—अतीव विपत्सङ्कुलम्।

(ह) अमानुषं—नास्ति मानुषः यत्र तत्, मनुष्यविवर्ज्जितमिति यावत्।

(क) सङ्गतिः,—संसर्गः। आत्मोन्नतिजननी—स्वोत्कर्षसम्पादिका। महतेति।—महता प्रबन्धेन, विकारहेतुना चित्तचाञ्चल्यकारणसत्त्वेनापि।

(ख) अन्यथाप्रकृतयः,—त्यक्तस्वभावाः इत्यर्थः।

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम्" ॥२२२॥[1]

ततः प्रसन्नेन योगिना कठिनी, (ग) योगदण्डः, कन्या च दत्ता, उक्तञ्च,—"भो राजन्! अनया कठिन्या भूमौ यावत्यः रेखाः लिख्यन्ते, तावन्ति योजनानि एकस्मिन् दिने गन्तुं शक्यन्ते; एष योगदण्डः दक्षिणहस्तेन स्पृश्यते यदि, तर्हि मृतसैन्यं सञ्जीव्य (घ) उत्तिष्ठति, वामहस्तेन स्पृश्यते यदि, तदा सर्वस्यापि विपक्षस्य सैन्यनाशो भवति; इयं कन्याऽपि यच्छकाशे वर्त्तते, तस्मै ईप्सितवस्तूनि (ङ) प्रयच्छति"।

राज्ञाऽपि तत्त्रयं गृहीत्वा योगिनं नमस्कृत्य, अनुज्ञां लब्ध्वा यावत् गम्यते, तावत् राजमार्गे कश्चिद्राजकुमारः सम्मुखे अग्निं संस्थाप्य काष्ठानि सञ्चिनोति इति अदृश्यत। ततः राजा तम-

---

विद्यमानेऽपि महति विकृतिनिदाने साधूनां स्वभावो न विपर्य्येतीति प्रदर्शयितुं महाजनोक्तिमुपन्यस्यति, घृष्टमिति।—चन्दनं चन्दनकाष्ठं, पुनः पुनरपि असकृदपि, घृष्टं घृष्टम् अतिनिष्पिष्टम्, [आभीक्ष्ण्ये द्विरुक्तिः] चारुगन्धं मनोज्ञगन्धम्, इक्षुकाण्डम् इक्षुदण्डः, पुनः पुनरपि असकृदपि छिन्नं छिन्नम् अतिखण्डितमपि, स्वादु मधुरम्, काञ्चनं स्वर्णं, पुनः पुनः मुहुर्मुहुः, दग्धं दग्धं वह्निसात्कृतमपि, कान्तवर्णं कान्तः मनोज्ञः वर्णः सौन्दर्य्यं यस्य तथाभूत, (सर्व्वत्र भवति इति शेषः इत्यनुसरणीयः) एते श्रेष्ठतमाः प्रकृष्ट पीडिता' अपि स्वरूप न त्यजन्तीति भावः। तदेव समर्थयते, प्राणेति।—उत्तमाना श्रेष्ठाना, प्रधानतमानामिति यावत्, प्राणान्तेऽपि जीवनविनाशेऽपि, प्रकृतेः स्वभावस्य, विकृतिः अन्यथाभावः, न जायते न भवति। "सम्पत्तौ च विपत्तौ च महतामेकरूपता" इति भावः। मन्दाक्रान्ता वृत्तम् ॥ २२२ ॥

(ग) कठिनी—खटिका।

(घ) सञ्जीव्य—जीवित्वा।

(ङ) ईप्सितवस्तूनि—अभिलषितद्रव्याणि।

पृच्छत्,—"भोः सौम्य! (च) किमेवं क्रियते ?" तेनोक्तम्,—"अहं कश्चिद्राजकुमारः, मम राज्यं दायादैरपहृतं, (छ) दरिद्रोऽहं जीवनं धारयितुमक्षमः (ज) सन् अग्नौ प्रवेशं कर्तुं काष्ठानि सञ्चिनोमि" (झ)। ततो राजा तस्मै अभयं दत्त्वा तां कठिनीं योगदण्डं कन्थाञ्च ददौ, तेषां गुणानपि अकथयत्। तदनन्तरम् अतिसन्तुष्टो राजकुमारो राजानं प्रणम्य स्वदेशमगमत्। विक्रमोऽपि उज्जयिनीमगात्"।

इमां कथां कथयित्वा पुत्तलिका भोजराजमवदत्,—"भो राजन्! त्वयि यदि एवम् औदार्य्यादयो गुणा विद्यन्ते, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं स्थितः।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे योगिसन्दर्भो नाम विंशोपाख्यानम्]॥ २०॥

---

## अथ अष्टमहासिद्धिलाभो नाम एकविंशोपाख्यानम्।

---

पुनरपि राजा यावत सिंहासने समुपवेष्टुमुपक्रमते, तावदन्या पुत्तलिका तं निवार्य्य भणति,—"तेनात्र सिंहासने उपवेष्टव्यं, यस्य विक्रमस्येव औदार्य्यं विद्यते"। राजा अवदत्,—

(च) सौम्य!—सुदर्शन!।

(छ) दायादैः,—ज्ञातिभिः। अपहृतं—बलात् गृहीतम्।

(ज) धारयितुमक्षमः,—वोढमसमर्थः।

(झ) सञ्चिनोमि—सङ्ग्रहं करोमि।

इति विंशोपाख्यानम्॥ २०॥

"कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तम्"। सा अब्रवीत्,—"श्रूयतां राजन्! विक्रमे राज्यं शासति बुद्धिसिन्धुनामा कश्चित् मन्त्री आसीत्। तस्य च अनर्गलो नाम पुत्रः बभूव। स घृतौदनं (ज) भुक्त्वा कुमारवृत्त्या (ट) तिष्ठति, किमपि विद्याऽभ्यसनं न करोति। एकदा पित्रा भणितं,—"भो अनर्गल! त्वं ममौरसाज्जातोऽपि अतीव दुर्विदग्धः, (ठ) विद्याऽभ्यसनं न करोषि, हृदयशून्यो मूर्खः सन् तिष्ठसि!! यस्तु हृदयशून्यः, स मूर्ख एव। उक्तञ्च,—

अपुत्रस्य गृहं शून्यं शून्यदेशो ह्यबान्धवः।
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता॥ २२३॥

मम त्वया कोऽप्यर्थो नास्ति। तथाहि,—

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः।
किं तया क्रियते धेन्वा या न सूते न दुग्धदा?॥ २२४॥

---

(ज) घृतौदनं—घृतमिश्रितम् ओदनम् अन्नम्।

(ट) कुमारेति।—कुमारस्य शिशोः, वृत्त्या व्यवहारेण, शिशुवत् क्रीडामात्राचरणेन इत्यर्थः।

(ठ) दुर्विदग्धः,—अनिपुणः, मूर्ख इति यावत्।

मूर्खस्य हृदयहीनत्वे प्रमाणभूतां शिष्टोक्तिमाह, अपुत्रस्येति।—अपुत्रस्य पुत्रहीनस्य जनस्य, गृहं शून्यं निर्जनवनवत् प्रतिभाति इत्यर्थः, अबान्धवः बान्धवहीनो जनः, शून्यदेशः शून्यः अभावपूर्णः देशो यस्य तादृशः, बान्धवहीनस्य समग्रदेश एव शून्यवत् भवतीत्यर्थः; मूर्खस्य विद्याहीनस्य, हृदयं चित्तं, शून्यं रिक्तमेव, भवतीति शेषः, दरिद्रता दारिद्र्यं, निर्धनता इति यावत्, सर्व्वशून्या सर्व्वं शून्यं यस्या सा, सर्वाभाववतीत्यर्थः। दरिद्रस्य सर्व्वमेव शून्यवत् प्रतिभातीत्यर्थः। इतः २२७ सङ्ख्यकश्लोकपर्य्यन्त पथ्यावक्त्रं वृत्त ज्ञेयम्॥ २२३॥

मूर्खपुत्रेण न किमपि प्रयोजनं सम्पद्यते इति वक्तुं श्लोकमाह, क इति।—यः पुत्रः, न विद्वान् न पण्डितः, न धार्म्मिकः धर्म्मनिरतश्च न भवति, तेन पुत्रेण, [पुत्रेणार्थः साध्यते इति ऊह्यक्रियायाः करणे तृतीया] जातेन उत्पन्नेन सता, कोऽर्थः? किं

अन्यच्च,—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जड़ो दहेत्॥ २२५॥

किञ्च,—

किं तेन जातु जातेन मातुर्यौवनहारिणा।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा"॥ २२६॥

एतत् पितृवचनं श्रुत्वा पश्चात्तापयुक्तः (ड) अनर्गलः वैराग्यम् अवलम्ब्य देशान्तरं जगाम। तत्र एकस्मिन् नगरे कस्यचित् उपाध्यायस्य सकाशात् सकलं नीतिशास्त्रं पठित्वा निजनगरं प्रति गन्तुं प्राक्रमत। मार्गे च अरण्यमध्ये देवालयमेकमपश्यत्। तद्देवालयसमीपे पद्मिनीषण्डमण्डितं चक्रवाकयुगयुतम् (ढ)

---

प्रयोजनम्? न किमपीत्यर्थं, या धेनुः न सूते सन्तानप्रसवं न करोति, न दुग्धदा न च पयस्विनी, तया धेन्वा गवा, किं क्रियते? किं साध्यते? न किमपि इत्यर्थ॥२२४॥

मूर्खपुत्रापेक्षया अपुत्रकत्वस्यापि श्रेष्ठत्वं प्रदर्शयति, अजातेत्यादिना।—अजातमृतमूर्खेभ्यः अनुत्पन्नमृतापण्डितेभ्य इत्यर्थः, [अत्र "पञ्चमी विभक्ते" (२।३।४२ पा०) इति पञ्चमी] मृताजातौ मृतानुत्पन्नौ, सुतौ पुत्रौ, वरं मनाक्प्रियौ, यतः यस्मात्, तौ मृताजातपुत्रौ, स्वल्पदुःखाय अत्यल्पदुःखजनकावित्यर्थः, भवतः, जडः मूर्खपुत्रस्तु, यावज्जीवं जीवनकालपर्य्यन्तं, दहेत् सन्तापं जनयेत्॥ २२५॥

मूर्खः पुत्रः दुःखकर एव, न तेन कोऽप्युपकार इति वक्तुं श्लोकमाह, किमिति।—यः जातु कदाचिदपि, स्वस्य आत्मनः, वंशस्य कुलस्य वेणुदण्डस्य च, अग्रे प्रथमस्थाने, शिरोदेशे च, ध्वजः यथा ध्वजवस्त्रमिव, नारोहति न तिष्ठति, मातुः जनन्याः, यौवनहारिणा वृथैव जनन्याः यौवननाशकेन, (पुत्रोत्पत्तौ हि स्त्रिया यौवनावनतिर्भवति) जातेन उत्पन्नेन, तेन तादृशपुत्रेण, किम्? किं फलम्? तेन कदाचिदपि न किमपि फलं लभ्यते इति भावः। ध्वजः यथा वंशदण्डस्याग्रम् आरोहति, तद्वत् यः स्वस्य वंशस्य अग्रस्थाने न वर्त्तते, तस्य जन्मैव वृथेति भावः॥ २२६॥

(ड) पश्चात्तापयुक्तः,—अनुतापान्वितः। ("पश्चात्तापोऽनुतापश्च" इत्यमरः)।

(ढ) पद्मिनीति।—पद्मिनीनां पद्मानां, षण्डः समूहः, तैः मण्डितं भूषितम्, अत्र षण्डमुक्त्वाऽपि यत् पद्मिनी उक्ता, तत् कुमुदादिसमूहव्यवच्छेदार्थम्;

अतिविमलोदकं सरः आसीत्। तस्य च सरोवरस्य एकदेशे अतिसन्तप्तमुदकम् (ण) अस्ति। एतत् सर्व्वं दृष्ट्वा अनर्गले तत्रोपविष्टे सूर्य्योऽस्तं गतः।

तदनन्तरं मध्यरात्रसमये तस्मात् सन्तप्तोदकमध्यात् अष्टौ दिव्याः स्त्रियः निर्गताः देवालयं गत्वा, देवस्याभिषेकादि-षोड़शोपचारं कृत्वा च नृत्यगीतादिकलया देवं तोषयामासुः। ततो देवः प्रसन्नः समर्च्चयितृभ्यः ताभ्यः प्रसादमदात्। एतत् सर्व्वमनर्गलोऽपि अपश्यत्।

अथ प्रभाते निर्गमनसमये ताभिरनर्गलो दृष्टः। ततश्च तासां मध्ये एकया दिव्याङ्गनया भणितं,—"भोः सौम्य! एहि (त) अस्माकं नगरं प्रति"। इत्युक्त्वा सा सहचरीभिः सह सन्तप्तोदक-मध्ये प्रविष्टा। सोऽपि तया सह गन्तुम् इयेष, (थ) परं तत्र तस्यां प्रविष्टायाम् अनर्गलो भयान्न प्रवेष्टुं शशाक।

अथ स्वनगरमागत्य पित्रादिसर्व्वबन्धुजनान् अपश्यत्। तेन तेषां महानुत्सवो जातः। अथ स द्वितीयदिवसे राजसन्दर्शनार्थं राजसभां गत्वा, राजानमभिवाद्य (द) उपविष्टः। राज्ञा कुशलं पृष्ट्वोक्तं,—"भो अनर्गल! एतावन्ति दिनानि (ध) कुत्र स्थितोऽसि?" तेनोक्तं,—"विद्याऽभ्यासं कर्त्तुं देशान्तरं गतो-

---

यदुक्तम् अमरे,—"अब्जादिकदम्बे षण्डमस्त्रियाम्" इति। चक्रेति।—चक्रवाकाणां तदाख्यपक्षिणां, युगं युगलः, चक्रवाकमिथुनमित्यर्थः, तैः युतम् अधिष्ठितमित्यर्थः।

(ण) सन्तप्तोदकम्—अत्युष्णजलम्।

(त) एहि—आगच्छ [ आङ्+इण—लोट् हि ]।

(थ) इयेष—अभिलषितवान् [ इष—लिट् ]।

(द) अभिवाद्य—आभिमुख्याय "आयुष्मान् भव सौम्य!" इत्युक्त्वा राजानं सम्भावयितुं स्वनामग्रहणपूर्वकं नमस्कृत्येत्यर्थः।

(ध) .दिनानि इति।—[ अत्र अत्यन्तसंयोगे द्वितीया।

ऽस्मि"। राज्ञोक्तं,—"तत्र देशान्तरे किं किमपूर्व्वं दृष्टम्?" अनर्गलेन च राज्ञे सन्तप्तोदकवृत्तान्तः कथितः।

तत् श्रुत्वा राजा तेन सह तत् स्थानं यदा गतः, तदा दिवाकरोऽप्यस्तं गतः। मध्यरात्रसमये पुनः ताः दिव्यस्त्रियः समागत्य, पूर्व्ववत् षोड़शोपचारान् विधाय नृत्यादिना देवम् उपस्थाय (न) प्रभाते यदा अगच्छन्, तदा तासां मध्ये काचिदेका राजानं दृष्ट्वा अवदत्,—"भोः सौम्य! एहि अस्माकं नगरं प्रति"।

तत् श्रुत्वा राजा तया सह निर्गतः। ततः सर्व्वाः स्त्रियः तप्तोदकमध्ये प्रविष्टाः पाताले (प) निजनगरे गताः। राजाऽपि तप्तोदकमध्ये निमग्नस्ताभिः सह गतः। ततः सर्व्वाः स्त्रियः तस्य नीराजनाद्युपचारं (फ) कृत्वा प्रोचुः,—"भो महासत्त्व। तव सदृशः शौर्य्यादिगुणसम्पन्नः कश्चिदपि नास्ति, अतः त्वमेव अस्य राज्यस्याधिपतिर्भव। वयं सर्व्वाः स्त्रियस्तव सेवां करिष्यामः"। राज्ञोक्तं,—"देव्यः! मम अनेन राज्येन प्रयोजन नास्ति। अहं केवलमेतत् कौतूहलं द्रष्टुं समागतोऽस्मि। ममापि राज्यमस्ति"। ताभिरुक्तं,—"भो महापुरुष! वयं प्रसन्नाः स्मः, वरं वृणीष्व"। राज्ञोक्तं,—"भवत्यः काः?" ताभिरुक्तं,—"वयमष्टौ महासिद्धयः"। राज्ञोक्तं,—"तर्हि मह्यम् अष्ट महासिद्धयो (ब) दातव्याः"। तत् श्रुत्वा ताः स्त्रियः राज्ञे अष्टौ रत्नानि ददुः; तान्येव अणिमाद्यष्टगुणयुक्तानि।

(न) उपस्थाय—उप समीपे स्थित्वा, अथवा पूजयित्वा इत्यर्थ।

(प) पाताले—भूमेरधःप्रदेशस्थसप्तसङ्ख्याकलोकेषु पातालाख्यलोके, यदुक्तम्,—"अतलं वितलञ्चैव सुतलञ्च तलातलम्। महातलञ्च विख्यातं ततो ज्ञेयं रसातलम्। ततः पातालमित्येवं सप्त पातालसञ्ज्ञकाः॥' इति।

(फ) नीराजनाद्युपचारम्—अतिथिपूजनार्थं पूजाङ्गारात्रिकादिसेवाविशेषम्।

(ब) महेति।—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥" इत्यष्टविधैश्वर्य्यरूपाः।

ततो राजा तानि रत्नानि गृहीत्वा यावदागच्छति, तावन्मार्गे कश्चित् वृद्धो ब्राह्मणः समागत्य,—

"उषितो नाभिकमले हरेर्यश्चतुराननः।
स पातु सततं युष्मान् वेदानामादिपाठकः" ॥ २२७ ॥

इत्याशिषं प्रयुक्तवान्। ततो राज्ञा पृष्टं,—"भो ब्राह्मण! कुतः समागम्यते?" तेन ब्राह्मणेनोक्तम्,—"अहं चम्पापुरनिवासी ब्राह्मणः, बहुकुटुम्बी, परम् अत्यन्तदरिद्रः। भार्य्यया निर्भर्त्सितो देशान्तरमागतः। भो राजन्! लोकोक्तौ, नीतौ च एषा प्रसिद्धिः, यत् निर्द्धनं नरं भार्य्यादयः अपि परित्यजन्तीति। उक्तञ्च,—

स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवाः
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः।
भार्य्या साधु सुवंशजाऽपि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम्। २२८॥

---

आशीःश्लोकमाह, उषित इति।—यः चतुराननः चतुर्मुखः ब्रह्मा, हरेः विष्णोः, नाभिकमले नाभिपद्मे, उषितः निवसति, [वर्त्तमाने क्तप्रत्ययः] वेदानां श्रुतीनाम्, आदिपाठकः प्रथमवक्ता, स ब्रह्मा, सततं सदा, युष्मान् भवतः, पातु रक्षतु ॥ २२७ ॥

कलत्रादिभिरपि निर्धनः परिभूयते, इति यदुक्तं तत्र लोकोक्तिं प्रदर्शयति, स्वामीति।—येषां हि नृणां धनं न स्यात् तान्—सुसेवितोऽपि सम्यक् आराधितोऽपि, स्वामी प्रभुः, द्वेष्टि नाद्रियते इत्यर्थः, धनवति भृत्ये प्रभोर्गौरवं सम्माननाञ्च दृश्यते, अन्यथा भृत्यत्वं त्यक्ष्यतीति भिया धनवन्तम् आद्रियते, निर्धनन्तु सततप्रार्थनापूरणात् विरक्तत्वात् नाद्रियते इति भावः, सन्तः अपि बान्धवाः सहसा प्रोज्झन्ति त्यजन्ति, नाद्रियन्ते इति भावः, गुणाः दयादाक्षिण्यादयः, न राजन्ते न शोभन्ते तेषामिति शेषः, तनुजाः पुत्राः च त्यजन्ति तानिति शेषः, आपदः स्फारीभवन्ति विस्तारं गच्छन्ति, [स्फारशब्दस्तु स्फुरधातोः घञि "स्फुरतिस्फुलत्योः घञि" (६।१।४७ पा०) इति एत्व आत्वम्] तेषामिति शेषः, सुवंशजा सत्कुलोत्पन्ना अपि, भार्य्या साधु यथा तथा नो भजते न सेवते तानिति शेषः, न्यायेन नीतिमार्गेण, आरोपिताः प्रवर्त्तिताः, विक्रमाः पुरुषकाराः यैः तादृशानि न्यायपराणि इति यावत्, मित्राण्यपि

तथा च,—

गुरुः सुरूपः सुभगस्तु वाग्मी
शास्त्रेषु चास्त्रेषु विदांवरस्तु।
अर्थं विना नैव कलाकलापं
प्राप्नोति मर्त्त्यो हि मनुष्यलोके॥ २२९॥

किञ्च,—

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
अन्यः क्षणेन भवतीति विचित्रमेतत्॥ २३०॥

---

यान्ति, अत्र चकारात् 'नो' इति पदमनुवर्त्तनीयं, तेन न यान्ति अपसरन्ति, तेभ्य इति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ २२८॥

निर्धनस्य रूपवयोविद्यावत्त्वादिकं सर्व्वमेव निरर्थकमिति वक्तुमाह गुरुरिति।—मनुष्यलोके जगति मर्त्त्यः मानवः, अर्थं विना धनादृते, कलानां चतुःषष्टिविद्यानां, कलापं समूहं, नैव प्राप्नोति हि न लभते एव, [यस्यार्थोऽस्तीति वाक्यमत्राध्याहार्य्यं] स एव गुरुः मान्यः, सुरूपः रूपवान्, सुभगः पत्नीप्रियः वाग्मी वाक्पटुः, शास्त्रेषु वेदादिषु, अस्त्रेषु धनुर्वेदादिषु च, विदां ज्ञानिनां, वरः श्रेष्ठस्तु भवतीति शेषः, निर्गुणमपि धनवन्तं सर्वे आद्रियन्ते इति भावः। वृत्तमुपजातिः॥ २२९॥

सेन्द्रियोऽपि दरिद्रः विकलेन्द्रिय एव इति वक्तुमाह, तानीति।—अर्थहीनस्य पुरुषस्येति सर्व्वत्र अध्याहृत्यान्वयः कार्य्यः। आद्यावस्थायां यानीन्द्रियाणि यादृशानि सन्ति, दारिद्र्यावस्थायामपीति सर्व्वत्रानुषञ्जनीयम्। तानि पूर्व्ववर्त्तीन्येव, इन्द्रियाणि चक्षुरादीनि, अविकलानि अविह्वलानि अपरिवर्त्तितानि इत्यर्थः, सन्तीति शेषः, तदेव नाम नाम अपि न परिवर्त्तितमित्यर्थः, सा तादृशी, अप्रतिहता अव्याहता, बुद्धिः ज्ञानं, बुद्धिरपि न परिवर्त्तितेत्यर्थः, वचनं वाक्यं, तदेव वाक्यमपि तदेवास्तीत्यर्थः, तथाऽपि स एव पुरुषः धनिवदविकलेन्द्रियादियुक्त एव मानवः, अर्थोष्मणा धनगर्वेण, विरहितः हीनः सन्नित्यर्थः, क्षणेन मुहूर्त्तादेव, अन्य एव अपरविध एव, भवतीति एतत् विचित्रम् आश्चर्य्यं, विस्मयकरमिति यावत्, धनहीनस्य सर्वेऽपि गुणा निरर्थका इति भावः। वसन्ततिलकं वृत्तम्॥ २३०॥

अपि च,—

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव" ॥ २३१ ॥

राजा तस्य इत्थं वचनं श्रुत्वा अतिसन्तुष्टः तस्मै अष्टौ रत्नानि ददौ। स च राजानं स्तुत्वा निजनगरं जगाम। राजाऽप्युज्जयिनीं प्रति समागतः"।

इमां कथां कथयित्वा पुत्तलिका राजानमवदत्,—"भो राजन्! तवेदृशं धैर्य्यशौर्य्यादिकम् अस्ति चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। तत् श्रुत्वा राजा तूष्णीं स्थितः।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे अष्टमहासिद्धिलाभो नाम एकविंशोपाख्यानम् ] ॥ २१ ॥

## अथ कामाक्षीप्रसादलाभो नाम द्वाविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यदा समुपवेष्टुं याति, तावदन्यया पुत्तलिकया तं निवार्य्य उक्तं,—"भो राजन्! अस्मिन्

दरिद्राणां हि मनसि जायमानाः भावाः अकिञ्चित्करा एव भवन्ति, इति प्रतिपादयितुमाह उत्थायेति।—दरिद्राणां हीनधनानां, मन एव रथः वाहनं येषां ते मनोरथाः अभिलाषाः, हृदि हृदये, उत्थाय स्वयमेव उद्भूय, लीयन्ते स्वयमेव विलीना भवन्ति, हृद्येव इति शेषः, तेषाम् अकिञ्चित्करत्वात् इति भावः, [ कर्म्मकर्त्तरि लीधातोः लट् ]। तत्र उपमा यथा,—बालवैधव्येन बाल्यकालघटितपतिवियोगेन, दग्धानाम् अन्तरसहनीयज्वालावतीनां, कुलस्त्रीणां साध्वीनां, कुचौ इव स्तनौ यथेत्यर्थः, [ कुचादीनां द्वित्वावच्छिन्नजातितया अत्र स्त्रीणां बहुत्वेऽपि तत्र जात्यपेक्षया द्वित्वम् ]। पथ्यावक्त्रं वृत्तम् ॥ २३१ ॥

इति एकविंशोपाख्यानम् ॥ २१ ॥

सिंहासने तेनोपविष्टव्यं, यस्य विक्रमस्येव औदार्य्यादयो गुणाः सन्ति"। राज्ञोक्तं,—"भोः पुत्तलिके। मम त्वयोक्तं सर्व्वमौदार्य्यादिकं विद्यते, किं न्यूनमस्ति? मयाऽपि किं सर्वेषाम् अर्थिनां कालोचितं न दत्तम्?" तच्छ्रुत्वा पुत्तलिकाऽवदत्,—"भो राजन्! पुनः स्वमुखेनैव आत्मानं कीर्त्तयसि? किं न श्रुतं भवता,—

न सुखं न च सौभाग्यं स्वयं स्वगुणवर्णने।
यथैव च पुरन्ध्रीणां स्वहस्तकुचमर्द्दनम्" ॥ २३२ ॥

इति पुत्तलिकयोक्तं श्रुत्वा सलज्जो भोजराजः अवदत्,—"सत्यमुक्तं त्वया, इदानीं कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तम्"।

सा अब्रवीत्,—"भो राजन्। शृणु,—विक्रमादित्यो राजा राज्यं प्रतिपालयन् एकदा पृथिवीपर्य्यटनार्थं निर्गत्य, नानातीर्थयात्राः (भ) देवालयं पुरपर्वतादिकञ्च दृष्ट्वा, कदाचिन्महारत्नप्राकारपरिवृतम् (म) अभ्रंलिहप्रासादोपशोभितम्, अनेकशिवालय-हरिमन्दिरसहितमेकं नगरमपश्यत्। तत्र नगरवहिःस्थितं विष्णुगृहं गत्वा, तत्र स्थिते सरोवरे स्नात्वा विष्णुं नमस्कृत्य,—

---

स्वमुखेन आत्मप्रशंसा हि सर्व्वथैव विडम्बना. इति प्रकटयितुमाह, न सुखमिति। —पुरन्ध्रीणा कुलयुवतीनामिव स्वहस्तेन निजकरेण. कुचमर्द्दनं यथा स्वकीयकुचकलसाकलनमिव. स्वयम् आत्मना, स्वगुणवर्णने निजगुणप्रख्यापणे, सुखम् आह्लादः, न भवति, सौभाग्यं भाग्यवत्ता च, न प्रकाश्यते। पथ्यावक्त्रं वृत्तम् ॥ २३२ ॥

(भ) तीर्थेति।—तीर्थेषु काश्यादिपुण्यक्षेत्रेषु, यात्राः देवोद्देशोत्सवभेदानित्यर्थः।

(म) महेति।—महच्च तत् रत्नञ्चेति महारत्नं, तन्मयेन तद्बहुलेन, प्राकारेण प्राचीरेण, परिवृतं परिवेष्टितम्, यद्वा—रत्नानां प्राकारः रत्नप्राकारः, महांश्चासौ रत्नप्राकारश्चेति विग्रहः।

"मया किं ज्ञायते नाथ ! माहात्म्यं परमं तव ? ।
ब्रह्माऽपि त्वां न जानाति परो वाचामगोचरम् ॥ २३३ ॥
नान्यं भजामि न वदामि न चाश्रयामि
नान्यं शृणोमि न पठामि न चिन्तयामि ।
भक्त्या त्वदीयचरणाम्बुजमादरेण
श्रीश्रीनिवास ! पुरुषोत्तम ! देहि दास्यम्" ॥ २३४ ॥

इत्यादिवाक्यैः स्तुत्वा रङ्गमण्डपे उपविष्टं ब्राह्मणं राजा अवदत्,—"भो ब्राह्मण ! कुतः समागतोऽसि ?" ब्राह्मणोऽवदत्,—"अहं कश्चित् तीर्थयात्रिकः पृथ्वीपर्य्यटनं करोमि। भवान् कुतः समागतः ?" राज्ञा भणितम्,—"अहमपि भवादृशः कश्चित् तीर्थयात्रिकः"। ब्राह्मणेन सम्यक् विलोक्य भणितं,—"भोः ! नैवं, त्वम् अतीव तेजस्वी दृश्यसे, राजलक्षणानि सर्वाण्येव त्वयि

प्रणामोत्तरं सम्प्रति भक्तिभावेन सर्व्वशक्तिमतः श्रीविष्णोः स्तवमाह, मयेत्यादि-श्लोकद्वयेन।—हे नाथ ! प्रभो ! मया अज्ञानेन अभक्तेन चेत्यर्थः, तव देवदेवस्येत्यर्थः, परमम् उत्तमं, माहात्म्य महिमा, किं कथं, केन प्रकारेण इत्यर्थः, ज्ञायते ? कथञ्चिदपि ज्ञातु शक्यते इति भावः, परो ब्रह्मा सृष्टिकर्त्ता चतुराननोऽपि, वाचामगोचरं वाक्येन बोधयितुमशक्य, त्वा विष्णुं, न जानाति तव स्वरूपं न बुध्यते इत्यर्थः, देवेनापि अबुद्धस्य मानवेन बोधः असम्भव एव इति भावः ॥ २३३ ॥

नेति।—श्रीश्रीनिवास ! हे लक्ष्म्याः आश्रयभूत ! हे पुरुषोत्तम ! अहम् अन्य त्वद्भिन्नं, न भजामि न सेवे, न वदामि न कथयामि, तव गुणानुवादं विना न किमपि वदामि इत्यर्थः; न चाश्रयामि नापि त्वदन्यं शरणं गच्छामि, न अन्यं, कमपि विषयमिति शेषः, शृणोमि आकर्णयामि, न पठामि न च चिन्तयामि त्वदन्यस्य चिन्ताऽपि मम नास्तीत्यर्थः; त्वमेव मम सकलेन्द्रियविषय इति तात्पर्य्यम्। भक्त्या अनुरागेण, आदरेण आग्रहेण च, त्वदीयचरणाम्बुज तव पादपद्ममेव चिन्तयामीति शेषः; अतः दास्यं त्वदीयदासभावं, देहि, मह्यमिति शेषः। वसन्ततिलकं वृत्तम् ॥ २३४ ॥

दृश्यन्ते। त्वं राजराजसिंहासनयोग्यः; (य) पृथिवीपर्य्यटनं किमर्थं करोषि? अथवा शिरसि लिखितं को वा लङ्घयति? तथा हि—

हरिणाऽपि हरेणापि ब्रह्मणा त्रिदशैरपि।
ललाटलिखिता रेखा न शक्या परिमार्जितुम्" ॥ २३५ ॥

तस्य वचनं राज्ञाऽप्यङ्गीकृत्य भणितं,—"भो ब्राह्मण! किमर्थं हताश इव दृश्यसे?" तेनोक्तं,—"नैराश्यकारणं किं कथयामि?" राजा अवदत्—"कथ्यतां स्वानुभूतकष्टस्य कारणम्"।

ब्राह्मणः कथयति,—"श्रूयतां भोः! अत्र समीपे नीलो नाम पर्वतोऽस्ति, तत्र कामाक्षी नाम देवताऽस्ति, तस्याः समीपे पातालविवरद्वारं पिनद्धं (र) वर्त्तते; तत् कामाक्षीमन्त्रजपेन समुद्घाट्यते। तन्मध्ये रसस्य कुण्डम् (ल) एकम् अस्ति; तेन रसेन अष्टौ धातवः सुवर्णानि भवन्ति। मया द्वादशवर्षपर्य्यन्तं कामाक्षीमन्त्रजपः कृतः, परं विवरद्वारं नोद्घाटयितुं शक्यते" इति।

तावदेव तद्वचनं श्रुत्वा राजा तदैव तत्र गत्वा देवीं षोड़शोपचारेण सम्पूज्य नत्वा च यावत् स्वकण्ठे खड्गं निक्षिपति,

(य) राजेति।—राज्ञामपि राजा इति राजराजः प्रबलपराक्रमत्वात्, तस्य राजराजस्य सार्व्वभौमनृपस्य, सिंहासनयोग्यः सिंहासनाधिरोहणोचित.।

अदृष्टलिपिरखण्डनीया इत्यत्र दृष्टान्तश्लोकमाह, हरिणेति।—हरिणा विष्णुना, हरेण शिवेन, ब्रह्मणा विधात्रा, तथा त्रिदशैः अन्यैः देवैश्चापि, ललाटे भाले, लिखिता रेखा ललाटलिपिरित्यर्थः. परिमार्ज्जितुम् अन्यथा कर्त्तुं, न शक्या, पूर्वकृतकर्म्मफलभोगः सर्वैरेव अवश्यमेव करणीय इति भावः। पथ्यावक्त्रं वृत्तम् ॥ २३५ ॥

(र) पिनद्धम्—आबद्धम्, आच्छादितमित्यर्थः, [पिनद्धमिति अपिपूर्वात् नह्यतेः क्तप्रत्ययेन सिद्धम्]।

(ल) कुण्डं—पात्रविशेषः, स्थालीति यावत्।

तावत् देवतयोक्तं,—"तवाहं प्रसन्नाऽस्मि, वरं वृणीष्व"। राज्ञोक्तं,—"भो देवि! यदि प्रसन्नाऽसि, तर्हि अस्मै ब्राह्मणाय रसं प्रयच्छ"। देवताऽपि "तथाऽस्तु" इत्युक्त्वा बिलद्वारं (व) समुद्घाट्य ब्राह्मणाय रसं ददौ। सोऽपि ब्राह्मणो राजानं स्तुत्वा निजनगरं जगाम। राजा च निजनगरीमगात्"।

इति कथां कथयित्वा पुत्तलिका भोजराजमवदत्,—"भो राजन्! त्वयि एवम् औदार्य्यं विद्यते यदि, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं स्थितः।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे कामाक्षी-प्रसादलाभो नाम द्वाविंशोपाख्यानम्] ॥ २२ ॥

---

## अथ दुःस्वप्नदर्शनं नाम त्रयोविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् उपवेष्टुं प्रयतते, तावत् तं निवार्य्य अन्या पुत्तलिका भणति,—"भो राजन्! एतत् सिंहासनमधिरोढुं स एव योग्यो भवति, यस्य विक्रमौदार्य्यवदौदार्य्यम् अस्ति"। राज्ञोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तम्"। पुत्तलिका कथयति,—"श्रूयतां राजन्! एकदा राजा विक्रमार्को महीं परिभ्रम्य निजनगरं समागतः। तेन नगरवासिनां सर्वेषां जनानां महान् आनन्दोऽभूत्। राजा स्वभवनं प्रविश्य मध्याह्नसमये अभ्यङ्गस्नानादिकं कृत्वा चन्दनवस्त्रादिभिरलङ्कृतः सन् देवभवनं प्रविष्टः, देवस्य षोड़शोपचारं विधाय स्तुतिपाठमकरोत्।—

---

(व) बिलद्वार—गह्वरमुखम्।

इति द्वाविंशोपाख्यानम् ॥ २२ ॥

"त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव।" ॥ २३६ ॥

इति देवं स्तुत्वा नमस्कृत्य, ब्राह्मणेभ्यः कपिला-भू-तिलादि-दानानि (श) दत्त्वा, तदनन्तरं दीनान्ध-बधिर-कुब्ज-पङ्ग्‌-नाथादिभ्यो भूरि दानं दत्त्वा, भोजनगृहं प्रविष्टो बाल-सुवा-सिनी-

तामेव देवस्तुतिमाह, त्वमिति।—देवदेव! हे सर्व्वदेवश्रेष्ठ! त्वमेव माता सर्व्वस्य जननी, त्वमेव पिता जनकश्च, त्वमेव बन्धुः भ्रात्रादिस्वजनः त्वमेव सखा मित्रञ्च, त्वमेव विद्या ज्ञानं, त्वमेव द्रविणं धनं, त्वमेव मम सर्वं सर्व्ववस्तुस्वरूप त्वां विना मम किमपि नास्तीत्यर्थः। उपेन्द्रवज्रा वृत्तम् ॥ २३६ ॥

(श) कपिला—स्वर्णवर्णा गौः। अथ प्रसङ्गतः कपिलादिषु कीदृशाय ब्राह्मणाय किं देयं किं वा फलम्? तत् लिख्यते, यथा भविष्यपुराणे,—"* * गोदानञ्च कुटुम्बिनाम्। तथा प्रतिष्ठाहीनानां चैवदानं प्रशस्यते" ॥ अथ कपिलादानफलं हेमाद्रौ—'कपिलां पाटलवर्णां यस्तु धेनुं प्रयच्छति। स्वर्णशृङ्गीं रौप्यखुरां कांस्य-दोहां पयस्विनीम् ॥ यावद्रोमाणि तस्या गोः सन्ति गात्रेषु सत्तम! तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ यत्रासौ लभते जन्म सा गौस्तस्याभिजायते। न च पश्यति स घोरं नरकं तेन कर्म्मणा ॥ उत्तरान् स कुरून् प्राप्य मोदते कालमक्षयम्। गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् ॥ पुत्रान् दारान् तथा भृत्यान् गौरेका प्रति-तारयेत्। तस्मात् सर्वेषु दानेषु गोदानन्तु विशिष्यते ॥ दुर्गमे विषमे घोरे महा-पातकसम्भवे। गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे" ॥ इति। अथ भूदानफलं तत्रैव,—"नृत्यगीतपरा नार्य्यो दिव्यमालाविभूषिताः। उपतिष्ठन्ति देवेन्द्र! सदा भूमिप्रदं नरम् ॥ मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः। यो ददाति महीं सम्यक् विधिनेह द्विजातये ॥ शतमप्सरसाञ्चैव दिव्यमाल्यविभूषितम्। उपतिष्ठति देवेन्द्र! ब्रह्मलोके धराप्रदम् ॥ उपतिष्ठन्ति भूतानि सदा भूमिप्रदं नरम्। शङ्खं भद्रासनं छत्रं धराश्वा वरवारणाः" ॥ इत्यादिकम्। तिलदानफलमपि तत्रैव यथा,—"नित्ये नैमित्तिके काम्ये तिलान् दत्त्वा स्वशक्तितः। प्रजावान् पुत्रवान् नित्यं धनवान् जायते नरः ॥ नित्यं दाता तिलानाञ्च नरः स्वर्गे महीयते। सर्वेषामेव दानानां तिलदानं प्रशस्यते। सर्व्वपापहरं विद्धि पवित्रं स्वर्ग्यमेव च" ॥ इति।

वृद्धादीन् (ष) सम्भोज्य, स्वयमन्यैर्बन्धुभिः सह भुक्तवान्। तथा च उच्यते,—

"बाल सुवासिनी-वृद्धान् गर्भिण्यातुर-कन्यकाः।
सम्भोज्यातिथि भृत्यांश्च दम्पत्योः शेषभोजनम्॥ २३७॥
एक एव न भुञ्जीत य इच्छेत् सिद्धिमात्मनः।
द्वात्रिभिर्बहुभिः सार्द्धं भोजनं कारयेन्नरः॥ २३८॥
अभीष्टफलसंसिद्धिस्तुष्टिः काम्यं सुसम्पदः।
द्वात्रिभिर्बहुभिः सार्द्धं भोजने तु प्रजायते" ॥ २३९॥

ततो भोजनानन्तरं कञ्चित् कालं विश्रम्य समुपविष्टः तथा च,—

भुक्तोपविशतो ह्येवं भुक्ता संविशतः सुखम्।
आयुष्यं क्रममाणस्य मृत्युर्धावति धावतः॥ २४०॥

---

(ष) बालेत्यादि।—सुवासिनी सुखेन पित्राद्यवियोगेन वसति या सा, चिर पितृकुलवासिनी, बालश्च सुवासिनी च वृद्धश्च ते आदयो येषां तान्।

प्रथम बालादीन् भोजयित्वा पश्चात् स्वय भोजने प्रमाणमाह, बालेति।—बालाः शिशव, सुवासिनी चिरं पितृकुलवासिनी स्त्री, वृद्धः स्थविरः एतान्, तथा गर्भिणी गर्भवती, आतुरः पीडितजनः, कन्यका कुमारी, एताः तथा अतिथयः अभ्यागताः, भृत्याः सेवकाः, एतांश्चेत्यर्थः, सम्भोज्य भोजयित्वा, दम्पत्योः गृहस्थयोः स्त्रीपुरुषयोः, शेषभोजन सर्व्वशेषे भोजन, निर्द्दिष्टं शास्त्रकारैरिति शेषः। इतः २४० सङ्ख्यकश्लोक-पर्य्यन्तं पथ्यावक्त्रं वृत्तम्॥ २३७॥

बहुभिः सार्द्धं भोजनस्य उत्कर्षतां प्रतिपादयितु प्रमाणश्लोकद्वयमाह, एकेति।—यः जनः, आत्मनः स्वस्य, सिद्धि शुभम्, इच्छेत् अभिलषेत्, स एक एकाकी एव, न भुञ्जीत भोजन न कुर्य्यात्। नरः मनुष्यः, द्वात्रिभिः बहुभिः द्वाभ्या, त्रिभिः बहुभिर्वा जनैः, सार्द्धं सह, भोजन कारयेत्॥ २३८॥

अभीष्टेति।—द्वात्रिभिः द्वाभ्या त्रिभिर्वा, तथा बहुभिः अनेकैर्वा, सार्द्धं भोजने कृते सति, अभीष्टफलस्य अभिलषितविषयस्य, संसिद्धिर्भवति, तुष्टिः सन्तोषः, काम्यं कमनीयत्वञ्च, प्रजायते भवति, सुसम्पदः सम्पत्तयश्च, भवन्तीति शेषः॥ २३९॥

भोजनानन्तरं विश्रामस्य आयुष्यत्वेन अवश्यकरणीयता प्रतिपादयितु प्रमाण-

अन्यच्च,—

अत्यम्बुपानाद्विषमाशनाच्च दिवाशयाज्जागरणाच्च रात्रौ।
संरोधनान्मूत्रपुरीषयोश्च षड्विप्रकारेण भवन्ति रोगाः॥ २४१॥

तदनन्तरं सन्ध्याकाले तात्कालिकं कर्म्म विधाय, भोजनं कृत्वा शयनस्थानमगात्। तत्र शशिकरनिकरशुक्लप्रभप्रच्छद-परिस्तीर्णे (ख) कुन्द-मल्लिका-शतपत्रादिकुसुमावकीर्णे मञ्चके (ह) स्थित्वा सुप्तः।

अथ राजा प्रभातसमये स्वप्ने स्वयमात्मानं महिषारूढं दक्षिणां दिशं गच्छन्तं दृष्ट्वा, सहसा जागरितः विष्णुं स्मरन् शयने समुपविष्टः। ततः प्रातःकृत्यादिकं कृत्वा सन्ध्याकर्म्म समनुष्ठाय च सिंहासने समुपविष्टः ब्राह्मणानां पुरतः स्वप्नवृत्तान्तम् अकथयत्। तत् श्रुत्वा सर्वज्ञेन (क) केनचित् उक्तं,—"भो राजन्!

---

श्लोकमाह, भुक्त्वेति।—भुक्त्वा भोजनं कृत्वा, उपविशतः समासीनस्य, एवम् अथवा, भुक्त्वा संविशतः शयानस्य, हि निश्चितं, सुखं, भवति इति शेषः, क्रममाणस्य भोजनानन्तरं विचरणं कुर्व्वतः जनस्य, आयुष्यम् आयुषो हितं, पथ्यमित्यर्थः, भवतीति शेषः, धावतः भोजनानन्तरं सत्वरगामिनः जनस्य, मृत्युः मरणं, धावति तमनुसरति, सन्निहितो भवतीत्यर्थः॥ २४०॥

प्रसङ्गादन्यान्यपि आयुःक्षयकराणि रोगादीनि आह, अत्यम्बु इति।—अत्यम्बुपानात् अधिकजलपानेन, विषमाशनात् अनियतभोजनात्,—"बहु स्तोकं ह्यकाले च ज्ञेयं तद्विषमाशनम्" इत्युक्तलक्षणात्, कदाचिद्बहु कदाचिदल्पं तथा कालातीते च भोजनादित्यर्थः, दिवाशयात् दिवानिद्रया, रात्रौ रजन्यां, जागरणात् निद्राभावेन च, मूत्रपुरीषयोः मलमूत्रयोः, संरोधनात् वेगरोधाच्च, इत्येवं षड्विप्रकारेण षट्प्रकारेण विकारेण, विकृत्या इत्यर्थः, रोगाः भवन्ति जायन्ते। वृत्तमुपजातिः॥ २४१॥

(ख) शशिकरेति।—शशिकराणां चन्द्रकिरणानां, निकरः समूहः, तद्वत् शुक्ला शुभ्रा, प्रभा दीप्तिः यस्य तेन तथाविधेन, एकत्रपुञ्जीभूतचन्द्रकिरणवत् अतिशुभ्रेणेत्यर्थः, प्रच्छदेन प्रावरणवस्त्रेण, परिस्तीर्णे सर्व्वतोभावेन आच्छादिते तस्मिन्।

(ह) मञ्चके—खट्वायाम्।

(क)—सर्व्वज्ञेन—सर्वशास्त्रविदा पण्डितेन, दैवज्ञेन वा।

स्वप्नास्तु द्विविधाः सन्ति,—केचन शुभाः शुभफलं प्रयच्छन्ति, केचन अशुभाः अरिष्टं (ख) सूचयन्ति। तत्र शुभाः स्वप्नाः,—गजारोहणं, प्रासादारोहणं, रोदनं, मरणम्, अगम्यागमनं, छत्र-चामर समुद्र-ब्राह्मण-गङ्गा-पतिव्रता-शङ्ख-सुवर्णसन्दर्शनादयश्च।

उक्तञ्च,—

आरोहणं गो-वृष-कुञ्जराणां
प्रासाद-शैलाग्र-वनस्पतीनाम्।
विष्ठाऽनुलेपो रुदितं मृतञ्च
स्वप्ने ह्यगम्यागमनञ्च धन्यम्॥ २४२॥

अशुभाश्च स्वप्नाः,—महिषारोहणं, खरारोहणं, (ग) कण्टक-वृक्षारोहणं, भस्म-कार्पास-धूम्र-व्याघ्र-सर्प-वराह-वानरसन्दर्शनादयश्च। तथा चोक्तम्,—

खरोष्ट्र-महिष व्याघ्रान् स्वप्ने यस्त्वधिरोहति।
षण्मासाभ्यन्तरे तस्य मृत्युर्भवति निश्चितम्॥ २४३॥

---

(ख) अरिष्टम्—अमङ्गलम्।

सुस्वप्नान् विवक्षन्नाह, आरोहणमिति।—गोवृषकुञ्जराणाम् आरोहण गोपृष्ठे वृषपृष्ठे गजपृष्ठे च अधिरोहण, तथा प्रासादशैलाग्रवनस्पतीना प्रासादोपरि, शैलशृङ्गे, वृक्षोपरि च आरोहणं, विष्ठानुलेपः विष्ठया गात्रलेपन रुदित रोदनं, मृतं मरण, [मृधातोर्भावे क्तः] स्वप्ने स्वप्नावस्थायाम्, एतत् सर्वं, तथा अगम्यागमनञ्च अगम्या-स्त्रीसम्भोगश्च, धन्यं शुभप्रद, भवतीति शेषः, हि निश्चये। वृत्तमुपजातिः॥ २४२॥

(ग) खरारोहण—गर्द्दभारोहणम्।

दुःस्वप्नान् विवक्षन्नाह, खरेति।—यस्तु जनः, स्वप्ने स्वप्नावस्थाया, खरः गर्द्दभः, उष्ट्रः, महिषः, व्याघ्रश्च एतान् अधिरोहति आरोहति, तस्य जनस्य षण्मासाभ्यन्तरे षण्मासमध्ये, मृत्युः मरण, भवति जायते, एतत् निश्चितम् अत्र संशयो नास्तीत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २४३॥

अन्यच्च,—

स्वप्नेषु प्रथमे यामे संवत्सर-विपाकभाक्।
द्वितीये चाष्टभिर्मासैः तृतीये च त्रिमासकैः।
गोविमर्ज्जनवेलायां सद्यस्तु फलमिष्यति॥ २४४॥

किं बहुना? भो राजन्! अयं स्वप्नः तवारिष्टसूचकः"। राज्ञोक्तं,—"भो ब्राह्मण! अस्य दुःस्वप्नस्य अरिष्टोपशमनार्थं किं करणीयम्?" सर्वज्ञभट्टेनोक्तं,—"त्वं स्नानं विधाय इज्याविचक्षणं कृत्वा सर्वमलङ्कारजातं वस्त्रादियुतं (घ) ब्राह्मणाय देहि। पुनः वस्त्रान्तरं परिधाय देवस्याभिषेकं कारयित्वा नवरत्नैः (ङ) पूजां विधेहि, ब्राह्मणेभ्यो गवादिदशधान्यानि (च) देहि,

---

दृष्टस्य स्वप्नस्य यामभेदेन शुभाशुभफलं विवक्षुराह, स्वप्नेष्विति।—प्रथमे यामे रात्रेः प्रथमप्रहरे, स्वप्नेषु जातेषु, संवत्सरविपाकभाक् संवत्सरमध्ये फलभोगी भवति, द्वितीये द्वितीयप्रहरे च जाते स्वप्ने, अष्टभिः मासैः अष्टमासमध्ये, फलभोगः भवतीति शेषः, तृतीये च तृतीयप्रहरे च जाते स्वप्ने, त्रिमासकैः त्रिमासमध्ये, फलभोगी भवतीति शेषः, गोविसर्जनवेलायां गवां सूर्य्यकिरणानां, विसर्जनकाले विमोचनसमये, प्रभातकाले इत्यर्थः, स्वप्ने दृष्टे इति शेषः, सद्यः झटिति, फलं स्वप्नफलम्, इष्यते प्राप्यते इत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २४४॥

(घ) इज्याविचक्षणम्—इज्यस्य पूज्यस्य, नारायणस्य इत्यर्थः, अवेक्षणं दर्शनम्। कृत्वा—विधाय। सर्वमिति।—परिधेयादिसहितं भूषणसमूहमिति समुदितार्थः।

(ङ) नवरत्नैः,—"मुक्तामाणिक्यवैदूर्य्यगोमेदा वज्रविद्रुमौ। पद्मरागं मरकतं नीलञ्च—" इत्युक्तैः नवसङ्ख्यकरत्नैः।

(च) गवादीति।—गवादीनि गोप्रभृतीनि दशविधानि धान्यानि धान्याचलादीनि। तानि चोक्तानि हेमाद्रौ, यथा—"प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः। गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्व्वतः॥ पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्व्वतः। सप्तमो घृतशैलश्च रत्नशैलस्तथाऽष्टमः। राजतो नवमस्तद्वत् दशमः शर्कराचलः"॥ आदौ गोदानं कृत्वा पश्चात् धान्याचलादीनि दशविधानि दद्यात्। दशधान्यानि इत्यत्र "अष्टादश धान्यानि" इति पाठे तु—अष्टादशप्रकाराणि धान्यानि, अष्टादशधान्यानि यथा—'यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः। माषा मुद्गा मसूराश्च निष्पावाः

अन्ध-बधिर-पङ्गु-कुब्जानाथादींश्च भूरिदानेन सम्भावय (छ)। अनेनानुष्ठानेन ब्राह्मणाशीर्वचनेन च तव दुःस्वप्नजारिष्टफल-नाशात् स्वस्ति (ज) भविष्यति" इति।

राजा एतत् सर्वं भट्टवचनं (झ) श्रुत्वा यथोक्तम् अनुष्ठाय, दिनत्रयं भूरिदानार्थं भाण्डारिकमाहूय समादिदेश। ततो यस्य यावता धनेन तृप्तिरभवत्, तेन तावद्धनं नीतम्"।

इति कथां कथयित्वा पुत्तलिका राजानमवदत्,—"भो राजन्! त्वयि एवमौदार्य्यं धैर्य्यञ्च विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे दुःस्वप्नदर्शनं नाम त्रयोविंशोपाख्यानम् ] ॥ २३ ॥

---

श्यामसर्षपा॥ गवेधुकाश्च नीवाराः आढक्योऽथ सतीनकाः। चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु॥" इति हेमा० दा० खण्ड० स्क० पु०। "गुडादिदशधेनूर्देहि" इति पाठे तु—गुडधेन्वादिदशविधधेनुदानानि कुरु इत्यर्थः। अयमेव पाठः समीचीनतया प्रतिभाति। गुडधेन्वादिर्यथा हेमाद्रौ दा० ख०,—"प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा। तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिता॥ क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा। सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी। रसधेनुर्नवमी स्यात् दशमी स्यात् स्वरूपतः॥" इति।

(छ) भूरिदानेन—प्रचुरार्थवितरणेन। सम्भावय—सन्तोषय।

(ज) दुःस्वप्नेति।—दुःस्वप्नात् दुष्टस्वप्नदर्शनात् जायते इति दुःस्वप्नजः, तथाविधस्य अरिष्टस्य अमङ्गलस्य, यत् फलं तन्नाशात् निवारणात्। स्वस्ति—क्षेमं, मङ्गलमिति यावत्।

(झ) भट्टवचनं—भट्टः वेदज्ञपण्डितः, तस्य वाक्यमित्यर्थः।

इति त्रयोविंशोपाख्यानम्॥ २३॥

# अथ शालिवाहनयुद्धवर्णनं नाम चतुर्विंशोपाख्यानम् ।

पुनरपि राजा यावत् सिंहासनम् आक्रमितुमुपक्रमते, तावदन्या पुत्तलिका तमपवार्य्य समवदत्,—"भो राजन्! यस्य विक्रमस्येवौदार्य्यादयो गुणाः सन्ति, सोऽस्मिन् सिंहासने उपवेष्टुं क्षमः" (ञ)। भोजराजेनोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्"। सा अब्रवीत्,—"श्रूयतां राजन्! आसीत् विक्रमादित्यस्य विषये (ट) पुरन्दरपुरी नाम नगरी। तत्र महाधनिकः कश्चिद्वणिगवसत्। तस्य च चत्वारः पुत्राः आसन्। अथासौ एकदा तान् आहूयावादीत्,—"भोः पुत्राः! मयि मृते युष्माकं चतुर्णामेकत्रावस्थानं यदि न सम्भवेत्, तदा पश्चात् विवादो भविष्यति, तस्मात् जीवन्नेव भवतां चतुर्णां ज्येष्ठानुक्रमेण भागमकार्षम् (ठ)। मञ्चाधस्ताच्चत्वारस्ते भागा निक्षिप्ताः सन्ति, ज्येष्ठकनिष्ठभागक्रमेण गृह्णीत"। तथा च तैरङ्गीकृतम् (ड)।

ततस्तस्मिन् परलोकं गते चत्वारो भ्रातरो मासमेकत्र स्थिताः। ततः तेषां स्त्रीणां परस्परं कलहो जातः। तदनन्तरं तैर्विचारितं,—"किमर्थं कलहः क्रियते? पित्रा जीवतैव पूर्व्वं चतुर्णां विभागः

---

(ञ) क्षमः,—योग्यः।

(ट) विषये—अधिकृतदेशे, राज्ये इत्यर्थः, ("देशविषयौ तूपवर्त्तनम्" इत्यमरः)।

(ठ) ज्येष्ठानुक्रमेण—वयोऽधिकपौर्व्वापर्य्येण। भागम्—अंशम्। अकार्षं—कृतवान् अस्मीत्यर्थः।

(ड) अङ्गीकृतं—स्वीकृतमित्यर्थः।

ख्यातोऽस्ति, तत् मञ्चाधःस्थितं विभागक्रमं (ढ) गृहीत्वा विभक्ताः सन्तो वयं सुखेन तिष्ठामः” इत्युक्त्वा यावन्मञ्चाधः खनन्ति, तावच्चतुर्णां पादानाम् अधश्चत्वारि सम्पुटानि (ण) दृष्टानि। तेषां मध्ये एकत्र सम्पुटे मृत्तिकाः अवर्त्तन्त; अन्यत्र अङ्गारा आसन्; अपरस्मिन् अस्थीनि स्थितानि, चतुर्थे च पलालपुञ्जः (त) स्थितः।

एवमेतत् सम्पुटचतुष्टयं दृष्ट्वा ते चत्वारः भ्रातरः विस्मयं गताः परस्परं प्रोचुः,—“अहो। अस्मात् पितृकृतसम्यग्विभागक्रमात् अर्थविभागक्रमः केन ज्ञायते?” इत्युक्त्वा तैः राजसभां गत्वा तस्याः (थ) पुरतः सर्वो वृत्तान्तः निवेदितः। सभ्यैरपि विभागक्रमो न अबुध्यत। पुनश्चत्वारः भ्रातरो यत्र यत्र ज्ञातारः (द) सन्ति, तत्र तेषां पुरतः अमुं वृत्तान्तं निवेदयन्ति स्म, परं कोऽपि निर्णयं कर्त्तुं न शशाक।

अथ एकदा उज्जयिनीं समागतास्ते राजसभामागत्य राज्ञः सभायाश्च पुरतो विभागवृत्तान्तमामूलमकथयन्। राज्ञा सभया(ध) चापि विभागक्रमो न ज्ञातः। तदनन्तरम् एकदा ते प्रतिष्ठानाभिधेयं नगरान्तरं गत्वा तत्रत्यानां महाजनानां पुरतः तद्वृत्तान्तं भणितुमारब्धम्; तेऽपि निर्णेतुं न शेकुः (न)।

तस्मिंश्च नगरे कुम्भकारगृहे (प) स्थितः शालिवाहनो नाम कश्चित् अमुं वृत्तान्तमाकर्ण्य तत्र गतान् महाजनान् अकथयत्,

(ढ) विभागक्रम—विभागस्य वण्टनस्य, क्रमं पूर्व्वापरभावरूप विधानम्।

(ण) सम्पुटानि—मञ्जूषाः, पेटकानि इति यावत्।

(त) पलालपुञ्जः,—पलालः शस्यशून्यधान्यकाण्डः, तेषा पुञ्जः राशिः।

(थ) तस्याः,—सभायाः, लक्षणया सभास्थजनानामित्यर्थः।

(द) ज्ञातारः,—विद्वांसः, बोद्धार इति यावत्।

(ध) सभया—लक्षणया सभास्थजनैरित्यर्थः।

(न) न शेकुः,—नैव समर्था बभूवु. [ शक्+लिट्—झि ]।

(प) कुम्भकारगृहे—कुलालभवने।

—"भोः सभ्याः! किमत्र दुर्बोधमस्ति? किमाश्चर्य्यञ्च,तत्कथय?"। तदाकर्ण्य तेषामेकोऽवदत्,—"एते चत्वारः एकस्य धनिकस्य पुत्राः। जीवता एतेषां पित्रा एवं ज्येष्ठकनिष्ठानुक्रमो विभागः कृतः; तद्यथा,—एकत्र सम्पुटे मृत्तिकाः, अन्यत्र अङ्गाराः, अपरस्मिन् अस्थीनि, अन्यस्मिन् पलालपुञ्जश्च इति। एवं-विभागस्य निर्णयं कर्त्तुं कोऽपि न शशाक"।

तच्छ्रुत्वा शालिवाहन उवाच,—"ज्येष्ठस्य मृत्तिका दत्ता, तेन या समुपार्जिता भूमिः, सा सर्वा तस्मै दत्ता। द्वितीयस्य अङ्गारो दत्तः, तेन सकलमपि सुवर्णं तस्मै दत्तम् (फ)। तृतीयस्य अस्थीनि दत्तानि, तेन सर्वेऽपि पशवः तस्मै दत्ताः। चतुर्थस्य पलालपुञ्जो दत्तः, तेन सर्वविधधान्यादीनि तस्मै दत्तानि"। एवं शालिवाहनेन तेषां पितृकृतविभागस्य तात्पर्य्यं वर्णितम्। तदाकर्ण्य तेऽपि धनिककुमाराः कृतार्थाः सुखिनो भूत्वा स्वनगरं जग्मुः।

अथ राजा विक्रमः तेभ्यः एवं विभागनिर्णयवृत्तान्तं श्रुत्वा विस्मयं गतः प्रतिष्ठाननगरीं प्रति काञ्चित् पत्रिकां प्रेषयामास; यथा,—"स्वस्ति श्रीयजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूप-षट्कर्म्मनिष्ठान् यमनियमादिगुणयुक्तान् (ब) प्रतिष्ठाननगरी-

---

(फ) तेनेति।—सुवर्णस्य अग्नेः रेतस्त्वात्, अङ्गारस्यापि अग्नियोनित्वात् उभयोरेकसम्भवत्वेन अङ्गारस्थापनात् अङ्गारः सुवर्णं बोधयति। तच्च सुवर्णस्य सर्व्व-धातुप्राधान्येन सुवर्णदानेनैव भूम्यादिषु पारिशेष्याच्च रजतादीनामन्येषामपि धातूनां दानमर्यादायातम् इति भावः।

(ब) यमेति।—यमः,—योगाङ्गभेदः अहिंसादिः। तद्यथा,—"अहिंसा सत्य-वचनं ब्रह्मचर्य्यमकल्कता। अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि च॥" तत्र अहिंसा—सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः। सत्यं—यथार्थे वाङ्मनसी, यथादृष्टं यथाश्रुतं यथाऽनुमितं, तथा वाङ्मनश्चेति। ब्रह्मचर्य्यं—गुप्तेन्द्रियस्य उपस्थस्य संयमः। अकल्कता—

वासिनो महाजनान् कुशलप्रश्नपूर्वकं (भ) राजा विक्रमः विज्ञापयति,—भवतां ग्रामे यः तेषां चतुर्णां धनिकतनयानां विभागनिर्णयकारी वर्त्तते, स मदन्तिकं (म) प्रेषयितव्यः" इति। तत्रत्याश्च महाजनाः राज्ञा प्रेषितां तां पत्रिकां वाचयित्वा (य) शालिवाहनमाहूय कथयामासुः,—"भोः शालिवाहन। त्वां राजाधिराजः परमेश्वरः आसमुद्रपृथिवीपतिः (र) उज्जयिनीनाथः सकलकलाऽर्थश्लोककल्पद्रुमः (ल) विक्रमो नाम राजा

---

निष्पापत्वम्। स्तेयम्—अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं तत्प्रतिषेधः। नियमः,—योगाङ्गभेदः शौचादिः। तद्यथा,—"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" तत्र शौचं—मृज्जलादिजनितं मेध्याभ्यवहरणादि च वाह्यमाभ्यन्तरं चित्तमलानामाक्षालनम्। सन्तोषः,—सन्निहितसाधनात् अधिकस्य अनुपादित्सा। तपः—द्वन्द्वसहनं, द्वन्द्वश्च जिघत्सापिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च, व्रतानि चैवं यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायः,—मोक्षशास्त्राणामध्ययनं, प्रणवजपो वा। ईश्वरप्रणिधानं—तस्मिन् परमगुरौ सर्वकर्म्मार्पणम्। इत्युक्तलक्षणौ यमनियमौ तदादिषु गुणेषु यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपेषु योगसाधनेषु अष्टाङ्गेषु इत्यर्थः युक्तान् निरतान्।

(भ) महाजनान्—श्रेष्ठियान् इत्यर्थः। कुशलप्रश्नपूर्व्वकं—श्रेयोजिज्ञासापुरःसर, "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्" इत्युक्तेः।

(म) मदन्तिकं—मत्सकाशे।

(य) वाचयित्वा—पठित्वा।

(र) राजेति।—राजसु मध्ये अधिकः श्रेष्ठः राजा इति राजाधिराजः,—सार्व्वभौमः इति यावत्। परमेश्वरः,—परमैश्वर्य्यशाली, महाधनीति यावत्। आसमुद्रपृथिवीपतिः,—आसमुद्रं समुद्रपर्य्यन्तायाः, पृथिव्याः पतिः अधीश्वरः।

(ल) सकलेति।—सकलानां सर्व्वासां चतुःषष्टिविधानामिति यावत्, कलानां शिल्पादिविद्यानाम्, अर्थानाम इन्द्रियार्थानां, रूपरसादिभोग्यवस्तूनामित्यर्थः अथवा—अर्थानां पुरुषार्थानां धर्म्मार्थकामानां त्रिवर्गाणां श्लोकानां यशसां, शौर्य्य-दया-दाक्षिण्य-परोपकारादिप्रभवाणामिति भावः, कल्पद्रुमः कल्पवृक्ष इव। कल्पवृक्षे यथा यावन्ति द्रव्याणि, यावन्तो गुणाश्च एकीभूय तिष्ठन्ति, तथा विक्रमेऽपि सन्ति इति भावः।

समाह्वयति (व); तत् त्वं तत्र गच्छ"। तेनोक्तं,—"कोऽसौ विक्रमो नाम राजा ? तेनाहूतो न गच्छामि। यदि तस्य प्रयोजनमस्ति, तदा स स्वयमेव मम समीपे आगच्छतु ; तेन मम किमपि प्रयोजनं नास्ति"। तस्य तत् वचनं श्रुत्वा महाजनैः "स न याति, श्रीमदागमनमत्रैव वाञ्छति" इति पुनःपत्रिका (श) राजानं प्रति प्रेषिता।

ततः राजा तत्पत्रिकालिखितार्थं श्रुत्वा क्रोधाग्निना देदीप्यमानविग्रहोऽष्टादशाक्षौहिणीबलैः (ष) सह निर्गत्य, प्रतिष्ठाननगरीमागत्य शालिवाहन प्रति दूतं प्रेषितवान्। ततस्तेन प्रेषितेन दूतेन तत्र गत्वा शालिवाहनो भणितः,—"भोः शालिवाहन ! राजाधिराजो विक्रमः त्वामाह्वयति, तस्मात् त्वं तस्य दर्शनार्थमागच्छ"। शालिवाहनेनोक्तं—"भो दूत। अहम् एकाकी सन् राजानं न द्रक्ष्यामि, षडङ्गबलोपेतः समराङ्गणे (स) विक्रमस्य दर्शनं करिष्यामि, तत् गत्वा एवं राज्ञे निवेदय"।

तस्य तद्वचनं श्रुत्वा दूतः राज्ञे सर्वं तथैवाऽऽचख्यौ। तत् श्रुत्वा च राजा विक्रमः सबलः समरभूमिमागतः। शालिवाहनोऽपि कुम्भकारगृहे मृत्तिकया कृतानि हस्त्यश्व-रथ-पदातिबलानि मन्त्रेण समुज्जीव्य, तेन षडङ्गबलेन नगरात् निर्गत्य समराङ्गणं प्रति समागतः। तदा उभयदलनिर्गमसमये,—

---

(व) समाह्वयति—आकारयति।

(श) पुनःपत्रिका—उत्तरलिपिरित्यर्थः।

(ष) अष्टादशेति।—अक्षौहिणी—सङ्ख्याविशेषयुक्तरथादिसेना। तत्सङ्ख्या च २१८७० रथाः, २१८७० हस्तिनः, ६५६१० अश्वाः, १०९३५० पदातिकाः अक्षौहिणी, एवंविधैः अष्टादशगुणितैः अक्षौहिणीपरिमितैः सैन्यैरित्यर्थः।

(स) षडिति।—षडङ्गबलैः मन्त्रकोषहस्त्यश्वरथपदातिरूपैः, उपेतः युक्तः ; तथा च कामन्दकीये,—"षडङ्गो मन्त्रकोषाभ्यां पदात्यश्वरथद्विपैः" इति। समराङ्गणे—रणस्थले।

दिक्‌चक्रं चलितं तथा जलनिधिर्जातो भृशं व्याकुलः
पाताले चकितो भुजङ्गमपतिः पृथ्वीधरः कम्पितः।
सोत्कम्पा पृथिवी महाविषभृतः क्रोडं नमत्युत्कटं
वृत्तं सर्वमनेकधा दलपतेरेवं चमूनिर्गतौ॥ २४५।

पवनगतिसमानैरश्वयूथैरनन्तै-
र्मदधरगजयूथै राजते सैन्यलक्ष्मीः।
ध्वज-चमर-वरास्त्रैरावृतं खं समस्तं
पटुपटहमृदङ्गैर्भेरिनादैस्त्रिलोकम्॥ २४६॥

ततः उभयदलं मिलितम्। तस्मिन् समये,—

अश्वादेः खुररेणुभिर्बहुतरैर्व्याप्तं ह्यशेषं नभः
छत्रैरावृतमन्तरालमनिशं पूर्णञ्च भेरीरवैः।

सैन्यनिर्य्याणसमये दिगादीनामवस्था वर्णयति, दिगिति।—दलपतेः लोकनायकस्य राज्ञः, चमूनिर्गतौ सेनानिर्गमनकाले, दिक्‌चक्र दिङ्मण्डलं, चलितं चञ्चलमिव, अभवदिति शेषः, तथा किञ्च, जलनिधि समुद्रः, भृशम् अत्यन्तं व्याकुलः उद्वेलः, जातः अभूत्, इवेति शेषः, पाताले रसातले, भुजङ्गमपतिः सर्पराजः वासुकिः, चकितः भीतः, पृथ्वीधरः पर्व्वतः, कम्पितः कम्पवान् जातः, पृथिवी धरणी, सोत्कम्पा वेपथुमती सती, महाविषभृतः महासर्पस्य वासुकेः, क्रोड नमति पृथ्वी सन्नता जातेत्यर्थः। एवम् ईदृक्, सर्वं सकलम्, अनेकधा बहुप्रकारेण, उत्कटं भीषणं, वृत्त जातम्। शार्दूलविक्रीडित वृत्तम्॥ २४५॥

उभयोः चतुरङ्गबलाधिपत्यं प्रकटयितु सैन्यशोभां विवृणोति, पवनेति।—पवनगतिसमानैः वायुवेगसदृशवेगशालिभिः, अनन्तैः असङ्ख्यैः, अश्वयूथैः घोटकसमूहैः, मदधरगजयूथैः मदस्राविकरिसमूहैश्च सैन्यलक्ष्मीः सैन्याना शोभा राजते शोभते, समस्त सकल, खम् आकाशं, ध्वजैः पताकाभिः चमरैः व्यजनविशेषैः, वरास्त्रैः उत्तमास्त्रैश्च, आवृतं व्याप्तम्, आसीत् इति शेषः, पटुभिः स्फुटैः, व्यक्तैरित्यर्थः, पटहैः ढक्काशब्दैः, मृदङ्गैः मृदङ्गशब्दैः, तथा भेरीणा वाद्यविशेषाणा, नादैः शब्दैः, त्रिलोकं त्रिभुवनम्, आवृतं व्याप्तम्, आसीदिति पूर्वेण अन्वयः। मालिनी वृत्तम्॥ २४६॥

उभयोरपि चतुरङ्गबलाधिपत्यं प्रकारान्तरेण प्रदर्शयति, अश्वादेरिति।—अश्वादेः अश्वप्रभृतीनां, बहुतरैः बहुलैः, खुररेणुभिः खुरोद्भूतैः, शफोत्थितैः इति यावत्,

निर्घोषै रथजैः गजाश्वनिनदैस्तत्किङ्किणीनां रवैः
वीराणां निनदैः प्रभूतभयदैरन्योऽन्यसेना बभुः ॥ २४७ ॥
खट्वाङ्गैर्भल्लशस्त्रैः खल-खुरण-गदामुद्गरार्द्धेन्दुबाणै-
र्नाराचैर्भिन्दिपालैर्हलवर-मुषलैः शक्ति-कुन्तैः कृपाणैः ।
पट्टीशैः शूल-वज्रप्रभृतिभिरपरैर्दिव्यशस्त्रैः सुतीक्ष्णै-
रन्योऽन्यं युद्धमेवं मिलितदलयुगे वर्त्तते सङ्घटानाम् ॥२४८॥

तत्र रणे,—

एके वै हन्यमाना रणभुवि सुभटा जीवहीनाः पतन्ति
एके मूर्च्छां प्रपन्नास्तदपि निजबलैरुत्थिताः सम्भवन्ति ।
मुञ्चन्ते साट्टहासं निजनिकृतिपरं मानमाद्यं प्रसादं
मत्वा धावन्ति चाग्रे जितमरणभयाः प्रौढ़िमङ्के हि कृत्वा ॥२४९॥

---

धूलिभि., हि निश्चयम्, अशेष समग्रं, नभः आकाश, व्याप्तम् आच्छन्नम् अन्तराल स्वर्लोकपृथिव्योर्मध्यम्, अनिश निरन्तर, छत्रैः आतपत्रैः, आवृतम् आच्छन्नं, भेरीरवैः वाद्ययन्त्रविशेषध्वनिभिश्च, पूर्णं व्याप्तं, रथजैः निर्घोषैः रथध्वनिभिः, गजानाम् अश्वानाञ्च निनदैः शब्दै., तत्किङ्किणीनाम् अश्वगजगलदेशस्थक्षुद्रघण्टिकाना, रवै. शब्दैश्च, तथा प्रभूतभयदै. अतिभयङ्करैः, वीराणा सैन्यानां, निनदैः शब्दैः, अन्योऽन्यसेनाः उभय-सेनाः, बभुः शुशुभिरे । शार्दूलविक्रीडितं वृत्तम् ॥ २४७ ॥

युद्धवर्णनप्रसङ्गेन तत्र व्यवहृतानाम् अस्त्रशस्त्रादीना नामानि उल्लिख्य युद्धस्य भीषणता वर्णयति खट्वाङ्गैरिति ।—खट्वाङ्गै. तदाकारशस्त्रैः, भल्लाख्यशस्त्रैः, खलाख्य-खुरणाख्य-गदाख्य मुद्गराख्यशस्त्रैश्च, अर्द्धेन्दुबाणैः अर्द्धचन्द्राकृतिशरैः, नाराचाख्यास्त्रैश्च, भिन्दिपालैः, हलवराख्य मुषलाख्य शक्त्याख्य-कुन्ताख्यनानाविधास्त्रैः, कृपाणैः खड्गैः, पट्टीशाख्यशस्त्रैः, (अत्र छन्दोऽनुरोधात् दीर्घत्वम्) शूलवज्रप्रभृतिभि अपरै. अन्यैः, सुतीक्ष्णै अतितीक्ष्णै, दिव्यशस्त्रै. उत्तमास्त्रै., मिलितदलयुगे सम्मिलितोभयसैन्यमध्ये, सङ्घटानां वीरश्रेष्ठानाम्, अन्योऽन्यं परस्परम्, एवम् ईदृशं, युद्ध रणः, वर्त्तते सञ्जात-मित्यर्थः । स्रग्धरा वृत्तम् ॥ २४८ ॥

युद्ध विवृणोति, एके इति ।—एके वै केचन, हन्यमानाः अस्त्रैस्ताड्यमानाः, सुभटा वीराः, जीवहीनाः मृताः सन्तः, रणभुवि युद्धक्षेत्रे, पतन्ति शेरते, एके अन्ये च केचन, मूर्च्छां मोहं, प्रपन्नाः प्राप्ताः, तदपि तथाऽपि, उत्थिताः सन्तः, मूर्च्छा-

एके वै शात्रवाणां समरभयवशं त्रासमुत्पादयन्ति
एके सम्पूर्णघातैरुपहतवपुषो नाकनारीप्रियाः स्युः।
एके वै वीरधुर्य्या रिपुहतजठरा भिद्यमानाश्च शस्त्रैः
अस्त्रैः सम्भिन्नदेहा अपि भयरहिता वैरिभिर्यान्ति युद्धम् ॥२५०॥
तत्रारेश्छुरिकादिशस्त्रनिचया भान्तीव मीनादयः
केश-स्नायु-शिराऽन्त्रजालनिवहः शैवालवत् दृश्यते।
यानीभेन्द्रकलेवराणि पतितानीदृङ् न शम्भोर्मृधे
प्रस्थानीव विभान्ति तानि रुधिरे चास्थीनि शङ्खा इव ॥२५१॥

---

घनमानन्तरमिति भावः, निजबलैः स्वकीयसैन्यैः सह, सम्भवन्ति सङ्गच्छन्ते, साट्टहासम् अट्टहासेन सह, निजनिकृतिपरं निजस्य स्वस्य, निकृतिः पराभवः, परः प्रधानं यत्र तादृशं मानं गर्वं, मुञ्चन्ते त्यजन्ति, पराभवं प्राप्य आत्मनो वीरगर्वं त्यजन्तीत्यर्थः, मुञ्चन्ते इत्यत्र आत्मनेपदप्रयोगश्चिन्त्यः; आद्य श्रेष्ठ, प्रसाद प्रसन्नतां, भृत्वा धृत्वा, प्रसन्नचित्ताः सन्तः इत्यर्थः, अङ्गे देहे, प्रौढिम् उत्साहं, कृत्वा, जितमरणभयाश्च मृत्युभयरहिताः सन्तः, केचन इति शेषः, अग्रे धावन्ति अग्रसराः भवन्ति। स्रग्धरा वृत्तम् ॥ २४९ ॥

प्रकारान्तरेण वर्णयति, एके इति।—एके वै केचन, शात्रवाणां शत्रूणां, समरभयवशं रणशङ्काश्रय, त्रास भयम्, उत्पादयन्ति जनयन्ति, वीरदर्पतर्जनादिभिः विपक्षान् धर्षयन्ते इति भावः, एके अन्ये च केचन, सम्पूर्णघातैः अतिकठिनप्रहारैः, उपहतवपुषः आहतदेहाः सन्तः, नाकनारीणां स्वर्गीययोषिताम्, अप्सरसामिति यावत् प्रियाः वल्लभाः, स्युः भवेयुः, युद्धे देहं त्यक्त्वा स्वर्गताः भवेयुरित्यर्थः, एके वै अपरे च केचित् वीरधुर्य्याः वीरश्रेष्ठाः, रिपुभिः शत्रुभिः, हतम् आहतं, जठरं येषां ते तादृशाः, शस्त्रैः भल्लादिभिः, भिद्यमानाः ताड्यमानाः, तथा अस्त्रैः कृपाणादिभिः, सम्भिन्नः विदीर्णः, देहः येषां ते तादृशा अपि, भयरहिताः निर्भयाः सन्तः, वैरिभिः शत्रुभिः सह, युद्धं यान्ति सङ्ग्रामं कुर्व्वन्तीत्यर्थः। स्रग्धरा वृत्तम् ॥ २५० ॥

युद्धवर्णनप्रसङ्गेन युद्धमेव नदीरूपं प्रतिपादयन् वर्णयति, तत्रेति।—तत्र युद्धक्षेत्रे, अरेः शत्रोः, छुरिकादिशस्त्रनिचयाः असिपुत्रिकाप्रभृतिशस्त्रसमूहाः, मीनादयः इव मत्स्यादिजलजन्तव इव, भान्ति, केशाः, स्नायवः, शिराः, अन्त्रजालानि च, तेषां निवहः समूहः, शैवालवत् शैवालमिव, दृश्यते; यानि च इभेन्द्राणां महागजानां, कलेवराणि देहाः, पतितानि, सन्तीति शेषः, शम्भोः शिवस्य, मृधे गजासुरेण युद्ध

ततो विक्रमार्केण शालिवाहनस्य सैन्यं सर्वं पातितम्। तद्दृष्ट्वा शालिवाहनः शेषाभिधेयं पितरं नागेन्द्रं (ह) सस्मार। शेषेण च सर्पाः प्रेषिताः। तैः सर्पैर्दष्टं विक्रमादित्यसैन्यजातं विषेण मूर्च्छितं रणाङ्गणे पपात।

तदनन्तरं विक्रमार्को राजा एकाकी निजनगरं गत्वा स्वसैन्यसञ्जीवनार्थम् अर्द्धोदके (क) स्थित्वा नववर्षपर्य्यन्तं वासुकिमन्त्रमजपत्। ततो वासुकिः तस्मिन् प्रसन्नो भूत्वा बभाण,—"भो राजन्! वरं वृणीष्व"। विक्रमेण भणितं,—"भोः सर्पराज! यदि मयि प्रसन्नोऽसि, तर्हि सर्पविषवेगेन मूर्च्छितस्य मम सैन्यस्य सञ्जीवनार्थं मह्यं कञ्चित् अमृतघटं देहि"। अथ वासुकिना "तथोम्" इति (ख) दत्तं तममृतघटं गृहीत्वा राजा विक्रमो यावत् मार्गे समायाति, तावत् ब्राह्मणः कश्चिदागत्य,—

"हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः।
हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ" ॥ २५२ ॥

इत्याशिषमुक्तवान्।

---

युद्धे, ईदृक्षम् इयत्परिमाणः, गजदेहः न, पतितो नासीत् इति भावः, तानि गजकलेवराणि, प्रस्थानीव पर्व्वतशिखरस्थसमतलस्थानानीव, विभान्ति शोभन्ते, रुधिरे रक्तप्रवाहमध्ये, अस्थीनि च शङ्खा इव, दृश्यन्ते इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ २५१ ॥

(ह) शेषाभिधेयं नागेन्द्रम्—अनन्ताख्यसर्पराजम्।

(क) अर्द्धोदके—अर्द्धेन अङ्गार्द्धेन, उदके जले इत्यर्थः ; यद्वा,—उदकस्य अर्द्धम् अर्द्धोदकं तस्मिन् अर्द्धोदके अगभीरजले, अर्द्धदेहव्यापकम् उदकं तस्मिन् देहार्द्धव्यापके उदके, [ शाकपार्थिवादिवत् उत्तरपदलोपी समासः ] "अर्द्धोदकं—चरणात् नाभिपर्य्यन्तम् उदकम्" इति प्रायश्चित्ततत्त्वे रघुनन्दनः।

(ख) तथोम—तथाऽस्तु। इति एवमुक्त्वा।

आशीःश्लोकमाह, हरेरिति।—लीलया वराहस्य वराहरूपिणः, हरेः विष्णोः, स एकार्णवनिमग्नपृथिव्युद्धरणात् प्रसिद्धः इत्यर्थः, दंष्ट्रादण्डः दण्डाकारा दंष्ट्रा दन्तः, कः

ततो राज्ञा भणितं,—"भो ब्राह्मण! कुतः समागतोऽसि?" ब्राह्मणेनोक्तम्,—"अहं प्रतिष्ठाननगरादागतः"। राज्ञोक्तं,—"किं वदसि?" ब्राह्मणोऽवदत्,—"भवान् अर्थिजनचिन्तामणिः, (ग) यतश्चिन्तितं वस्तु दातुं समर्थः; ममैकस्मिन् वस्तुनि प्रीतिरस्ति, यदि तद्दीयते तर्हि वदामि"। राज्ञोक्तं,—"ब्राह्मण! यत् त्वया याच्यते, तत् दास्यामि"। ब्राह्मणेनोक्तं,—"मह्यमयं अमृतघटो दातव्यः"। राज्ञोक्तं,—"त्वं केन प्रेषितोऽसि?" ब्राह्मणेनोक्तम्,—"अहं शालिवाहनेन प्रेषितः"। तत् श्रुत्वा राज्ञा विचारितं, (घ)—"मया पूर्वं किञ्चिदविचार्य्यैव अस्मै 'दास्यामि' इति भणितम्; इदानीं न दीयते चेत्, तदा न केवलम् अपकीर्त्तिः, (ङ) अधर्मोऽपि भविष्यति; अतः सर्वथा मयैतत् दातव्यमेव"। ततः राजानं निरुत्तरमालोक्य ब्राह्मणेन भणितं,—"भो राजन्! किं विचारयसि? त्वमतीव सज्जनोऽसि।

---

धुष्मान्, पातु रक्षतु। हेमाद्रिकलसा सुमेरुरूपचूडाभूषणा, धात्री वसुन्धरा, यत्र यस्मिन् दंष्ट्रादण्डे इति यावत्, स्थिता सती इत्यध्याहार्य्यम्, छत्रश्रियम् आतपत्रशोभा, दधौ सन्दधार, धरित्री यत्राश्रिता सकलसच्छत्रवद्भातीति सरलार्थः। छत्रदण्डस्य उपरिभागे हि सुवर्णादिधातुविनिर्म्मितः सूक्ष्माग्रः कश्चित्पदार्थः लोकालोकरमणीयतया तद्भूषणरूपेण व्यवह्रियते इति हि प्रसिद्धिः। अत्र च दंष्ट्रादण्डः छत्रधारणदण्डस्थानीयः, सर्व्वतः प्रसृता पृथिवी च छत्रस्य वस्त्रस्थानीया, पृथिव्युपरिस्थ. सुमेरुश्च क्रमशः सूक्ष्माग्रतया सुवर्णमयतया च तादृशभूषणस्थानीयः। तथा च सुमेरुकलसेत्यत्र कलसशब्दः तादृशशिरोभूषणे लाक्षणिकः। [एतेन छत्रे शिरोभूषणापेक्षया दण्डस्यैव बृहत्तरतया यत्र अतिमहान् सुमेरुः शिरोभूषणं, तत्र तद्दण्डस्थानीया दंष्ट्रा ततोऽपि अतिमहत्तरेति वस्तु व्यज्यते]। पथ्यावक्त्रं वृत्तम्॥ २५२॥

(ग) अर्थीति।—चिन्तामात्रेण चिन्तितवस्तुदायको मणिविशेषः चिन्तामणिः; अर्थिजनानां याचकानां, चिन्तामणिरिव।

(घ) विचारितं—विवेचितम्।

(ङ) अपकीर्त्तिः,—अयशः।

सज्जनस्य भाषणं (च) कदाऽपि पुनरन्यथा न भवति। तथा चोक्तम्,—

उदयति यदि भानुः पश्चिमे दिग्विभागे,
प्रचलति यदि मेरुः शीततां याति वह्निः।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरन्यत् भाषणं सज्जनानाम्" ॥ २५३ ॥

तदाकर्ण्य राज्ञोक्तं,—"सत्यमुक्तं भवता। तथैव क्रियते, गृह्यतामयम् अमृतघटः" इत्युक्त्वा तस्मै घटं ददौ। सोऽपि ब्राह्मणः राजानं वर्णयन् निजस्थानं गतः; राजाऽपि उज्जयिनी-मगात्"।

इमां कथां कथयित्वा पुत्तलिका भोजराजमवोचत्,—"भो राजन्! त्वयि एवमौदार्य्यं धैर्य्यञ्च विद्यते यदि, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं स्थितः।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे शालिवाहन-युद्धवर्णनं नाम चतुर्विंशोपाख्यानम् ] ॥ २४ ॥

---

(च) भाषण—वचनम्।

सज्जनोक्तिः न कदाऽपि वितथा भवति, इति प्रदर्शयितुं प्रमाणभूतां शिष्टोक्तिम् उदाहरति, उदयतीति।—भानुः सूर्य्यः, यदि पश्चिमे दिग्विभागे पश्चिमस्यां दिशि, उदयति प्रकाशं याति, यदि मेरुः सुमेरुपर्वतः, प्रचलति स्वस्थानात् भ्रश्यति, वह्निः अग्निः, यदि शीततां शीतलतां, याति गच्छति, यदि पर्वताग्रे पर्वतशृङ्गे, शिलायां प्रस्तरोपरि, पद्मं कमलं विकसति स्फुटति, यद्येवमसम्भाव्यमपि सम्भवेदित्यर्थः, पुनः किन्तु, सज्जनानां साधुजनानां, भाषणं वाक्यम्, अन्यत् अन्यथाभूतं, न भवति। मालिनी वृत्तम् ॥ २५३ ॥

इति चतुर्विंशोपाख्यानम् ॥ २४ ॥

## अथ अनावृष्टिवारणोपायवर्णनं नाम पञ्चविंशोपाख्यानम् ।

अथ पुनरपि राजा यावत् सिंहासनमारोढुम् अचेष्टत, तावदन्यया पुत्तलिकया तं निवार्य्य उक्तं,—"भो राजन्! यस्य विक्रमस्येव औदार्य्यादिगुणाः सन्ति, तेनैव अस्मिन् सिंहासने उपवेष्टव्यम्"। भोजेनोक्तं,—"भोः पुत्तलिके! कथय विक्रमस्य औदार्य्यादिगुणवृत्तान्तम्"। सा अब्रवीत्,—"श्रूयतां राजन्! विक्रमादित्ये राज्यं शासति एकदा कश्चित् ज्योतिषिकः समागत्य राजानमुद्दिश्य,—

"सूर्य्यः शौर्य्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः
सद्बुद्धिञ्च बुधो गुरुश्च गुरुतां शुक्रः सुतं शं शनिः।
राहुर्बाहुबलं करोतु नियतं केतुः कुलस्योन्नतिं
नित्यं प्रीतिकरा भवन्तु भवतां सर्व्वेऽनुकूला ग्रहाः" ॥२५४॥

इत्याशिषमुक्त्वा पञ्चाङ्गानि (क) कथयामास।

---

आशीः श्लोकमाह, सूर्य्य इति।—सूर्य्यः नियत सदैव, शौर्य्यं पराक्रम करोतु, अथ तथा, इन्दुः सोमः, इन्द्रपदवीम् इन्द्रतुल्यसम्पद, करोतु, मङ्गलः मङ्गलग्रहः, सन्मङ्गलं प्रार्थित कुशल, करोतु ददातु इति यावत्, बुध. बुधग्रहः,सद्बुद्धिम् उत्तमज्ञानं, करोतु; गुरुः वृहस्पतिः, गुरुतां गौरवं, करोतु, शुक्रः शुक्रग्रहः, सुतं पुत्रं, करोतु ददातु इत्यर्थः, शनिः शनिग्रहः, शं मङ्गलं सुख वा, करोतु, राहु. राहुग्रहः, बाहुबल बाह्वोः सामर्थ्यं, करोतु, केतुः केतुग्रहश्च, कुलस्य वंशस्य, उन्नतिम् अभ्युदयं, करोतु, सर्वे सकलाः, ग्रहाः अनुकूलाः प्रसन्नाः सन्त., भवता युष्माक, नित्यं सदा, प्रीतिकराः सन्तोषजनकाः, भवन्तु जायन्ताम्। शार्दूलविक्रीडितं वृत्तम् ॥ २५४ ॥

(क) पञ्चाङ्गानि—"तिथिर्वारश्च नक्षत्रं योगः करणमेव च। पञ्चाङ्गमेतत् विज्ञेयम्" इत्येवंलक्षणानि।

अथ भूपतिः ज्योतिषिकमपृच्छत्,—"भो दैवज्ञ! अस्मिन् संवत्सरे कीदृक् शुभमशुभं वा भविष्यति?" दैवज्ञ आह,—"अस्मिन् वर्षे राजा रविः, मन्त्री भौमः, मेघाधिपोऽपि भौमः एव; शनैश्चरो रोहिणीशकटं भित्त्वा (ज) यास्यति, तस्मात् सर्वथा अनावृष्टिर्भविष्यति। उक्तञ्च संहितायाम्, (झ)—

यदा ह्यर्कसुतो भुङ्क्ते रोहिणीशकटं खलु।
भित्त्वा न वर्षति तदा मेघो द्वादश वत्सरान्॥ २५५॥

तथा च,—

रोहिणीशकटमर्कनन्दनः
चेद्भिनत्ति रुधिरौघभाक् मही।
किं ब्रवीमि न हि वारि सागरे
सर्वलोक उपयाति सङ्क्षयम्॥ २५६॥

---

(ज) भौमः,—मङ्गलः। रोहिणीशकट—रोहिणीनक्षत्रस्य शकटाकारचतुर्भागात्मकं स्थानम्; तच्च वृषराशेः सप्तदशांशे याम्यविक्षेपद्वयात् परं विद्यते। तथा च सूर्य्यसिद्धान्तः,—"वृषे सप्तदशे भागे यस्य याम्योऽंशकद्वयात्। विक्षेपोऽभ्यधिको भिन्द्यात रोहिण्याः शकटन्तु सः॥" (सः,—ग्रहः) इति (सूर्य्य० ८।१३)। भित्त्वा—विदार्य्य, अतिक्रम्येत्यर्थः।

(झ) संहिताया—नानाविषयसंवलितज्योतिषग्रन्थभेदे, तथा च वृहत्संहितायां—"ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठित, तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्त्यते संहिता" इति।

शनैश्चरस्य रोहिणीशकटभेदात् अनावृष्टिजनकत्वे प्रमाणमाह, यदेति।—अर्कसुतः सूर्य्यपुत्रः शनिः, यदा हि यदैव, रोहिणीशकटं रोहिणीनक्षत्रं, भित्त्वा भुङ्क्ते अर्थात् शनिग्रहः यदा रोहिण्याम् अवतिष्ठते, तदा खलु निश्चित, द्वादश वत्सरान् द्वादश वर्षाणि व्याप्य इत्यर्थः, मेघो जलदः, न वर्षति वृष्टिपातो न भवतीत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २५५॥

तत्रैव प्रमाणान्तरमाह, रोहिणीति।—अर्कनन्दनः शनिः, चेत् यदि रोहिणीशकट रोहिणीनक्षत्रस्य शकटाकृतिस्थानं, भिनत्ति भित्त्वा गच्छति, तदा मही पृथिवी, रुधिरौघभाक् रुधिरधारासमूहवती भवति, किं ब्रवीमि इतः किमधिकं कथयामि,

मतान्तरे च,—

यदा भिनत्ति मन्दोऽयं रोहिण्याः शकटं तदा।
वर्षाणि द्वादशानीह वारिवाहो न वर्षति" ॥ २५७॥

एतद्दैवज्ञवचनं श्रुत्वा राजा अब्रवीत्,—"तस्यावर्षणस्य कोऽपि प्रतिकारोपायोऽस्ति न वा?" दैवज्ञेनोक्तं,—कुतो नास्ति? किमपि ग्रहहोमादिकं क्रियते चेत् वृष्टिर्भविष्यति"।

ततो राजा विक्रमः श्रोत्रियान् (ञ) ब्राह्मणान् आहूय, तेषां पुरतः दैवज्ञमुखात् श्रुतं पूर्ववृत्तान्तम् उक्त्वा तैर्होमं कारयितुमारब्धवान्। ततस्तैः सर्वाऽपि होमक्रिया सम्पूर्णं सम्पादिता। राज्ञा च द्रव्यान्न-वस्त्रादिना ब्राह्मणाः सन्तोषिताः; दश दानानि (ट) च दत्तानि। तदनन्तरं भूरिदानेन दीनान्धबधिरपङ्गुनाथादयोऽपि सन्तोषिताः; परं वृष्टिर्नाभूत्। तदभावेन सर्वे लोकाः दुर्भिक्षपीड़िताः बुभुक्षिताः (ठ) परं क्लेशमगच्छन्। राजाऽपि तेषां दुःखेन स्वयमतिदुःखितः सन्,

---

सागरे समुद्रे, वारि जलं, न हि नैव स्यात्, समुद्रेऽपि जलाभावः भवेत्, ततश्च सर्वलोकः सङ्क्षयं नाशम्, उपयाति प्राप्नोति, एवं सति दुर्भिक्षपीडिताः सर्वे म्रियन्ते इति भावः। रथोद्धता वृत्तम् ॥ २५६ ॥

अस्मिन्नेवार्थे मतान्तरम् उदाहरति, यदेति।—यदा अयं मन्दः शनिग्रहः, रोहिण्याः शकटं भिनत्ति रोहिणीनक्षत्रमतिक्रम्य यातीत्यर्थः, तदा वारिवाहः मेघः, इह पृथिव्यां, द्वादशानि वर्षाणि (कवीनां निरङ्कुशत्वात् "द्वादशानि" इति प्रयोगः) द्वादश वत्सरान् व्याप्य, न वर्षति अनावृष्टिः भवतीत्यर्थः। पथ्यावक्त्रं वृत्तम् ॥ २५७ ॥

(ञ) श्रोत्रियान्—वेदज्ञान्।

(ट) दश दानानि—"कनकाश्वतिला नागो दासी रथमहीगृहाः। कन्या च कपिला धेनुर्महादानानि वै दश ॥" इत्युक्तदशविधदानानि।

(ठ) दुर्भिक्षपीड़िताः,—भिक्षाया अभावः [अर्थाभावेऽव्ययीभावः अदन्तत्वादम्, तेन "दुर्भिक्षम्" इत्यादि च सिद्धम्, तद्यथा—"दुर्भिक्षे राष्ट्रविप्लवे" इति] तेन पीड़िताः मर्द्दिताः। बुभुक्षिताः,—क्षुधिताः।

एकदा यज्ञशालायां (ड) समुपविष्टो यावच्चिन्तयति, तावत् अशरीरिणी वाक् उदचरत्,—"भो राजन्! पुरःस्थितदेवालय-निवासिनी देवी ते आशां पूरयिष्यति। अस्या देवतायाः पुरतः द्वात्रिंशल्लक्षणयुक्तस्य पुरुषस्य शिरः छित्त्वा बलिः (ढ) दीयते चेत्, वृष्टिर्भविष्यति"।

तदाकर्ण्य राजा आत्मानमेव द्वात्रिंशल्लक्षणयुक्तं पुरुषम् अव-धार्य्य देवालयं गत्वा देवीं प्रणम्य यावत् खड्गं स्वशिरश्छेदार्थं दधाति, तावद्देवतया तया खड्गो धृतो भणितश्च,—"भो राजन्! तव औदार्य्येण प्रसन्नाऽस्मि, वरं वृणीष्व"। राजा वदति,—"भोः देवि! यदि मयि प्रसन्नाऽसि, तर्हि इमामनावृष्टिं निवारय"। देवतयाऽपि "तथा भविष्यति" इत्युक्त्वा तिरोदधे (ण)। ततो राजा देवालयात् निर्गत्य यावत् निजपुरीमागन्तुं प्रवृत्तः, तावदेव अम्बरप्रदेशः घनाघनैरावृतः मुहुर्मुहुः श्रवणभीषण-वज्रनिर्घोषैः शिखण्डिनां मोदमुत्पादयन्, दिव्योदकपिपासून् चातकान् उन्मुखयन्, चपलाविकाशैः दिगन्तरालमुद्भासयन्, करिशुण्डाकारस्थूलधारवर्षणैः सरस्तडागादीन् उत्पूरयन्, सर्वप्राणिनां क्लेशमपाकरोत्। (त) तत् दृष्ट्वा हर्षातिशयो राजा निजसभामागतः"।

(ड) यज्ञशालायां—यज्ञाय शाला गृहं तस्यां, यज्ञमण्डपे इत्यर्थः।

(ढ) बलिः,—पूजा उपहारो वा।

(ण) तिरोदधे—अन्तर्हितम्।

(त) अम्बरप्रदेशः,—नभोमण्डलम्। घनाघनैः,—वर्षुकमेघैः, ["हन्तेर्घत्वञ्च" इति वार्त्तिकेन हन्धातोः अचि घत्वम्, अभ्यासस्य उत्तरस्य त्वभ्यासाच्चेति कुत्वम्]। आवृतः,—आच्छन्नः सन्। मुहुर्मुहुः,—पुनःपुनः। श्रवणेति।—श्रवणे श्रुतिविवरे, भीषणः दारुणः, भीतिप्रद इत्यर्थः, यः वज्रनिर्घोषः कुलिशपतनशब्दः तैः। शिख-ण्डिनां—मयूराणाम्। मोद—हर्षम। उत्पादयन्—सञ्जनयन्। दिव्योदकपिपासून् —मेघजल पातुमिच्छून्। चातकान्—तदाख्यपक्षिविशेषान्। उन्मुखयन्—ऊर्द्ध्व-

इमां कथां कथयित्वा पुत्तलिकया भणितं,—"भो राजन्! यदि त्वयि एवं धैर्य्यं परोपचिकीर्षा (थ) च विद्यते, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं स्थितः।

[इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे अनावृष्टि-वारणोपायवर्णन नाम पञ्चविंशोपाख्यानम्] ॥ २५ ॥

## अथ कामधेनुसंवादो नाम षड्विंशोपाख्यानम्।

पुनरपि राजा यावत् सिंहासनं समुपवेष्टुमुपचक्रमे, तावदन्यया पुत्तलिकया प्रतिरुध्य उक्तं,—"भो राजन्! अस्मिन् सिंहासने स एव उपवेष्टुं योग्यः, (द) यस्य विक्रमस्येवौदार्य्यादयो गुणाः सन्ति"। तदाकर्ण्य भोजेनोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्"।

---

मुखान् कुर्व्वन्, (मेघोदये चातकाः तज्जलपानार्थमुन्मुखा भवन्ति, भूस्थं जलं न पिबन्ति इति प्रसिद्धिः)। चपलाविकाशैः,—तडिद्विद्योतनैः। दिगन्तरालं—दिशां मध्यम्। उद्भासयन्—प्रदीपयन्। करिशुण्डेति।—करिशुण्डाकारा गजकरसदृशाः, स्थूलाः पृथुलाः, धाराः सम्पाताः यत्र तथाविधैः, वर्षणैः वारिपातनैः। सरस्तडागादीन्—सरः,—सरोवरः, तडागः,—"प्रशस्तभूमिभागस्थो बहुसंवत्सरोत्थितः। जलाशयस्तडागः स्यात्" इत्युक्तलक्षणः, तदादीन्। उत्पूरयन्—जलवेगेन उच्छूनयन्। सर्व्वप्राणिनां—समस्तजीवानाम्। क्लेशं—दुःखम्। अपाकरोत्—दूरीचकार, प्रशमितवान् इत्यर्थः।

(थ) परोपचिकीर्षा—परोपकारेच्छा।

इति पञ्चविंशोपाख्यानम् ॥ २५ ॥

---

(द) योग्यः,—उपयुक्त इत्यर्थः, [योगम् अर्हति इति यत् योग्यः, न तु युजः ण्यत्, कर्त्तरि तदविधानात्]।

राज्ञैवं पृष्टा सा अब्रवीत्,—"भो राजन्! श्रूयताम,—औदार्य्य-दया-विवेक-धैर्य्यादिगुणैः (ध) अन्यो विक्रमसदृशो राजा भूमण्डले नास्ति। अन्यच्च, तेन यदुच्यते, तदन्यथा न क्रियते, यच्चित्ते तिष्ठति, वाचा तत्तथैव वदति, यद्वचने प्रकाशयति, तत्तथैव करोति, अतोऽतीव सज्जनोऽयम्। उक्तञ्च,—

यथा चित्तं तथा वाक्यं यथा वाक्य तथा क्रिया।
चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ॥ २५८ ॥

एकदा सुरनगर्य्याम् (न) इन्द्रः सिंहासने उपविष्ट आसीत्। तस्य च सभायामष्टाशीतिसहस्राणि ऋषीणाम् आसन्। त्रयस्त्रिंशत्कोट्यः देवता उपविष्टा अभवन्। तथा अष्टौ लोकपालाः, एकोनपञ्चाशन्मरुतः, द्वादशादित्याः, नारदः, तुम्बुरुः, (प)

(ध) औदार्य्येति।—औदार्य्य महत्त्व दया परदुःखप्रहाणेच्छा, विवेक सदसद्विचार., धैर्य्य मनसः स्थैर्य्य, तदादिभि. गुणै :

साधव सर्वास्वेव अवस्थासु अकपटाः भवन्ति, न विषकुम्भपयोमुखवत् वाक्चित्तयोः भिन्नरूपा इति दर्शयितुं शिष्टोक्तिमाह, यथेति।—चित्त मन., यथा यादृक्, वाक्य वचन, तथा तादृक् यथा यादृश, वाक्य वचनं, क्रिया कार्य्यमपि. तथा तादृशमेव भवति; साधूना सज्जनाना, चित्ते मनसि, वाचि वाक्ये, क्रियाया कार्य्ये च, एकरूपता समानता, भवतीति शेष.। इत. २६० सङ्ख्यकश्लोकपर्य्यन्त पथ्यावक्त्रवृत्तम् ॥ २५८ ॥

(न) सुरनगर्य्या—देवपुर्य्याम्, अमरावत्यामित्यर्थ.।

(प) अष्टौ लोकपाला,—इन्द्राग्नियमनिर्ऋतिवरुणवायुकुवेरेशाना इन्द्रादयोऽधिपतय., तथा चामर.,—"इन्द्रो वह्नि पितृपति नैर्ऋतो वरुणो मरुत्: कुवेर ईशः पतय पूर्वादीना दिशा क्रमात्" ॥ इति। एकोनपञ्चाशन्मरुत.—एकोनपञ्चाशत्सङ्ख्यकवायव, तेषा नामानि यथा वह्निपुराणे,—"१ एकज्योतिश्च २ द्विर्ज्योति ३ त्रिज्योतिः ४ ज्योतिरेव च। ५ एकशक्रो ६ द्विशक्रश्च ७ त्रिशक्रश्च ८ महाबल ॥ ९ इन्द्रश्च १० गत्यदृश्यश्च तत. ११ पतिमकृत्परः। १२ मितश्च १३ सम्मितश्चैव १४ सुमितश्च महाबलः ॥ १५ ऋतजित् १६ सत्यजिच्चैव १७ सुषेण १८ सेनजित् तथा। १९ अभिमित्री-२० ऽनमित्रश्च २१ पुरुमित्री २२ ऽपराजितः ॥ २३ ऋतश्च २४ ऋतवाहश्च

उर्वशी-मेनका-रम्भा-तिलोत्तमा-मिश्रकेशी-घृताची-मञ्जुघोषा-प्रियदर्शना प्रभृतिदिव्यस्त्रियश्च (फ) उपविष्टा बभूवुः। सर्वोऽपि गन्धर्वाणां गणः (ब) उपविष्टोऽभूत्। तस्मिन्नवसरे तत्र नारदेन उक्तम्,—"अभ्रादिभूमण्डले (भ) विक्रमार्कसदृशः कीर्त्तिमान्, परोपकारी, महासत्त्वसम्पन्नो राजा नास्ति"। तस्य तद्वचनमाकर्ण्य सर्वे देवसभास्थिताः परं विस्मयं जग्मुः। तदा सुरभिः (म) अभणत्,—"कोऽत्र सन्देहः? विस्मयो वा कः? उक्तञ्च,—

---

२५ धर्त्ता च २६ धरणी २७ ध्रुवः। २८ विधारणो नाम तथा २९ देवदेवो ३० महाबलः॥ ३१ ईदृक्षश्चाप्य-३२ दृक्षश्च एते दश ३३ मिताशिनः। ३४ व्रतिनः ३५ प्रसदृक्षश्च ३६ सभरश्च ३७ महायशाः॥ ३८ धाता ३९ दुर्गो ४० धिति ४१ भीमः ४२ त्वभियुक्तः ४३ त्वपात्सहः। ४४ द्युति ४५ र्वपुरनाध्योऽथ ४६ वासः ४७ कामी ४८ जयी ४९ विराट्॥ इत्येकोनाश्च पञ्चाशन्मरुतः पूर्वसम्भवाः' इति। द्वादशादित्या,—द्वादशसूर्याः. विष्णुधर्म्मोत्तरे तेषां नामानि; यथा,—"धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्य एव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते"॥ इति। नारदः,—स्वनामख्यातदेवर्षिविशेषः। तुम्बुरु,—"सुप्रिया चातिबाहुश्च विख्यातौ च हाहा हूहूः। तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्व्वसत्तमा"॥ इति महाभारतीयादिपर्वोक्तगन्धर्वविशेषः स च देवगायकः।

(फ) दिव्यस्त्रियः,—अप्सरसः, सुराङ्गना इति यावत्।

(ब) गणः,—समूहः।

(भ) अभ्रादिभूमण्डले—अभ्रं सुरवर्त्म, आकाशमिति यावत्; (आकाशे राज्ञोऽसम्भवात् अत्र अभ्रशब्देन लक्षणया स्वर्गः बोध्यते) तत् आदि. यस्य तादृशे भूमण्डले स्वर्गादित्रिभुवने इत्यर्थः।

(म) सुरभिः,—कश्यपपत्नी गोमाता; तथा च हरिवंशे ३य अध्याये कश्यपपत्नीकथने,—"सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा" इति। ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४४ अध्याये च,—"गवामधिष्ठात्री देवी गवामाद्या गवां प्रसूः। गवां प्रधाना सुरभी गोलोके सा समुद्भवा॥" इति गवाद्यत्वमुक्तम्॥

दाने तपसि शौर्य्ये च विज्ञाने विनये नये।
विस्मयो न च कर्त्तव्यो बहुरत्ना वसुन्धरा ॥ २५९ ॥

तथाच,—

वाजि-वारण-लौहानां काष्ठ-पाषाण-वाससाम्।
नारी-पुरुष-तोयानाम् अन्तरं महदन्तरम्" ॥ २६० ॥

तत् श्रुत्वा इन्द्रेण सुरभिकन्या कामधेनुः (य) भणिता,—"त्वं विक्रमस्य दया-परोपकारादीन् गुणान् निर्णेतुं मर्त्यलोकं गच्छ" इति।

ततः कामधेनुरत्यन्तदुर्बलं गोरूपं धृत्वा मर्त्यलोकं गच्छन्ती यावत् विक्रमार्को मार्गे समायाति, तावत् स्वयम् अत्यन्तदुस्तरे पङ्के निमग्ना स्वसमीपवर्त्तिना च केनचित् व्याघ्रेण भक्षणमव-

---

वसुन्धराया रत्नप्रसविनीत्वात् तत्सुतस्य विक्रमस्य परोपकारित्वादिगुणे न कोऽपि विस्मयः इति प्रतिपादयितुं प्रमाणश्लोकमाह, दाने इति।—दाने दानविषये, तपसि तपस्याविषये, शौर्य्ये पराक्रमविषये, विज्ञाने शास्त्रज्ञाने, विनये नम्रतायां, नये नीतौ च, विस्मयः न च कर्त्तव्यः नैव करणीयः, हि यतः, वसुन्धरा पृथिवी, बहुरत्ना बहुविधरत्नशालिनी, अतः तस्याः सर्वमातृस्वरूपतया सर्वस्मिन्नेव सर्वगुणसम्भव इति भावः ॥ २५९ ॥

एकजातीयेषु सर्वेष्वेव पदार्थेषु उत्कृष्टापकृष्टभेदेन परस्परतारतम्यसत्त्वेऽपि मानवादिषु एवं कश्चिद्विशेषः परिलक्ष्यते यत्, गुणगतोत्कर्षापकर्षयोः प्रभूततारतम्यवशात् एतेषु केचित् अभिन्नजातीया अपि पृथगिव परिलक्ष्यन्ते, अतो मानवेऽपि विक्रमे तादृशं गुणोत्कर्षमालोक्य न विस्मयनीयमित्येव वक्तुमाह, वाजीति।—वाजिनाम् अश्वानां, वारणानां गजानां, लौहानां धातुद्रव्यविशेषाणां, काष्ठानां दारूणां, पाषाणानां प्रस्तराणां, वाससां वस्त्राणाञ्च, नारीणां स्त्रीणां, पुरुषाणां नराणाञ्च तोयानां जलानामपि, अन्तरम् एकजातीयेष्वपि प्रभेदः, महदन्तरं महान् प्रभेदः, गुणगतविशेषपार्थक्यावगाहि इत्यर्थः, भवतीति शेषः ॥ २६० ॥

(य) कामधेनुः,—अभीष्टवस्तुदायिका सुरभिदुहिता, रोहिणीत्यपरनाम्नी स्वर्गधेनुरित्यर्थः।

लोकितेत्येवं स्वमायया (र) आत्मानमतिविपन्नमदर्शयत्; राजानं दृष्ट्वा च कातरं शब्दं चकार। एवं तत्कातरोक्तिश्रवणविदलितप्रायहृदये राजनि तां गां पङ्कात् उत्थापयितुं प्रयत्नं कुर्व्वाणे सूर्य्योऽस्तं गतः। अथ क्रमेणान्धकारमयी रात्रिरप्यागता। सोऽपि अनाथां तां गां रक्षन् तत्रैव स्थितः। एवं निशाऽवसानमभूत्। ततः सूर्य्योदये जाते सा गौः तस्य राज्ञो दयाधैर्य्यादिगुणान् निरीक्ष्य स्वयमेवोत्थिता राजानमवदत्,—"भो राजन्! अहं कामधेनुः; तव दयादिगुणान् परीक्षितुं स्वर्गात् समागता; स्वयमेत्य प्रत्ययश्च (ल) दृष्टः। त्वत्सदृशो दयापरो राजा भूतले नास्ति। तव अनेन गुणेन अहं प्रसन्नाऽस्मि, वरं वृणीष्व"।

राज्ञा भणितं,—"त्वत्प्रसादात् मयि कञ्चिदपि न्यूनता नास्ति, तत् किं मया प्रार्थ्यते?" तयोक्तं,—"मम वाक्यं कथमपि निष्फलं न भवति, तस्मात् अहं तव समीपे एव तिष्ठामि" इत्युक्त्वा राज्ञा सह निरगच्छत्।

ततो राजा यावत् तया सह मार्गे गच्छति, तावत् ब्राह्मणः कश्चिदागत्य,—

"सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः" ॥२६१॥

---

(र) मायया—ऐन्द्रजालिकशक्त्या।

(ल) प्रत्ययः,—निश्चयः।

विनायकस्य विघ्नमूलत्वात् स सर्वविघ्नेभ्यः विघ्नेभ्यः पातुं समर्थः इत्यभिप्रेत्य तल्लील वर्णनमूलकमाशीःश्लोकमाह, सानन्दमिति।—शूलपाणेः शिवस्य, ताण्डवे नृत्यकाले. सानन्द यथा तथा नन्दिनः शिवानुचरस्य हस्ताभ्यां कराभ्याम्, आहतस्य ताडितस्य, मुरजस्य

इत्याशिषं प्रयुज्याब्रवीत्,—"भो राजन्! भाग्याद्दरिद्रोऽहम् उदरान्नसंस्थानार्थं दिवानिशमितस्ततो भ्रमामि, पश्यामि च निरन्तरं सर्वान् कातरदर्शनेन, परं दुर्भाग्यात् मां केचन न पश्यन्ति। उक्तञ्च,—

दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः।
पश्याम्यहं जगत् सर्वं न मां पश्यति कश्चन॥ २६२॥

यस्तु दारिद्र्यमुद्रितः, (व) तस्य गृहे सर्वदा सूतकमिव (श) भवति। तथा चोक्तम्,—

स्वग्रासं पथिकाय देहि सुभगे! नो नो गिरो निष्फलाः
कस्मात् ब्रूहि? सखे! नु सूतकमिदं कालावधिर्नास्ति किम्?।

---

मदवृन्दस्य, रवेण शब्देन, आहतः मेघगर्जनभ्रमेण समागत इत्यर्थः, यः कौमारबर्हिः कार्त्तिकेयस्य वाहनं मयूरः, तस्मात् त्रासात् भयात् हेतोः, फणिपतौ सर्पराजे भोगसङ्कोचभाजि फणसङ्कोचकारिणि, एवं नासाग्ररन्ध्रं गणेशस्य नासिकाविवरं विशति गच्छति च सति, गण्डात् गणेशस्य कपोलदेशात्, उड्डीना उत्पतिता, या अलिमाला भ्रमरपङ्क्तिः, तया मुखरिताः शब्दिताः ककुभः दिशः यासु ताः तादृश्यः, वैनायक्यः विनायको गणेशः तत्सम्बन्धिन्यः, तदीया इत्यर्थः, चीत्कारवत्यः कातरशब्दसहिताः, (सम्भ्रमवशादिति भावः) वदनविधुतयः नासारन्ध्रप्रविष्टसर्पत्वात् मुखकम्पनानि [कर्तृपदमेतत्] वः युष्मान्, चिरं पान्तु रक्षन्तु। स्रग्धरा वृत्तम्॥ २६१॥

अणिमादिसिद्धः पुरुषः यथा सर्वेषामदृश्यो भवितुं शक्नोति, तथा स च सर्व्वानेव पश्यति, दारिद्र्यसिद्ध्या अहमपि तद्वत् सिद्धो जात इति वक्तुं तादृशादृश्यतासिद्धिकारणं दारिद्र्यं स्तौति, दारिद्र्यायेति।—दारिद्र्याय दैन्याय, तुभ्यं नमः हे दारिद्र्य! त्वामहं नमस्करोमीत्यर्थः, (यतः) त्वत्प्रसादतः त्वदनुग्रहात्, अहं सिद्धः सिद्धिं प्राप्तः, (यतः) अहं सिद्धवत् सर्वं जगत् जगद्वासिनः सर्वान् जनानित्यर्थः, पश्यामि, किन्तु कश्चन कोऽपि जनः, मां दरिद्रं सिद्धमिव, न पश्यति न अवलोकयति, दर्शने प्रार्थनाशङ्कया सर्वे अन्यतोमुखा भवन्तीति भावः। पथ्यावक्त्रं वृत्तम्॥ २६२॥

(व) दारिद्र्येण—निर्धनतया, मुद्रितः सङ्कुचितः, आच्छन्न इति यावत्।

(श) सूतकं—जननाशौचम्।

अशुचेरिव दरिद्रस्य आतिथेयादिष्वपि नाधिकारः इति दम्पत्योरुक्तिप्रत्युक्तिच्छलेन

यावज्जीवमिदं न याति विषमं पुत्रोद्भवं सूतकं
को जातो मयि सर्ववित्तरहिते ? दारिद्र्यनामा सुतः" ॥२६३॥

राज्ञोक्तं,—"भो ब्राह्मण ! किं याचसे ?" ब्राह्मणेन भणितं,—"भो राजन् ! भवान् आश्रितकल्पवृक्षः ; (ष) यावज्जीवं मम दारिद्र्यविच्छित्तिः (स) यथा भवति, तथा विधेयम्" । राज्ञोक्तं,—"तर्हि इयं कामधेनुस्तव ईप्सितं दास्यति, इमां गृहाण" इत्युक्त्वा तस्मै तां कामधेनुं प्रादात् । ब्राह्मणः स्वर्गसुखं गतः (ह) इव तां कामधेनुं गृहीत्वा निजस्थानं जगाम ; राजाऽपि निजनगरीमगात्" ।

इमां कथां कथयित्वा पुत्तलिका भोजराजं जगाद,—"भो

---

दर्शयति, स्वग्रासमिति ।—तत्रादौ पत्नीमामन्त्र्य पतिराह,—हे सुभगे । पतिसौभाग्यवति । पथिकाय अध्वगाय अभ्यागतजनाय इत्यर्थः, स्वग्रास निजखाद्यं, देहि अर्पय । तदाकर्ण्य पत्नी प्रतिवक्ति, नो इति ।—नो नो नैव नैव, गिरः तव वाक्यानि, निष्फलाः निरर्थकाः, जाता इति शेषः । पतिः पुनः पृच्छति, कस्मादिति.—कस्मात् ? कुत एतत् ? ब्रूहि कथय । पत्नी उत्तरयति, सखे इति,—नु भोः सखे । सूतकमिदं जननाशौचं जातमित्यर्थः । भूयोऽपि पतिः पृच्छति, कालेति,—अस्य च कालावधिः दशाहादिकालनियमः, नास्ति किम् ? ततः पत्नी उत्तरयति, यावदिति,—यावज्जीवं जीवनकालपर्य्यन्तस्थायि, अत एव विषमं विजातीयमित्यर्थः, पुत्त्रमात्रजनने हि यादृशम् अशौचम्, एतत्पुत्त्रजनने तु न तादृशमिति भावः, इदं वर्त्तमानमित्यर्थः, पुत्रोद्भव पुत्त्रोत्पत्तिजन्यं सूतकं न याति नापगच्छति, चिरस्थायि एतत् जननाशौचमित्यर्थः । एतदाकर्ण्य भूयोऽपि भर्त्ता पृच्छति, क इति,—सर्ववित्तरहिते सकलधनवर्ज्जिते, मयि मद्गृहे इत्यर्थः, को जातः ? उत्पन्नः ? पुनः पत्नी प्रतिवक्ति, दारिद्र्येति,—दारिद्र्यनामा सुतः दारिद्र्यनामकः कश्चित् पुत्त्रः, जातः इति पूर्वेण अन्वयः । शार्दूलविक्रीडित वृत्तम् ॥ २६३ ॥

(ष) आश्रितेति ।—आश्रितानां जनानां कल्पवृक्ष इव, प्रार्थितवस्तुदायकत्वात् ।

(स) दारिद्र्यविच्छित्तिः,—दारिद्र्यनाशः ।

(ह) गतः,—प्राप्तः ।

राजन्! त्वयि एवमौदार्य्यं यदि विद्यते, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीम् (क) अभूत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे कामधेनु-संवादो नाम षड्विंशोपाख्यानम् ] ॥ २६ ॥

---

## अथ द्यूतकारसंवादो नाम सप्तविंशोपाख्यानम्।

पुनरपि राजा सिंहासने उपवेष्टुं यावत् प्रायतत, तावदन्या पुत्तलिका तं निवार्य्याभणत्,—"भो राजन्! यस्य विक्रमस्येव दयादाक्षिण्यौदार्य्यादयो गुणाः सन्ति, सोऽस्मिन् सिंहासने उपवेष्टुं क्षमः"। राज्ञोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्य दयादाक्षिण्यौदार्य्यादिगुणवृत्तान्तम्"।

सा अब्रवीत्,—"श्रूयतां राजन्! विक्रमो राजा कदाचित् पृथिवीं पर्य्यटन् नगरमेकमगमत्। तत्रत्यो राजा अतीव धार्मिकः श्रुति-स्मृतिविहितानुष्ठानपरः तत्र स्थितान् ब्राह्मणादिचतुर्वर्णान् सम्यक् प्रतिपालयति स्म। तत्रत्यः सर्वो लोकः सदाचाररतः, अतिथिप्रियः, (ख) दयापरश्चासीत्। राजा विक्रमः 'दिनत्रयं दिनपञ्चकं वा अत्र स्थास्यामि' इति कृत-

---

(क) तूष्णी—मौनम्।

इति षड्विंशोपाख्यानम् ॥ २६ ॥

---

(ख) अतिथीति।—अतति गच्छति, न तिष्ठतीति अतिथि [ "ऋतन्यञ्जि" (उ० ४ पा० २ स० ) इति अतधातोरिथिन् ] स प्रियो वत्सलो यस्य सः, अतिथिवत्सल इत्यर्थः।

निश्चय: कश्चन अतिमनोहरं देवालयं गत्वा, तत्रत्यं देवं नमस्कृत्य रङ्गमण्डपे ( ग ) उपविष्ट. ।

अत्रान्तरे कश्चित् राजकुमार इव अतिमनोहररूप: दुकूलवस्त्रधारी. ( घ ) नानाऽऽभरणालङ्कृतशरीर:, कुङ्कुम-कर्पूर-कस्तूरीमिश्रितै: चन्दनैर्विलिप्ततनु: वयस्यै: सह तत्रागत्य, कियत्कालं नानाविधकामकथाप्रस्तावविनोदादिकं (ङ) विधाय, पुनस्तै: सह तस्मात् निर्गत: । राजाऽपि तं दृष्ट्वा 'कोऽयम् ?' इति मनसि विचारयन् स्थित: ।

ततो द्वितीयदिने स एव एकाकी वस्त्रादिरहित: कौपीनमात्रशेष: (च) सन् समागत्य देवालयस्य रङ्गमण्डपे पपात । राजा तं दृष्ट्वा भणति,—"भो: सदाशय ! पूर्वेद्यु: (छ) त्वम् अलङ्कृतशरीरो राजकुमार इव वयस्यै: संसेव्यमानोऽत्र समागत:, अद्य कथमीदृशीं कष्टां दशां प्राप्तोऽसि ?" तेनोक्तं,—"भो: स्वामिन् ! किमुच्यते ? अहं पूर्वेद्युस्तथैव आसम्, इदानीं दैवयोगात् एवं-जातोऽस्मि । तथा हि,—

ये वर्द्धिता: करिकपोलमदेन भृङ्गा:
प्रोत्फुल्लपङ्कजरज:सुरभीकृताङ्गा: ।

---

( ग ) रङ्गमण्डपे—देवसम्मुखवर्त्तिनि नाट्यादिकरणस्थाने, "नाटमन्दिरे" इति वङ्गभाषा ।

( घ ) दुकूलवस्त्रधारी—क्षौमवस्त्रपरिधायी, सुचिक्कणवस्त्रपरिहितो वा ।

( ङ ) नानेति ।—नानाविधा: बहुप्रकारा., कामकथा. स्मरविषयकालापा:, तासा प्रस्तावेन प्रसङ्गेन, य· विनोद: चित्तरञ्जनं, तदादिक तत्प्रभृतिकम् ।

( च ) कौपीनेति ।—कौपीनमात्रं जीर्णवस्त्रखण्डमात्र, शेष: यस्य तथाविध: ।

( छ ) पूर्वेद्यु:,—पूर्वस्मिन् दिवसे ।

दैवस्य अचिन्त्यशक्तिकत्वात् प्राणिना सम्पदि विपदि वा न किञ्चित् स्वातन्त्र्यमस्ति, भाग्यात् सर्वमेव भवितुमर्हति इति वक्तुमाह, ये इति ।—ये भृङ्गा: भ्रमरा., करिणां गजाना, कपोलमदेन गण्डस्रुतेन मदजलेन, वर्द्धिता: वृद्धिं प्राप्ता., एवञ्च प्रोत्फुल्लना

ते साम्प्रतं प्रतिदिनं क्षपयन्ति कालं
निम्बेषु चार्ककुसुमेषु च दैवयोगात्॥ २६४॥

तथा च,—

सरससहकारपालीपरिमलकेलीपरायणो मधुपः।
अधुना हतविधिवशादर्कवने शरभसङ्कुले भ्रमति॥ २६५॥

तथा च,—

ये वर्द्धिताः कनकपङ्कजरेणुमध्ये
मन्दाकिनीविमलनीरतरङ्गभङ्गे।
ते साम्प्रतं विधिवशात् कलहंसपोताः
शैवालजालजटिलं जलमाश्रयन्ति॥ २६६॥

---

प्रस्फुटितानां पङ्कजानां पद्मानां, रजोभिः सुरभीकृतानि सुगन्धीभूतानि, अङ्गानि येषां ते तादृशाः आसन्, ते तादृशाः भृङ्गाः, साम्प्रतम् इदानीं, प्रतिदिनं प्रत्यहं, दैवयोगात् विधिवशात्, निम्बेषु निम्बपुष्पेषु, तथाऽर्ककुसुमेषु च, कालं क्षपयन्ति यापयन्ति। भाग्यात् कदाचित् विपुलसुखसम्भोगसंवर्द्धिता अपि दुर्भाग्यस्यालङ्घनीयप्रभाववशेन सहसा दुःखदुस्तरपङ्के निमज्जन्तीत्यहो। दुर्विभाव्यप्रभावा नियतिरिति भावः। वसन्ततिलकं वृत्तम्॥ २६४॥

अमुमेवार्थं प्रकारान्तरेणाह, सरसेति।—सरसा मधुमयी, या सहकारपाली आम्रमञ्जरीसमूहः, तस्याः परिमले सुगन्धे, (यद्यपि "विमर्द्दोत्थे परिमलः" इत्यमरोक्तः, तथाऽप्यत्र लक्षणया परिमलशब्दः सामान्यतः सौगन्ध्यमात्रे प्रयुक्तः) केलीपरायणः क्रीडासक्तः, मधुपः भ्रमरः, अधुना इदानीं हतविधिवशात् दुर्दैववशात्, शरभसङ्कुले पतङ्गव्याप्ते, अर्कवने भ्रमति पर्य्यटति। आर्य्यावृत्तम्॥ २६५॥

प्रकारान्तरं दर्शयति, ये इति।—मन्दाकिन्याः स्वर्गङ्गायाः, विमलस्य निर्म्मलस्य, नीरस्य जलस्य, तरङ्गभङ्गे स्रोतसीत्यर्थः, कनकपङ्कजानां स्वर्णपद्मानां, रेणुमध्ये परागाभ्यन्तरे, ये कलहंसपोताः राजहंसशावकाः, वर्द्धिताः पूर्वं वृद्धिं प्राप्ताः, साम्प्रतम् इदानीं, ते कलहंसपोताः, विधिवशात् दुर्द्दैवयोगात्, शैवालजालैः जलनीलीसमूहैः, जटिलं व्याप्तं, जलम् आश्रयन्ति शरणं लभन्ते। वसन्ततिलकं वृत्तम्॥ २६६॥

अपि च,—

वातान्दोलितपङ्कजच्युतरजःपुञ्जाङ्गरागोज्ज्वलो
य: शृण्वन् कलकूजितं मधुलिहां सञ्जातहर्ष: पुरा।
कान्ताचञ्चुपुटाञ्चलस्थितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं सम्प्रति हंसको विधिवशात् शम्बूकमन्विष्यति ॥२६७॥

अन्यच्च,—कर्म्मणा नियमितो (ज) जन: किं कष्टं न प्राप्नोति?
तथा चोक्तम्,—

दैवे समर्प्य चिरसञ्चितकर्म्मजालं
सुस्थाः सुखं वसत किं परयाचनाभिः?।
मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य
ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ २६८ ॥

---

प्रकारान्तरेणाह, वातेति।—पुरा पूर्वं, य: हंस:, मधुलिहां भ्रमराणां, कलकूजितं मधुरध्वनिं, शृण्वन् आकर्णयन्, सञ्जात: सम्भूत:, हर्ष: प्रमोद: यस्य तादृश:, एवञ्च य: वातेन वायुना, आन्दोलितानां सञ्चालितानां, पङ्कजानां पद्मानां, च्युत: गलित:, य: रज:पुञ्ज: परागसमूह:, तेन य: अङ्गराग: शरीरानुरञ्जनं, तेन उज्ज्वल: दीप्तिशाली, तथा यश्च कान्ताया: निजस्त्रिया हंस्या:, चञ्चुपुटाञ्चले चोटिपुटाग्रे, स्थितस्य बिसग्रासस्य मृणालकवलस्य, ग्रहे ग्रहणेऽपि, अक्षम:, सौख्यसमृद्धिसमये आलस्यादिति भाव:, आसीदिति शेष: सोऽयं हंसक:, विधिवशात् दुर्दैववशात्, सम्प्रति इदानीं, शम्बूकं क्षुद्रजलशुक्तिं, ("घोङ्गा" इति हिन्दी, "गुग्‌ली" इति वङ्गभाषा) जलजीवविशेषमिति यावत्, अन्विष्यति मृगयते। दुर्दैवार्त्तानाम् आभिजात्यनियमरक्षणे असामर्थ्यमेवेति भाव:। शार्दूलविक्रीडितं वृत्तम् ॥ २६७ ॥

(ज) नियमित:,—संयमित:, आबद्ध इति यावत्।

दैवतन्त्रसुखदु:खयो: अवश्यम्भावित्वेन तयोर्लाभप्रतीकारार्थं महानायास: न कर्त्तव्य: इति प्रमाणयितुं श्लोकमाह दैवे इति।—दैवे पूर्वार्ज्जितकर्म्माधिष्ठातृदेवे, चिरसञ्चितकर्म्मजालं बहुकालार्ज्जितक्रियासमूहं, समर्प्य आधाय, सुस्था: सुखासीना:, निश्चिन्ता: सन्त: इति यावत्, यूयमित्यध्याहार्य्यं सुखं सानन्दं, वसत तिष्ठत, परयाचनाभि: किम्? अन्यप्रार्थनाभि: किं प्रयोजनम्? न किमपीत्यर्थ:। तदेव दृष्टान्तेन समर्थयति मेरुमिति।—तथाहि मेरुं स्वर्णगिरिं, प्रदक्षिणयत: सततं पर्य्यटतोऽपि,

अपि च,—

ब्रह्मा येन कुलालवत् नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटको भिक्षाऽटनं कारितः
सूर्य्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्म्मणे ॥ २६९ ॥

अथवा,—

यद्धाता निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत् प्राप्नोति मरुस्थलेऽपि नियतं मेरौ ततो नाधिकम्।

तस्य तथाविधोद्दामाध्यवसायिनः, दिवाकरस्य सूर्य्यदेवस्य, अतितिग्मप्रभाववत इति भावः, ते प्राक्कल्पनियोजिताः, सप्त तुरगाः सप्तसङ्ख्यकाश्वाः, न कदाचिदपि कस्मिन्नपि समये अद्यावधि अष्टसङ्ख्यका न जाता इत्यर्थः। दैवतन्त्रे कार्य्ये देवानामप्यध्यवसायाः अकिञ्चित्कराः, किमु मानवानाम्? इति निष्कर्षः। वसन्ततिलकं वृत्तम् ॥ २६८ ॥

कर्म्मवश एव जीवः सुखदुःखे भुङ्क्ते इति दर्शयितुं तत्समर्थकं प्रमाणमुदाहरति, ब्रह्मेति।—ब्रह्मा विधाता, येन कर्म्मणा, कुलालवत् कुम्भकार इव, ब्रह्माण्डभाण्डोदरे ब्रह्माण्डरूपपात्रविशेषमध्ये, नियमितः सृष्टिकार्य्यसम्पादनार्थं बद्धः, नियोजित इति यावत्, विष्णुः नारायणश्च, येन कर्म्मणा, महासङ्कटे महाक्लेशजनके, दशावतारगहने मीनकूर्म्मादिदशावतारग्रहणरूपकानने, क्षिप्तः निपातितः; रुद्रः शिवश्च, येन कर्म्मणा, कपालं नरमस्तकास्थि, पाणिपुटे हस्ताञ्जलौ यस्य तादृशः, अर्थात् भिक्षापात्रहस्तः सन्, भिक्षाऽटनं भिक्षार्थमितस्ततो भ्रमणं, कारितः, सूर्य्यश्च, येन कर्म्मणेति शेषः, नित्यमेव प्रतिदिनमेव, गगने आकाशे, भ्राम्यति चरति, तस्मै एवम्भूतशक्तिसम्पन्नाय, कर्म्मणे अदृष्टाय, नमः, कर्म्मैव सर्व्वकार्य्यसम्पादकमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ २६९ ॥

कर्म्मतन्त्रविधिलिपेरमार्ज्जनीयतां दर्शयितुं श्लोकमाह, यद्धातेति।—धाता कर्म्मनियन्ता यत् किञ्चित्, स्तोकं स्वल्पं, महत् प्रचुरं वा धनम् अर्थसम्पद्रूपं यस्य जनस्येत्यध्याहारः, निजभालपट्टलिखितं स्वललाटफलकविन्यस्तं तत् तदेव, मरुस्थले निर्जलदेशे, असुलभधनादिप्रदेशेऽपि इति यावत्, नियतं निश्चितं, प्राप्नोति लभते, स मानव इति शेषः, अदृष्टलिखितं निर्जनप्रदेशेऽपि चेष्टां विनैव उपार्ज्जयितुमर्हति

तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटी गृह्णाति तुल्यं जलम् ॥ २७०॥

राज्ञा भणितं,—"को भवान् ?" तेनोक्तम्,—"अहं देवदत्तो नाम द्यूतकारः" (झ)। राज्ञोक्तं,—"द्यूतक्रीड़ां जानासि त्वम् ?" तेनोक्तं,—"द्यूतविद्याविषये अहं विचक्षणः। अन्यच्च, सारीक्रीड़ां चतुरङ्गक्रीड़ाञ्च (ञ) जानामि, परं सर्व्वमेव तदनर्थकं, दैवमेव बलवदिति। उक्तञ्च,—

शशि-दिवाकरयोर्ग्रहपीड़नं
गज-भुजङ्गमयोरपि बन्धनम्।
मतिमताञ्च निरीक्ष्य दरिद्रतां
विधिरहो ! बलवानिति मे मतिः" ॥ २७१ ॥

---

इति भावः, मेरौ सुमेरुपर्व्वते, स्वर्णभूमावपि इति भावः, ततः तस्मात्, अधिकम् अतिरिक्तं, न प्राप्नोति इति सारार्थः, [विधावननुकूले सत्साहाय्येन रत्नभूमावपि नाधिकं लभ्यते इति व्यज्यते], तत् तस्मात् हेतोः, धीरः भव धैर्य्यान्वितो भव, वित्तवत्सु धनशालिषु, कृपणां दीनां, वृत्तिं व्यवहारं, याचनरूपामित्यर्थः, वृथा मा कृथाः न कुरुष्व, धनार्थं वृथा नेतस्ततः पर्य्यटेति यावत्। एतदेव दृष्टान्तेन समर्थयति,—कूपे इति।—कूपे खातभूगर्त्ते अतिक्षुद्रे इत्यर्थः, पयोनिधौ महार्णवेऽपि, घटी कुम्भः, तुल्यं समं, न तु न्यूनमधिकं वेत्यर्थः, जलं नीरं, गृह्णाति धारयति, इति पश्य अवलोकय, त्वमिति शेषः। "ललाटरेखा न मृषा कदाचित्" इति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ २७० ॥

(झ) द्यूतकारः,—द्यूतं "जुया" इति ख्याता पाशकादिक्रीडां करोति यः सः द्यूतकारः।

(ञ) सारीक्रीडा—पाशकक्रीडाम्। चतुरङ्गक्रीडां—रक्तहरितपीतश्यामलरूपाणि चत्वारि बलस्वरूपाणि क्रीडासाधनानि अङ्गानि यत्र क्रीडायां तादृशीं क्रीडामित्यर्थः, "चतूराजी" इति ख्याताम। एतत्क्रीडाविधिस्तु तिथितत्त्वे कोजागरकृत्ये द्रष्टव्यः।

दैवमेव सर्वत्र बलवत्, न कोऽपि कथमपि दैवमुल्लङ्घितुं समर्थः इति प्रतिपादयितुं दृष्टान्तश्लोकमाह, शशीति।—शशिदिवाकरयोः चन्द्रसूर्य्ययोः, ग्रहपीडनं राहुग्रहकर्त्तृकग्रासं, गजस्य करिणः, भुजङ्गमस्य सर्पस्य, सामर्थ्येन विक्रमेण च अतिभीषणयोरपि

राज्ञोक्तं,—"भो देवदत्त! त्वमेवम् अतिप्राज्ञोऽपि कथम् पापजनके द्यूतकर्म्मणि रतोऽसि?" तेनोक्तं,—"प्राज्ञोऽपि पुरुषः कर्म्मणा (ट) प्रेर्य्यमाणः किं किं न करोति?"

राज्ञा भणितं,—"भो देवदत्त। द्यूतं महदापन्मूलम्; सर्वेषां व्यसनानाम् (ठ) आश्रयो द्यूतमेव।

उक्तञ्च,—

भवनमिदमकीर्त्तेश्चौरवेश्याङ्गनानां
व्यसनपतिरुदारः सन्निधिः पापभाजाम्।
विषमनरकमार्गः प्रज्ञया त्वत्र को हि
विमलविशदबुद्धिर्द्यूतमङ्गीकरोति?॥ २७२॥

तस्मात् कारणात् महापापानि सप्त व्यसनानि (ड) त्याज्यानि। उक्तञ्च,—

---

करिविषधरयोरित्यर्थः, बन्धनं संयमनं, मतिमतः बुद्धिशालिना जनाना, दरिद्रतां दारिद्र्यञ्च. निरीक्ष्य दृष्ट्वा, इति एवम्प्रकारा, मे मम, मति बुद्धि, भवति इति शेषः, यत् विधि' दैवमेव, अहो। आश्चर्य्यं, बलवान् सर्वापेक्षया बलशाली। द्रुतविलम्बितं वृत्तम्॥ २७१॥

(ट) कर्म्मणा, प्राक्तनेन इति शेष.।

(ठ) व्यसनाना—सुरावेश्यादीना विपत्कारणानाम्।

द्यूतस्य आपन्मूलता व्यसनश्रेष्टताञ्च प्रतिपादयति, भवनमिति।—इदं द्यूतम्, अकीर्त्तेः अयशसः, चौरवेश्याङ्गनाना तस्कराणा वारवनिताना, "च" इत्यध्याहारः, भवनम् आश्रयभूतम्, उदारः महान्, व्यसनपति. सर्वेषां मृगयादीना व्यसनानां श्रेष्ठमित्यर्थं, पापभाजां पापिष्ठजनाना, सन्निधिः समागमकारणञ्च, विषमनरकमार्गः दुर्गमनिरय-मार्गसदृशः, अत्र जगति, विमला विशदा च बुद्धिः यस्य तादृशः निर्म्मलबुद्धिसम्पन्न., को हि को वा जनः, प्रज्ञया बुद्धिपूर्वकमित्यर्थः द्यूत पूर्वोक्तप्रकारकम् इत्यर्थः, अङ्गीकरोति स्वीकरोति? न कोऽपीत्यर्थः। मालिनी वृत्तम्॥ २७२॥

(ड) महेति।—महत् पापम् अनर्थं येषु तानि महापापानि प्रभूतानिष्ट-कारणानि, सप्त व्यसनानि—वक्ष्यमाणानि द्यूत [illegible]नि विपत्कारणानि।

द्यूत-मांस-सुरा-वेश्याऽऽखेट-चौर्य्य-पराङ्गनाः ।
महापापानि सप्तैव व्यसनानि त्यजेत् बुधः ॥ २७३ ॥

अन्यच्च,—

यस्त्वेकव्यसनासक्तो निर्गमे च न पश्यति ।
किं पुनः सप्तभिर्युक्तो व्यसनैः सङ्कुलः पुमान् ? ॥ २७४ ॥

तथा हि,—

द्यूतात् धर्म्मसुतः पलादिह वको मद्यात् यदोर्नन्दना-
श्चौरः कामवशात् मृगान्तकरणात् स ब्रह्मदत्तो नृपः ।

---

उक्तानि सप्त व्यसनान्याह, द्यूतेति ।—द्यूत पाशकक्रीडा, मासं मासभोजनं, सुरा मद्यपानं, वेश्या वारवनितासङ्गः, आखेटः मृगया चौर्य्यं तस्करत्व, पराङ्गना परस्त्रीकामना च, एतानि महापापानि महापापजनकानि, सप्त व्यसनानि विपज्जनककार्य्याणि, बुधः प्राज्ञो जनः, त्यजेत् । पथ्यावक्त्रं वृत्तम् ॥ २७३ ॥

एकस्मिन् व्यसनेऽप्यासक्तिः न शुभाय, अतः सर्व्वथैव तत् त्याज्यम् इति अभिप्रेत्य श्लोकमाह, य इति ।—यस्तु जन, एकव्यसनासक्त व्यसनानामेकस्मिन्नप्युपरक्त., स निर्गमे व्यसनात् उद्धारविषये, न पश्यति न द्रष्टुं शक्नोति, उपायमिति शेषः, सप्तभिः सप्तप्रकारैः, व्यसनैः युक्त. उपेतः, अत एव सङ्कुलः विपन्न., पुमान् पुरुषः, उपायं न पश्यतीति यत् तत् किं पुनः वक्तव्यम् ? न किमपि इति । व्यसनैः सर्व्वविधविपत्तिमूलैः सङ्कुलः जन यदात्महितं न पश्यति, तन्न चित्रम् इति भावः । पथ्यावक्त्रं वृत्तम् ॥ २७४ ॥

द्यूतस्य अनिष्टकारितां द्रढयितुं पुनरपि श्लोकमुदाहरति; द्यूतादिति ।—इह जगति, धर्म्मसुतः युधिष्ठिरः, द्यूतात् द्यूतक्रीडावशात्, वकः वकनामकः कश्चित् राक्षसः, पलात् मासलोभात्, [ पुरा वकनामकः कश्चित् राक्षसः एकचक्राख्यात् कुतश्चित् नगरात् प्रत्यहमेकं पुरुषमानीय भक्षयति स्म; युधिष्ठिरादयः कदाचित् तस्मिन्नेव नगरे कस्यचित् गृहिणो गृहे ऊषुः, अथ युधिष्ठिरादिषु भिक्षार्थं वहिर्गतेषु भीमेन सह कुन्ती तत्र स्थिता । तस्मिन्नेव दिने तस्यैव गृहिणो वारः समायात इति तं चिन्ताकुलं विलपन्तञ्च दृष्ट्वा, कुन्ती तस्य प्रतिनिधिरूपेण भीमं प्रेरयामास, भीमोऽपि तत्र गत्वा राक्षसं निहत्य अक्षतः प्रतिनिवृत्तः इति महाभारते आदिपर्व्वणि वकवधोपाख्याने सुव्यक्तम् ] यदोर्नन्दनाः यादवगणाः, मद्यात् मद्यपानात्, [ प्रभासतीर्थे मद्यपानात्

चोरत्वाच्छिवभूतिरन्यवनितासङ्गात् दशास्यो हठा-
देकैकव्यसनाहता इति नराः सर्वैर्न को नश्यति ? ॥ २७५ ॥

अतस्त्वया एतानि परित्यज्यानि"। द्यूतकारिणोक्तं,— भोः स्वामिन्! मम तदेव जीवनं, (ढ) कथं परित्यज्यते ? यदि त्वं ममोपरि कृपां विधाय कमपि धनार्ज्जनोपायं कथयिष्यसि, तर्हि अहं द्यूतं त्यक्ष्यामि"।

अस्मिन्नवसरे विदेशवासिनौ द्वौ ब्राह्मणावागत्य देवालयस्य एकदेशे समुपविष्टौ परस्परं मन्त्रयतः (ण)। तत्र एकेनोक्तं,—

---

परस्पर विवदमानानां यदुवंशीयाना तृणयुद्धेनैव अवसानम् अभूत् इति पुराण-वार्त्ता] चौरः चौरपञ्चाशिकाकारः चोरकविः, कामवशात् कामपारतन्त्र्यात्, [श्रूयते हि चौरनामा कश्चित् सुकविः निरुपमरूपयौवनमालोक्य कस्याश्चित् राजनन्दिन्या कामपरवशः समासक्तः आसीत्। अथ विदितसर्वरहस्येन राज्ञा तमानीय वधोद्यमे कृते कविरसौ कयाचिदतिमधुरया द्व्यर्थकवितया राजानं सन्तोष्य तस्मिन् दिने मुक्तिमलभत। एवं प्रतिदिनं तेन वधार्थमाज्ञप्तः स एकैकया सरसकवितया तं प्रसाद्य चिरान्मुक्त इति किंवदन्ती] सः प्रसिद्धः, ब्रह्मदत्तो नृपः तन्नामकः कश्चित् राजा, मृगान्तकरणात् मृगयाव्यापारात्, [पुरा किल शुकदेवस्य कृत्वीसमाख्यायां कन्यायाम् अणुहेनोत्पादित ब्रह्मदत्तो नाम कश्चित् नृपतिः सभार्य्यः कदाचित् मृगयार्थं वनमगात्, तत्र च पिपीलिकारुतमाकर्ण्य भार्य्यया तत्कारणं पृष्टः ब्रह्मदत्तः तामुपजहास, ततः सा तेन क्रुद्धा स्वामिनं शशाप, तयाऽभिशप्तश्चासौ तपसा नारायणं प्रसाद्य शापान्मुमोचेति पौराणिकी कथा हरिवंशे चतुर्विंशाध्याये विद्यते] शिवभूतिः तन्नामा कश्चित् जनः, चौरत्वात् चौर्य्यव्यापारात्, दशास्यः रावणः, अन्यवनितासङ्गात् परनारीकामनावशात्, इति उक्तप्रकारेण, नराः एते पूर्वोक्ताः सर्वं एव जनाः हठात् प्रसह्य, एकैकेन व्यसनेन आहताः अशुभपरिणामं प्राप्ताः आसन्, सर्वैः सकलैः, व्यसनैः को न नश्यति ? अपि तु सर्वं एव नश्यति। एकेन व्यसनेन एतादृशमहाक्लेशदर्शनात् सर्वैः व्यसनैः कीदृशः क्लेशः सम्भवेत् तन्न वक्तुं शक्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ २७५ ॥

(ढ) जीवनं—जीव्यते अनेन इति जीवनं जीवनधारणोपायः, जीविका इत्यर्थः।

(ण) परस्परं—मिथः। मन्त्रयतः,—आलपतः।

"मया सर्वोऽपि पिशाचलिपिकल्पः (त) अवलोकितः। तत्र एवं लिखितमस्ति यत्,—अस्य देवालयस्य ईशानभागे पञ्चधनुः-प्रमाणे दीनारपूरितं (थ) घटत्रयं स्थापितमस्ति, तत्समीपे भैरवस्य प्रतिमा (द) विद्यते, यः कश्चित् भैरवं स्वरक्तेन अभिषेक्ष्यति, तेन तत् ग्राह्यमिति"।

राजा तस्य तद्वचनमाकर्ण्य तत्र गत्वा स्वदेहरक्तेन भैरवं यावत् अभिषेक्तुं प्रवर्त्तते, तावत् प्रसन्नेन भैरवेण भणितं,—"भोः! राजन्! वरं वृणीष्व"। राज्ञोक्तम्,—"अस्मै द्यूतकाराय दीनारपूरितं घटत्रयं देहि"। ततस्तद्वचनात् भैरवेण तद्धनं द्यूतकाराय दत्तम्। तदधिगम्य च द्यूतकारो राजानं स्तुत्वा स्वनगरं गतः; राजाऽपि निजनगरमागतः"।

इमां कथां कथयित्वा पुत्तलिका राजानमभणत्,—"भोः राजन्! त्वयि एवं धैर्यौदार्यपरोपकारादिगुणाः विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णी-मासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे द्यूतकार-संवादो नाम सप्तविंशोपाख्यानम् ] ॥ २७ ॥

(त) पिशाचलिपिकल्पः —तन्त्रसारोक्तप्रकरणविशेषः।

(थ) ईशानभागे—उत्तरपूर्व्वकोणे। पञ्चधनुःप्रमाणे—विंशतिहस्तपरिमिते। दीनारपूरित—स्वर्णमुद्रापूर्णम्।

(द) भैरवस्य—रुद्रावतारस्य। प्रतिमा—विग्रहः।

इति सप्तविंशोपाख्यानम् ॥ २७ ॥

# अथ नरबलिनिवारणं नाम अष्टाविंशोपाख्यानम् ।



पुनरपि राजा यावत् सिंहासने समुपवेष्टुमुपक्रमते, तावदन्या पुत्तलिका सहसा तं निवार्य्य वदति,—"भो राजन्! अस्मिन् सिंहासने औदार्य्यधैर्य्यादिगुणयुक्तो विक्रम एव उपवेष्टुं क्षमः, नान्यः"। तच्छ्रुत्वा भोजेनोक्तं,—"भोः पुत्तलिके! बलवती श्रवणवासना मे जायते, तत् कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्"।

सा कथयति,—"श्रूयतां राजन्! विक्रमादित्यो राजा पृथिव्यां पर्य्यटन् कदाचित् नगरमेकमगमत्। तस्य च नगरस्य समीपे विमलोदका काचित् नदी प्रावहत्। नदीतीरे च नानाविधतरुकुसुमफलोपशोभितम् एकं वनमासीत्। तन्मध्ये अतिमनोहरः कश्चित् देवालयः अवर्त्तत। राजा तस्याः सरितो विमले जले स्नात्वा, देवालयं प्रविश्य तत्रत्यं देवं नमस्कृत्य च तत्र उपविष्टः।

अत्रान्तरे (ध) तत्र चत्वारो वैदेशिकाः (न) समागत्य राज्ञः समीपे उपविष्टाः। ततो राजा तान् अप्राक्षीत्,—"भोः भद्राः! यूयं कुतः समागताः?" तेष्वेकेनोक्तं,—"वयम् अपूर्व्वदेशात् आगताः"। राज्ञोक्तं,—"तत्र देशे भवद्भिः किं किम् अपूर्व्वं दृष्टम्?" तेनोक्तं,—"तत्र देशे वेतालपुरी नाम काचित् पुरी वर्त्तते, तत्र

---

(ध) अत्रान्तरे—अस्मिन्नवसरे इतो मध्ये इत्यर्थः।

(न) वैदेशिकाः,—भिन्नदेशवासिन इत्यर्थः, विदेशे जाताः ["तत्र जातः" (४।३।२५ पा०) इत्यर्थे "अध्यात्मादेः ठञ् इष्यते" इति वार्त्तिकेन ठञ्प्रत्ययः]।

शोणितप्रिया काचित् देवताऽस्ति। तत्रत्यो महाजनः (प) राजा च प्रतिवत्सरं स्वमनोरथपूरणार्थम् अशुभनिवृत्त्यर्थञ्च (फ) तस्यै देवतायै कञ्चित् पुरुषोपहारं (ब) प्रयच्छति। तस्मिन् दिने यदि कोऽपि वैदेशिकः समायाति, तर्हि तमेव देवतायै पशुवत् समर्पयति (भ)। वयमपि तस्मिन्नेव दिवसे मार्गवशात् (म) तन्नगरं गताः। ततस्तत्रत्या अस्मान् समुद्धर्त्तुं (य) समागताः। तत् श्रुत्वा वयं प्राणभयेन पलाय्य (र) अत्र समागताः। एतन्महदाश्चर्यम् अस्माभिः दृष्टम्"।

तत् श्रुत्वा राजा विक्रमः कौतूहलपरवशस्तत्र गत्वा भयङ्कराञ्च तां देवतां विलोक्य प्रणम्य च अस्तोषीत्,—

"ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी।
वाराही नरसिंहशक्तिरमला शाक्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः" ॥२७६॥

(प) महाजनः,—प्रधानपुरुषः।

(फ) अशुभनिवृत्त्यर्थम्—अमङ्गलशान्त्यर्थम्।

(ब) पुरुषोपहारं—नरबलिम्।

(भ) पशुवत्—छागादिवत्। समर्पयति—बलिनिमित्तं ददाति।

(म) मार्गवशात्—गमनपथानुरोधादित्यर्थः।

(य) समुद्धर्त्तुं—समुच्छेत्तुं, नाशयितुमिति यावत्; बलिनिमित्तं संयमितुमिति वा।

(र) पलाय्य—पलायनं कृत्वा, [परापूर्व्वकायधातोर्ल्यप्]।

स्तवमाह, ब्रह्माणीति।—ब्रह्माणी ब्रह्मणः शक्तिः, कमलवत् पद्मवत्, इन्दुवत् चन्द्रवच्च, सौम्यं सुन्दरं, वदनं मुखं यस्याः सा तादृशी, माहेश्वरी महेश्वरशक्तिः, कौमारी कुमारस्य कार्त्तिकेयस्य शक्तिः, लीलया क्रीडाच्छलेन, हेलया इत्यर्थः रिपूणां शत्रूणां, दर्पस्य गर्वस्य, नाशनं करोति या सा तादृशी, चक्रायुधा चक्रास्त्रधारिणी च, वैष्णवी विष्णुशक्तिः, वाराही वराहमूर्त्तिधरस्य विष्णोः शक्तिः, अमला उज्ज्वला,

एवं स्तुतिं विधाय रङ्गमण्डपे ( ल ) उपविष्टः।

तस्मिन्नवसरे कश्चिद्दीनवदनः ( व ) महाजनैः सह वाद्यं पुरस्कृत्य समागमत्। राजाऽपि तं दृष्ट्वा एवं मनसि विचारयति स्म,—"अयमेव देवतार्वालनिमित्तम् एभिः महाजनैः समानीतः, ततः अत्यन्तक्लान्तवदनः (श) इव दृश्यते। तत् अस्मिन्नेव अवसरे मम शरीरं दत्त्वा एनं मोचयिष्यामि। इदं शरीरं शतवर्षाणि स्थित्वा सर्वथा नाशमेव यास्यति, अतः शरीरिणां स्वदेहव्ययेन (ष) अपि धर्म्मः कीर्त्तिश्चोपार्ज्जनीया। उक्तञ्च,—

> चला लक्ष्मीश्चलाः प्राणाश्चलो देहोऽथ यौवनम्।
> चलाचलश्च संसारः कीर्त्तिधर्म्मश्च निश्चलः॥ २७७॥

---

तेजोमयीत्यर्थः, नरसिंहस्य नृसिंहरूपिविष्णोः शक्तिः नारसिंहीत्यर्थः, वज्रायुधा वज्रास्त्रधारिणी, शाक्री शक्रस्य इन्द्रस्य शक्तिः, गणनाथेन प्रमथपतिना, रुद्रेण शिवेन, सहिता सङ्गता चामुण्डा रौद्री शक्तिश्च, एता अष्टौ मातरः, मां रक्षन्तु पालयन्तु। शार्दूलविक्रीडितं वृत्तम्॥ २७६॥

( ल ) रङ्गमण्डपे—रङ्गार्थं नृत्यगीताद्यर्थं, मण्डपः शाला तस्मिन्, नाट्यमन्दिरे इत्यर्थः।

( व ) दीनवदनः—विषण्णाननः।

( श ) अत्यन्तेति।—अत्यन्तक्लान्तस्य अतिश्रमार्त्तस्य, वदनमिव वदनं यस्य सः तथोक्तः अतिविवर्णमुख इत्यर्थः।

( ष ) स्वदेहव्ययेन—आत्मशरीरोत्सर्गेण।

देहस्य नश्वरत्वे तथा कीर्त्तिधर्म्मयोः कल्पान्तस्थायित्वे च प्रमाणमाह, चलेति।—लक्ष्मीः सम्पत्, चला चञ्चला, न चिरस्थायिनीत्यर्थः, प्राणाः जीवनमपि, चलाः क्षणभङ्गुराः, देहः शरीरं, चलः नश्वरः, अथ यौवनं तारुण्यम् [ अपि अत्राध्याहार्य्यं ] चलं, संसारः संसारस्थः सर्वः एव, चलाचलः अतीव चञ्चल इत्यर्थः, [ चलधातोरच्प्रत्यये "चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्य" ( वा० ) इति सिद्धम् ] कीर्त्तिः यशः, धर्म्मश्च निश्चलः। पथ्यावक्त्रं वृत्तम्॥ २७७॥

अन्यच्च,—

अनित्यानि शरीराणि वैभवं नैव शाश्वतम्।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसङ्ग्रहः॥ २७८॥

तथा च,—

अर्थाः पादरजोपमाः गिरिनदीवेगोपमं यौवनं
मानुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम्।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते"॥२७९॥

एवं विचार्य्य राजा तान् महाजनानुवाच,—"भो महाजनाः! अयं दीनवदनः कुत्र नीयते?" तैरुक्तम्,—"एनं देवतायै बलि-

---

देहादीनामनित्यत्वात् सदैव तैः धर्मः अर्ज्जनीय, इत्याह, अनित्यानीति।—शरीराणि देहाः, अनित्यानि नश्वराणि, वैभवं धनादिसम्पत्, नैव शाश्वत न चिरस्थायि, मृत्युः मरणं, काल इत्यर्थः, नित्य सदैव, सन्निहित. निकटवर्त्ती, अत इत्यध्याहार., धर्मसङ्ग्रहः धर्म्मार्जनं, कर्त्तव्य. विधेय., सुधिया इति शेषः। पथ्यावक्रं वृत्तम्॥ २७८॥

चरमे धर्मसङ्ग्रह करिष्यामि. अधुना तु विषयसुखमनुभवामि इत्याकारा बुद्धिः पश्चात्तापाय एव इति वक्तुम् अर्थादीना तुच्छत्वप्रदर्शनमुखेनाह, अर्था इति।—अर्थाः धनानि, पादरजोपमाः पदधूलिसदृशाः, तद्वदतितुच्छत्वेन न आदरणीया इत्यर्थः; [विसर्गलोपेऽपि सन्धिरत्र विवक्षितः। अकारान्त "रज" शब्दोऽप्यस्तीति ज्ञेयम्] यौवन तरुणत्वं, गिरिनद्याः पार्वत्यसरित., वेगोपम प्रवाहतुल्यं, गिरिनदीस्रोतोवत् अतिवेगवाहीत्यर्थः; मानुष्यं मनुष्यता, मानवजन्म इति यावत्. इतरजन्मदुर्लभज्ञानधर्म्माद्याधारभूतम् इति तात्पर्य्यं, जलविन्दुवत् वारिविन्दुवत्, लोलचपल लक्षणया अतिशयचञ्चल, क्षणस्थायीत्यर्थः, जीवित जीवनञ्च, फेनोपमं फेनवदस्थिरम्, अतः इत्यध्याहार्य्य, निश्चलमतिः स्थिरबुद्धिः सन्, यो जनः, स्वर्गार्गलस्य स्वर्गद्वाररोधकस्य अर्गलस्य, उद्घाटनम् उद्घाटनहेतभूत धर्म्मं. न करोति न सञ्चिनोति, स जनः, जरापरिणत. जराग्रस्तः सन्, पश्चात्तापहत अनुतापक्लिष्टः, शोकाग्निना शोकरूपानलेन. दह्यते स्वयमेव दग्धो भवति, एवमचिरस्थायिधनादिषु यत्नं विहाय सम्यक् चिरस्थायिनि धर्मे मति. कर्त्तव्या इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २७९॥

निमित्तं दास्यामः"। राज्ञोक्तं,—"कस्मात् कारणात्?" तैरुक्तं,—"देवता अनेन पुरुषोपहारेण तुष्टा सती अस्माकं मनोरथं पूरयिष्यति"। राज्ञोक्तं,—"भो महाजनाः! अयमत्यन्ताल्पतनुः, (स) परं भीतश्च, अस्य शरीरोपहारेण देवतायाः का तृप्तिर्भविष्यति? तस्मादमुं मुञ्चत। अहमेव तदर्थं मम शरीरं दास्यामि। अहं पुष्टाङ्गः (ह) अस्मि, मम मांसोपहारेण देवतायाः महती तृप्तिर्भविष्यति। अतो मां मारयत" इति भणन् तं मोचयित्वा राजा स्वयमेव देवतायाः पुरतो गत्वा खड्गं यावत् निजकण्ठे पातयति, तावद्देवतया खड्गं धृत्वा भणितं,—"भो महासत्त्व! तव धैर्य्येण परोपकारकरणेन च अहमतीव सन्तुष्टाऽस्मि, वरं वृणीष्व"। राज्ञोक्तं,—"भो देवि! यदि मयि प्रसन्नाऽसि, तर्हि अद्य प्रभृति पुरुषमांसोपहारं परित्यज"। तच्छ्रुत्वा देवतया "तथाऽस्तु" इति भणितम्। एतत् सर्वमालोक्य ते महाजना राजानं वदन्ति स्म,—"भो राजन्! त्वं स्वसुखानभिलाषी (क) सन् द्रुम (ख) इव परार्थमेव नियतं खेदं वहसि (ग)। तथा हि,—

> स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
> प्रतिदिनमथवा ते सृष्टिरेवंविधैव।

---

(स) अत्यन्ताल्पतनुः,—निरतिशयकृशदेहः।

(ह) पुष्टाङ्गः,—स्थूलावयवः।

(क) स्वसुखेति।—स्वस्य आत्मनः, सुखे सुखभोगे, अनभिलाषी इच्छाशून्यः, आत्मसुखेच्छां विहाय इत्यर्थः।

(ख) द्रुमः,—वृक्षः।

(ग) खेदं—परदुःखेन शोकं, दुःखमित्यर्थः। वहसि—प्राप्नोषि।

साधवः परहितव्रताः इत्यत्र वृक्षसादृश्येन निःस्वार्थपरोपकारप्रवृत्तानां स्वभाववर्णनमुखेन राजानं प्रशंसन्नाह, स्वसुखेति।—प्रतिदिनं प्रत्यहं निरन्तरमित्यर्थः, स्वस्य आत्मनः, सुखेषु निरभिलाषः निष्कामः सन्, लोकानां जनानां, हेतोः निमित्तं, जनानां

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ २८० ॥

नास्माभिः कदाऽपि क्वचिदपि भवादृशः परार्थपरो दृष्टः, तदनेन व्यवहारेण अतीव प्रीता वयं भवतः कल्याणमाशास्महे" इत्युक्त्वा सर्वे ते निष्क्रान्ताः। अथ राजाऽपि तेषाम् अनुज्ञां गृहीत्वा निजनगरमगमत्"।

इति कथां कथयित्वा पुत्तलिका भोजम् अवदत्,—"भोः राजन्। त्वयि एवं धैर्य्यौदार्य्यपरोपकारादिगुणा विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीं स्थितः।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे नरबलिनिवारणं नाम अष्टाविंशोपाख्यानम् ] ॥ २८ ॥

---

सुखसम्पद्विधानार्थमित्यर्थः. खिद्यसे परिश्राम्यसि। खिद्यसे इति यदुक्तं, तत्तु अन्येषा-मपि सम्भवति, प्रतिनियतपरोपकारप्रवृत्तानां भवादृशां न क्लेशदायकम् इति विभाव्य पूर्वोक्तमाक्षिपति, अथवेति।—अथवा पूर्वाऽऽक्षेपे, ते तव, सृष्टिः निर्म्माणम् एवंविधैव ईदृश्येव, जगतां कल्याणविधानाय विधात्रा त्वं परोपकारस्वभाव एव कृत इति भावः, हि तथाहि, पादपः पादैः अङ्घ्रिभिः, मूलैरित्यर्थः, पिबति पानं करोति, आकर्षतीति यावत्, भूमिरसमिति शेषः, यद्वा—पादान् चरणान्, पाति रक्षति इति पादपः तरुः रक्षणस्वभाव इत्यर्थः, (अत एव न वृक्षादिपदमुपात्तम्) मूर्ध्ना शिरोभागेण, (न तु अधोदेशेन) तीव्रं दुःसहम्, उष्णम् उत्तापम्, अनुभवति स्वयं सहते, किन्तु छायया अनातपदानेन, संश्रितानां स्वतलस्थितानां, शरणागतानामिति यावत्, परि-तापम् आतपखेदं, शमयति नाशयति। मालिनी वृत्तम् ॥ २८० ॥

इति अष्टाविंशोपाख्यानम् ॥ २८ ॥

## अथ दारिद्र्यमोचनं नाम एकोन-त्रिंशोपाख्यानम् ।

पुनरपि राजा यावत् सिंहासने समुपविशति, तावदन्यया पुत्तलिकयोक्तं,—"भो राजन्! यस्य विक्रमस्येव औदार्य्यादयो गुणा विद्यन्ते, स एवात्र सिंहासने उपवेष्टुं क्षमः"। भोजेनोक्तं,—"पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यगुण-वृत्तान्तम्"।

सा अब्रवीत्,—"श्रूयतां राजन्! एकदा विक्रमार्को राजकुमारैरुपास्यमानः (घ) सभायाम् उपविष्टोऽस्ति, तदा कश्चित् स्तुतिपाठकः समागत्य,—

'यावद्वीचीतरङ्गान् वहति सुरनदी जाह्नवी पुण्यतोया
यावच्चाकाशमार्गे तपति हि भुवनं भास्करो लोकपालः।
यावद्वज्रेन्द्रनील-स्फटिकमणिशिला विद्यते मेरुशृङ्गे
तावत् पुत्रैश्च पौत्रैः स्वजनपरिवृतो भुङ्क्ष्व राज्यं नृपाल!'॥२८१॥

---

(घ) उपास्यमानः,—सेव्यमानः।

आशीःश्लोकमाह यावदिति।—नृपाल! हे राजन्! पुण्यं पवित्रं तोयं जलं यस्याः सा तादृशी, सुरनदी देवसरित्, जाह्नवी गङ्गा, यावत् यत्कालपर्य्यन्तं, वीचीतरङ्गान् प्रवाहान्, वहति अर्थात् यावत् गङ्गाया प्रवाहः स्थास्यति, यावच्च लोकपालः लोकानां पालकः, भास्करः सूर्य्यः, आकाशमार्गे स्थितः सन्, भुवनं त्रिलोकीं, तपति अर्थात् यावत सूर्य्यतापः स्थास्यति, यावत् मेरुशृङ्गे सुमेरुपर्व्वतशिखरे, वज्र हीरकम, इन्द्रनीलमणिः मणिविशेषः, स्फटिकमणिः श्वेतवर्णः मणिविशेषः, तेषां शिला नाना प्रकारसंख्यात्मकप्रस्तरखण्ड इत्यर्थं, विद्यते, तावत् तत्कालपर्य्यन्त, पुत्रैः पौत्रैश्च सह, स्वजनपरिवृतः आत्मजनवेष्टितः सन्, राज्य भुङ्क्ष्व राज्यभोगं कुरु। स्रग्धरा वृत्तम्॥ २८१॥

इत्याशिषमुक्ता राजानं स्तौति,—"भो राजन्।—

यथा सरति जीमूते चातको ग्रीष्मपीड़ितः।
तृषितो याचते तोयं तथाऽहं तव दर्शनात्॥ २८२॥

अहं हि दूरदेशवासी, तव कीर्त्तिं समाकर्ण्य दूरात् आगतोऽस्मि। तव कीर्त्तिः सप्तार्णवमेदिनीमण्डिता (ङ)—

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि राजतादपि चलत्कान्तादृगन्तादपि।
निःशेषञ्च यथा कलङ्करहितात् शीतांशुखण्डादपि
श्वेताभिस्तव कीर्त्तिभिर्धवलिता सप्तार्णवा मेदिनी॥२८३॥

भो राजन्! त्वाम् अर्थिजनकल्पद्रुमम् (च) आगत्य अद्य

---

स्वाभिप्राय प्रकटयति, यथेति।—जीमूते मेघे, सरति उदीयमाने सति, ग्रीष्मेण उत्तापेन, पीडितः क्लिष्टः, चातकः पक्षिविशेषः, तृषितः तृषार्त्तः सन्, यथा तोयं जलं, याचते प्रार्थयते, तथा तद्वत्, अहं तव दर्शनात्, याचे इति शेषः। पथ्यावक्त्रं वृत्तम्॥२८२॥

(ङ) सप्तेति।—सप्त—लवणेक्षुसुरासर्पिर्दधिदुग्धजलरूपाः सप्तसङ्ख्यकाः, अर्णवाः,—सागराः, तैः सहिता मेदिनी सप्तार्णवमेदिनी, सा मण्डिता—भूषिता यया सा तथाभूता। [अथवा मण्डितमिति भावे क्तः, "कृदभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायेन, सप्तार्णवमेदिन्याः मण्डितं मण्डनं यया सा तथाभूता]।

राज्ञः कीर्त्तरुत्कर्षं वर्णयति, कर्पूरादिति।—कर्पूरादपि कर्पूरापेक्षयाऽपि, कैरवादपि कुमुदपुष्पापेक्षयाऽपि, दलत्कुन्दादपि प्रस्फुटितकुन्दपुष्पापेक्षयाऽपि, स्वर्णद्याः मन्दाकिन्याः, कल्लोलादपि तरङ्गापेक्षयाऽपि राजतादपि शुभ्ररजतखण्डापेक्षयाऽपि, चलतः चञ्चलात्, कान्तानां रमणीनां, दृगन्तादपि नेत्रप्रान्तापेक्षयाऽपि, निःशेषञ्च सम्पूर्णं यथा तथा, कलङ्करहितात् निष्कलङ्कात्, शीतांशुखण्डादपि मालिन्यरहितचन्द्रकलापेक्षयाऽपि, श्वेताभिः अतिशुभ्राभिः, तव कीर्त्तिभिः यशोभिः, सप्तार्णवा सप्तसागरसहिता, मेदिनी पृथिवी, धवलिता शुभ्रा सञ्जाता। अतिधवलेन भवदीययशसा भूमण्डलं शुभ्रं जातमित्यर्थः। ("यशसि धवलता वर्ण्यते" इति कविसमयवशात् कीर्त्तेः श्वेतवर्णता वर्णिता)। शार्दूलविक्रीडितं वृत्तम्॥ २८३॥

(च) अर्थीति।—अर्थिजनेषु याचकेषु, कल्पद्रुमं कल्पवृक्षमिव, ईप्सितवस्तुदायकत्वात्।

दारिद्र्यव्याधिमुक्तः (छ) अस्मि। अन्यच्च,—अस्मिन् देशे सकलार्थिकल्पद्रुमं भवन्तं विलोक्य धनेश्वरनामा कश्चित् राजा अस्माकं स्मृतिपथे (ज) उदेति। उत्तरस्यां दिशि ईशानभागे जम्बीरनगरे धनेश्वरनामा कश्चित् राजा अर्थिनां दारिद्र्यदुःख-निवारणार्थं तेभ्यो धनं वितीर्णवान्। एकदा धनेश्वरेण माघशुक्लसप्तमीदिवसे वसन्तपूजायां कृतायां बहुदूरस्थाः अपि बहवः याचकाः समायाताः। तस्मिन् समये राज्ञा दानार्थम् अष्टादशकोटिसुवर्णं (झ) दत्तम्। एवमत्यन्तमौदार्य्यवरिष्ठः (ञ) स इव राजा अस्मिन् देशे त्वमेव एकः दृष्टोऽसि"।

तस्य वचनं श्रुत्वा विक्रमादित्यः भाण्डारिकमाहूय अभणत्,—"भो भाण्डारिक। अमुं स्तुतिपाठकं भाण्डारगृहे नीत्वा महार्हाणि रत्नानि दर्शय। ततोऽयं यावन्ति रत्नानि, अन्यान्यपि वस्तूनि ग्रहीतुमिच्छति, तावन्ति गृह्णातु"।

तदनन्तरं भाण्डारिकस्तं भाण्डारे नीत्वा दिव्यानि अनेकानि वस्तूनि अदर्शयत्। स्तुतिपाठकोऽपि स्वेप्सितवस्तूनि (ट) रत्नानि च गृहीत्वा परिपूर्णमनोरथः (ठ) राजसमीपमागत्य भणति,—"भो राजन्। महेश्वरस्य (ड) तव प्रसादात् अहं

(छ) दारिद्र्येति।—दारिद्र्य व्याधिरिव दुःखकरत्वात्, तस्मात् मुक्तः दारिद्र्यव्याधिमुक्तः।

(ज) स्मृतिपथे—स्मरणमार्गे।

(झ) अष्टेति।—अष्टादशकोटिसङ्ख्याकस्वर्णमुद्राः इत्यर्थः।

(ञ) औदार्य्येति।—औदार्य्येण महत्त्वेन, वरिष्ठः श्रेष्ठः। [गुरुशब्दात् इष्ठनि वरादेशः]।

(ट) स्वेप्सितवस्तूनि—स्वाभिलषितद्रव्याणि।

(ठ) परिपूर्णमनोरथः,—सिद्धाभिलाषः।

(ड) महेति।—महेश्वरस्य प्रभूतैश्वर्य्यशालिनः, सार्व्वभौमस्य वा; पक्षे—महादेवस्य।

धनपतिः (ढ) जातोऽस्मि, तव निधयो (ण) मम हस्तं प्राप्ताः। इदानीं तव चरित्रं सादृश्यमतिक्रान्तं, (त) तव सादृश्यं हरि-हर-ब्रह्मादयोऽपि न बिभ्रति (थ)। तथाहि,—

वेधा वेदायनाविष्टो गोविन्दोऽपि गदाधरः।
शम्भुः शूली विषादी च भवान् केनोपमीयते ?" ॥२८४॥

एवं स्तुत्वा स्तुतिपाठकः "ब्रह्मायुः भव" (द) इत्याशिषमुक्त्वा निजस्थानं गतः।"

---

(ढ) धनपतिः,—कुबेरः।

(ण) निधयः,—शेवधयः, रत्नानि इति यावत्। निधयो यथा—"पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्व्वश्च निधयो नव॥" इति।

(त) सादृश्यमतिक्रान्त—तुलनाऽतीतम्।

(थ) बिभति—धारयन्ति।

हरिहरब्रह्मादिभ्योऽपि राज्ञः उत्कर्षमाह भङ्ग्या, 'वेधा' इति।—वेधाः विधाता ब्रह्मा, वेदायनाविष्टः वेदमार्गानुयायिकार्य्ये आविष्टचित्तः, अन्यत् किमपि कर्त्तुं तस्यावकाशो नास्ति इति भाव., गोविन्दः विष्णुरपि, गदाधरः गदास्त्रधारी सन् युद्धादिक कृत्वा लोकाना पालनकार्य्ये निरतः अतः त्रिजगत्पालननिरतस्य तस्यापि कार्य्यान्तरावकाशो नास्ति इति-भावः, शम्भुः शिवः, शूली त्रिशूलधारी, छिद्रान्वेषी' इति व्यङ्गार्थ, पक्षान्तरे—शूलरोगग्रस्तः, लोकसंहारकार्य्ये व्याप्टतत्वात् निर्द्दयः इत्यर्थः, तथा विषादी वैराग्यवान्, 'विषपायी' इति व्यङ्गार्थः, विषपायित्वात् उन्माद एव इति भाव., पक्षान्तरे—रोगयुक्तदेहत्वात् अतीव विषण्णः अतः स कर्मानर्हः इति व्यङ्गार्थः; अत. ब्रह्मादय. न तव सादृश्यभाजः, यतस्ते एकैकस्मिन्नेव कार्य्ये व्याप्टताः, भवांस्तु एक एव सर्व्वकार्य्य करोति; अतो भवतः सादृश्य नास्ति इत्याह—भवान् केन उपमीयते ? न केनापीत्यर्थ.। पथ्यावक्त्र वृत्तम् ॥ २८४ ॥

(द) ब्रह्मेति।—ब्रह्मण इव आयुः जीवनकाल यस्य तथाविधः, कल्पान्त जीव इत्यर्थ.। ब्रह्मायुष्कालो हि मानुषमानेन द्वासप्ततिसहस्रकल्पाः। तदुक्त सूर्य्यसिद्धान्ते प्रथमाध्याये २०।२१ श्लोके,—"इत्थ युगसहस्रेण भूतसंहारकारकः। कल्पो ब्राह्ममहः प्रोक्तं शर्व्वरी तस्य तावती॥ परमायुः शत तस्य तथाऽहोरात्रसङ्ख्यया। आयुषोऽर्द्धमितं तस्य शेषकल्पोऽयमादिमः॥" (आदिमः,—परार्द्धस्य प्रथमवासरः इत्यर्थः) इति।

इति कथां कथयित्वा पुत्तलिका भोजमवदत्,—"भो राजन्! त्वयि एवमौदार्य्यं (ध) विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे दारिद्र्य-मोचनं नाम एकोनत्रिंशोपाख्यानम् ] ॥ २९ ॥

## अथ इन्द्रजालप्रदर्शनं नाम त्रिंशोपाख्यानम्।

पुनरपि यावत् राजा सिंहासने समुपविशति, तावदन्या पुत्तलिका भणति,—"भो राजन्! यस्तु विक्रम इव औदार्य्यादि-गुणयुक्तः, सोऽस्मिन् सिंहासने उपवेष्टुं योग्यः, अन्यो न"। राजाऽब्रवीत्,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्य-वृत्तान्तम्"।

साऽब्रवीत्,—"श्रूयतां राजन्! एकदा सकलसामन्त-राजकुमारादिभिरुपास्यमानो राजा सिंहासने समुपविष्टो-ऽभूत्। तस्मिन् समये ऐन्द्रजालिकः (न) कश्चित् समागत्य "ब्रह्मायुर्भव" इत्याशिषमुक्त्वा भणति,—"भो देव! त्वं सकल-कलाऽभिज्ञः, तव समीपमागत्य अनेकैः महेन्द्रजालिकैर्लाघ-वानि (प) दर्शितानि; अद्य ममापि एकं लाघवं सुप्रसन्नेन

(ध) औदार्य्यम्—उदारता, त्यागशीलत्वमिति यावत्।

इति एकोनत्रिंशोपाख्यानम् ॥२९॥

(न) ऐन्द्रजालिकः,—इन्द्रजालेन कुहकविद्यया चरति इति ऐन्द्रजालिकः,—मायाकारकः इत्यर्थः, "बाजीकर" इति भाषा।

(प) लाघवानि—चातुर्य्याणि, नैपुण्यानि इत्यर्थः।

निरीक्षणीयम्"। राज्ञोक्तं,—"नेदानीमवसरोऽस्माकं, स्नानभोजन-वेला जाता, प्रभाते द्रक्ष्यामः" इति।

ततः प्रभाते कश्चित् महाकायः, महाश्मश्रुभिर्देदीप्यमानवपुः, विपुलकन्धरः, (फ) देदीप्यमानं खड्गं धृत्वा, अतिमनोहरया स्त्रिया कयाचिद्युक्तः समागत्य सभायां समुपविष्टे राज्ञि नमश्चकार। तदा तत्रत्यैरधिकारिभिः तदकार्य्यं (ब) दृष्ट्वा सविस्मयैर्भणितं,—"भो नायक! (भ) भवान् कुतः समागतः?" तेनोक्तम्,—"अहं महेन्द्रस्य (म) सेवकः। कदाचित् स्वामिना शप्तः अधुना भूमण्डले तिष्ठामि। इयं मम भार्य्या। अद्यैव देवदैत्ययोः महत् युद्धं प्रारब्धं, तर्हि अहं तत्र गच्छामि। अयं विक्रमादित्यः जितेन्द्रियः (य) इति विचार्य्य, अस्य समीपे भार्य्यां निक्षिप्य युद्धार्थं गमिष्यामि"। तत् श्रुत्वा राजा परं विस्मयं गतः।

ततः स राज्ञः समीपे भार्य्यां निक्षिप्य राजानं निवेद्य, (र) खड्गेन यावत् गगने उत्पतति, (ल) तावदाकाशे महान् भैरवरवो जातः,—"रे! रे! मारय मारय घातय घातय" इति। सभायाम् उपविष्टाः सर्वेऽपि लोकाः ऊर्द्ध्वमुखाः सकौतुकं पश्यन्ति स्म।

---

(फ) विपुलकन्धरः—विशालस्कन्धः, वृषस्कन्धः इति भावः।

(ब) अधिकारिभिः,—अधिकृतैः, राजकार्य्ये नियुक्तैः पुरुषैः। तदकार्य्यं—सस्त्रीकं राजसभायामागमनरूपम् अनुचितकर्म्म।

(भ) नायक!—सेनापते! रसिकपुरुष वा।

(म) महेन्द्रस्य—इन्द्रस्य।

(य) जितेन्द्रियः—"श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वा घ्रात्वा च यो नरः। हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥" इत्युक्तहर्षविषादशून्यः शान्तो जनः।

(र) निवेद्य—विज्ञाप्य, "अहमिदानीं गच्छामि" इत्येवंरूपेण आमन्त्र्येत्यर्थः।

(ल) उत्पतति—ऊर्द्ध्वं गच्छति।

तदनन्तरं मुहूर्त्ते (व) गते राजसभामध्ये गगनात् खड्गो रक्तलिप्तः, तथैको बाहुः पतितः। एवं सर्वैरवलोक्य भणितम्,—"अहो! एतस्याः स्त्रिया वीरः पतिः सङ्ग्रामे प्रतिभटैः (श) हतः, तस्यैको बाहुः, खड्गश्च पतितः"। एवं वदति सभाजने (ष) पुनः शिरश्च पतितं, ततः कबन्धोऽपि (स) पतितः।

एतत् सर्व्वं दृष्ट्वा वीरस्य स्त्रिया भणितं,—"भो देव! मम भर्त्ता रणाङ्गने युद्धं विधाय शत्रुभिर्निहतः, तस्येदं शिरः, सखड्गो बाहुः, कबन्धोऽपि पतितः। तर्हि स मे प्रियो भर्त्ता दिव्याङ्गनाभिः व्रियते (ह)। यन्निमित्तमेतत् शरीरं स्थितं, स मम स्वामी रणाङ्गने प्रतिभटैर्हतः; इदानीम् एतच्छरीरं कस्य कृते (क) रक्षामि? प्रमदाः पतिमार्गगाः (ख) इति विचेतनैरपि ज्ञातम्। तथा हि,—

शशिना सह याति कौमुदी सह मेघेन तड़ित् प्रलीयते।
प्रमदाः पतिमार्गगा इति प्रतिपन्नं हि विचेतनैरपि॥ २८५॥

---

(व) मुहूर्त्ते - दण्डद्वयमिते "अष्टादशनिमिषास्तु काष्ठास्त्रिंशत्तु ताः कला।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्त्तो द्वादशास्त्रियाम्॥" इत्यमरोक्तद्वादशक्षणमिते वा काले।

(श) प्रतिभटैः,—प्रतिद्वन्द्वियोद्धृभिः।

(ष) सभाजने—सभास्थे जने तस्मिन्।

(स) कबन्धः,—शिरःशून्यदेहः। ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः)।

(ह) दिव्याङ्गनाभिः,—सुरस्त्रीभिः, अप्सरोभिरित्यर्थः। व्रियते—वरणार्थं वेष्ट्यते।

(क) कृते—निमित्तम् [अव्ययमेतत्]।

(ख) पतीति।—पत्युः भर्त्तुः, मार्गं पन्थानं, गच्छन्ति अनुसरन्ति याः ताः, पत्यनुगामिन्यः, भवन्तीति शेषः।

स्त्रीणां पत्यनुगामित्वं जडदृष्टान्तेन प्रकटयति, शशिनेति।—कौमुदी ज्योत्स्ना, शशिना चन्द्रेण सह, याति चन्द्रस्य अदृश्यावस्थाया विनश्यति, तडित् विद्युत्,

किञ्च,—

या राका शशि-शोभना गतघना सा यामिनी यामिनी
या सौन्दर्य्यगुणान्विता पतिरता सा कामिनी कामिनी ।
या गोविन्द-रस-प्रमोद-मधुरा सा माधुरी माधुरी
या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ॥ २८६ ॥

तथा च स्मृतिः,—

मृते भर्त्तरि या नारी समारोहेत् हुताशनम् ।
साऽरुन्धतीव पूज्या स्यात् स्वर्गलोके निरन्तरम् ॥ २८७ ॥

---

मेघेन जलदेन सह, प्रलीयते लयं गच्छति, एवं विचेतनैरपि जडैरपि पदार्थैः, प्रतिपन्नं प्रमाणीकृतं, यत् प्रमदाः स्त्रियः पतिमार्गगाः पत्युः पथानुवर्त्तिन्यः भवन्तीति, हि निश्चये । सुन्दरी वृत्तम् ॥ २८५ ॥

पतिपदानुसारिणी पत्नी एव पत्नीपदवाच्या न तु उद्वाहमात्रेणैव इति वर्णनावसरे असाधारणैन्द्रजालनपुण्यप्रदर्शनेन राज्ञः सकाशात् अर्थग्रहणरूपा इहलोकहितसाधिका चातुरी, तथा अमृतेऽपि पत्यौ मृतपतिकावत् शोकादिकं कृत्वा सभासमक्षे अग्निं प्रविशन्त्याः अपि स्वस्याः विद्याप्रभावेण अमरणरूपा अथ च पतिपदानुसरणव्याजापरलोकहितसाधिका चातुरी अपि अग्रे प्रकटीभविष्यति इति व्यञ्जयितुमाह, येति ।—शशिशोभना चन्द्रेण शोभमाना, गतघना मेघाऽऽवरणशून्या, राका सम्पूर्णचन्द्रा, ("पूर्णे राका निशाकरे" इत्यमरः) या यामिनी रात्रिः, सा यामिनी प्रशस्ता यामिनीत्यर्थः, सौन्दर्य्येण गुणैश्च दयादाक्षिण्यादिभिः अन्विता युक्ता अपि, पतिरता पतिव्रता या कामिनी सा कामिनी प्रशस्ता कान्तेत्यर्थः; या गोविन्दे कृष्णे, यो रसः अनुरागः, तेन यः प्रमोदः प्रहर्षः प्रकृष्टानन्द इत्यर्थः, तेन मधुरा मनोहारिणी, माधुरी मधुरता सा माधुरी प्रशस्ता माधुरीत्यर्थः, तनुभृतां शरीरिणां, लोकद्वयसाधनी इहामुत्रोपकारिणी या चातुरी चातुर्य्यं नैपुण्यमित्यर्थः, सा चातुरी प्रशस्ता चातुरीत्यर्थः, अत्र द्वितीययामिन्यादिशब्दाः पौनरुक्त्यभिया सामान्ययामिन्यादिरूपमुख्यार्थे बाध्यमानाः प्राशस्त्यादिगुणशालियामिन्यादिरूपमर्थं बोधयन्तीति मुख्यार्थस्य स्वविशेषरूपार्थान्तरेषु सङ्क्रमणात् अर्थान्तरसङ्क्रमितवाच्यत्वं ध्वनेरिति बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २८६ ॥

पत्यनुगामिनीनां स्त्रीणां प्रशस्यतामाह स्मृतिप्रमाणेन, मृते इति ।—भर्त्तरि

यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्।
तावन्न मुच्यते सा हि नरकाद्धि कथञ्चन ॥ २८८ ॥
मातृकं पैतृकञ्चापि श्वशुरस्य कुलं तथा।
कुलत्रयं तारयेद्धि भर्त्तारं याऽनुगच्छति ॥ २८९ ॥

तथा च,—

तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे।
तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति ॥ २९० ॥
व्यालग्राही यथा व्यालं बलादुद्धरते विलात्।
तथा स्त्री पतिमुद्धृत्य सह तेनैव मोदते ॥ २९१ ॥

---

स्वामिनि, मृते सति, या नारी स्त्री, हुताशनम् अग्निं, समारोहेत् प्रविशेत इति भावः, सा नारी, निरन्तर सदा स्वर्गलोके अमरागन्याम, अरुन्धतीव वसिष्ठपत्नीव, पूज्या स्यात्। इतः २९९ सङ्ख्यकश्लोकपर्य्यन्त पथ्यावक्त्र वृत्तम् ॥ २८७ ॥

अननुगमने दोषमाह, यावदिति।—पत्यौ मृते सति, स्त्री नारी, यावत् यत्पर्य्यन्तम्, अग्नौ वह्नौ, आत्मान निजदेहं, न प्रदाहयेत् भस्मीकुर्य्यात्, तावत् तत्पर्य्यन्त, सा नारी, कथञ्चन केनापि प्रकारेण, नरकात् न मुच्यते नरकमुक्ता न भवति। हि निश्चये ॥ २८८ ॥

पत्यनुगमने गुणान्तरमाह, मातृकमिति।—या नारी, भर्त्तार स्वामिनम्, अनुगच्छति अर्थात् अनुसरणं करोति, सा नारी, मातृक मातृकुल, पैतृक पितृकुल, तथा श्वशुरस्य कुलम्, एतत् कुलत्रय वंशत्रय, हि तारयेत् उद्धरेत ॥ २८९ ॥

गुणान्तर दर्शयति, तिस्र इति।—या नारी, भर्त्तार स्वामिनम्, अनुगच्छति अनुम्रियते, सा मानवे मनुष्यदेहे तिस्रः कोट्यः अर्द्धकोटी च सार्द्धत्रिकोटीमङ्ख्यकानि इत्यर्थः, यानि यावन्ति रोमाणि सन्ति तावत्काल तत्परिमितवर्षपर्य्यन्तम् अर्थात् सार्द्धत्रिकोटिवर्षपर्य्यन्तं, स्वर्गे वसेत् ॥ २९० ॥

अनुमृता स्त्री निरयगामिनमपि पतिमुद्धरते इति प्रदर्शयितुमाह, व्यालेति।—व्यालग्राही आहितुण्डिकः, बलात् बलपूर्व्वक, व्याल सर्प, विलात् गर्त्तात् यथा उद्धरते निष्काशयति, तथा तद्वत्, स्त्री नारी, पति स्वामिन, दुष्कृतिकारिणमपीति भाव, उद्धृत्य तेन पत्या, सहैव मोदते हर्ष प्राप्नोति ॥ २९१ ॥

दुर्वृत्तं वा सुवृत्तं वा सर्व्वपापरतं तथा ।
भर्त्तारं तारयत्येषा भार्य्या धर्मेषु निष्ठिता ॥ २९२ ॥

अन्यच्च,—

जीवितं पतिहीनाया निष्फलञ्च भवेत् ध्रुवम् ।
दीनायाः पतिहीनायाः किं नार्य्या जीवितैः फलम् ? ॥२९३॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य च दातारं भर्त्तारं का न पूजयेत् ? ॥ २९४ ॥

किञ्च,—

अपि बन्धुशता नारी बहुपुत्रैश्च संयुता ।
शोच्या भवति सा नारी पतिहीना तपस्विनी ॥ २९५ ॥

तथा च,—

गन्धैर्माल्यैस्तथा धूपैर्विविधैर्भूषणैरपि ।
वासोभिः शयनैश्चैव विधवा किं करिष्यति ? ॥ २९६ ॥

---

अमुमेवार्थं प्रकारान्तरेणाह दुर्वृत्तमिति ।—धर्मेषु निष्ठिता धर्म्मपरायणा, एषा भार्य्या पत्नी, दुर्वृत्तं दुश्चरितं सुवृत्तं सुचरितं वा, सर्व्वपापरतं वा सर्व्वविधपापासक्तमपि वा, भर्त्तारं स्वामिनं, तारयति उद्धरति ॥ २९२ ॥

पतिहीनायाः जीवनं दुःखाकरमेव इति वक्तुं श्लोकमाह, जीवितमिति ।—पतिहीनायाः स्वामिविरहितायाः नार्य्याः, जीवितं जीवनं, ध्रुवं निश्चितमेव निष्फलं निष्प्रयोजनं, भवेत् स्यात्, पतिहीनायाः विधवायाः, दीनायाः नार्य्याः स्त्रियाः, जीवितैः जीवनैः, किं फलम् ? किं प्रयोजनम् ? न किमपीत्यर्थः ॥ २९३ ॥

स्त्रीणां भर्त्रनुगमने हेतुमाह, मितमिति ।—पिता जनकः, मितं परिमितमेव, ददाति, भ्राता सहोदरः, सुतः पुत्रश्च, मितमेव ददाति, अमितस्य अपरिमितवस्तुनः, दातारं प्रदायकं, भर्त्तारं पतिं, का नारी, न पूजयेत् ? सर्व्वैव पूजयेत् इत्यर्थः ॥ २९४ ॥

पतिहीना सर्व्वथैव शोच्या इति वक्तुमाह, अपीति ।—यत्तदोर्नित्यसम्बन्धात् अत्र या इति कर्तृपदमध्याहार्य्यं, या नारी, पतिहीना विधवा, अत एव तपस्विनी दीना, सा नारी, बन्धुशता भ्रात्रादिशतबान्धवयुक्ताऽपि, तथा बहुपुत्रैश्च संयुताऽपि, शोच्या शोचनीया, भवति ॥ २९५ ॥

विधवायाः सर्वाऽपि भोग्यसम्पत् निन्दनीया इत्याह, गन्धैरिति ।—विधवा प्रति-

यथा च,—

नातन्त्री विद्यते वीणा नाचक्रो वर्त्तते रथः।
नापतिः सुखमाप्नोति नारी बन्धुशतैरपि॥ २९७॥
दरिद्रो व्यसनी वृद्धो व्याधितो विकलस्तथा।
पतितः कृपणो वाऽपि स्त्रीणां भर्त्ता परा गतिः॥ २९८॥
नास्ति भर्त्तृसमो बन्धुर्नास्ति भर्त्तृसमा गतिः।
वैधव्यसदृशं दुःखं स्त्रीणामन्यत् न विद्यते।
धन्या सा योषितां मध्ये भर्त्तग्रे म्रियते हि या"॥ २९९॥

इत्युक्त्वा अग्निप्रवेशार्थं राज्ञः पादयोः पपात। राजा तस्या वचनं श्रुत्वा करुणार्द्ररससिक्तकर्णः (ग) सन्

हीना नारी गन्धैः विलेपनद्रव्यैः, माल्यैः पुष्पमालादिभिः, धूपैः सुगन्धधूमैः, तथा विविधैः नानाप्रकारैः, भूषणैः अलङ्कारैः, वासोभिः वस्त्रैः शयनैः उत्तमशय्याभिश्च किं करिष्यति? न तासां किमपि तैः प्रयोजनमित्यर्थः॥ २९६॥

पतिहीनायाः दुःखभागिनीत्वमाह, नेति।—अतन्त्री तन्त्रीरहिता, वीणा न विद्यते नास्ति, नास्ति चक्रं यस्य सः अचक्रो चक्ररहितः, [ "सर्व्वधनी" इति वत् इन्यन्तो बहुव्रीहिः ] रथश्च न वर्त्तते नास्ति, अपतिः पतिहीना, नारी स्त्री, बन्धुशतैरपि भ्रात्रादिबहुबान्धवजनैरपि, सुखं नाप्नोति न लभते॥ २९७॥

यादृशः तादृशो भर्त्ता भवतु स एव स्त्रीणां भोगस्वर्गापवर्गदः इत्यर्थे प्रमाणमाह, दरिद्र इति।—दरिद्रः धनहीनः, व्यसनी द्यूतादिव्यसनासक्तः, वृद्धः जराग्रस्तः, व्याधितः पीडाग्रस्तः तथा विकलः विकलाङ्गः, पतितः पापचारी, कृपणः व्ययकुण्ठो वाऽपि, (यादृगेव भवतु इत्याशयः) भर्त्ता पतिरेव, स्त्रीणां परा श्रेष्ठा, गतिः आश्रयः॥ २९८॥

भर्त्ता एव स्त्रीणां परमाश्रयः इत्यर्थे श्लोकान्तरमाह, नास्तीति।—स्त्रीणां नारीणां, भर्त्तृसमः पतितुल्यः, बन्धुः नास्ति, भर्त्तृसमा पतितुल्या, गतिः उपायः, नास्ति, वैधव्यसदृशं वैधव्यतुल्यम्, अन्यत् अपरं, दुःखं न विद्यते नास्ति, या नारी, भर्त्तग्रे भर्त्तृमरणात् पूर्वं, भर्त्तुः समक्षे वा, म्रियते देहं त्यजति, सा नारी, योषितां नारीणां, मध्ये धन्या प्रशंसनीया, भवति इति शेषः॥ २९९॥

(ग) करुणेति।—करुणया अनुकम्पया, आर्द्रः प्लावितः, अनुप्राणितः इति यावत्, यो रसः चित्तद्रवीकरणं तेन शोकार्द्रवचनरूपरसेन, सिक्तौ सिञ्चितौ, कर्णौ यस्य सः।

श्रीखण्डादिभिः चितां विरचय्य, (घ) तस्मै अनुज्ञां ददौ। साऽपि राज्ञः सकाशात् अनुज्ञां लब्ध्वा भर्त्तुः शरीरेण समम् (ङ) अग्निं विवेश। ततः सूर्य्योऽस्तमगात्।

प्रभाते राजा सन्ध्यादिकं कर्म्म समनुष्ठाय, सिंहासने समुपविष्टो यावत् सकलसामन्त-राजकुमारादिभिरुपास्यते, तावत् स एव नायकः पूर्ववत् खड्गहस्तः अतिदीर्घाकारो देदीप्यमानवपुः समागत्य, राज्ञः कण्ठे कल्पतरुकमलग्रथितां मालां परिमल-लुब्ध-मुग्ध-मधुकर-निकुरम्ब-निरन्तरां (च) निधाय, तस्मै नानाविधयुद्धगोष्ठीं (छ) वक्तुं प्रवृत्तः। तं समागतं दृष्ट्वा सर्वाऽपि सभा विस्मयं गता।

पुनस्तेन भणितं,—"भो राजन्! मयि अस्मात् स्थानात् स्वर्गं गते, तत्र महेन्द्रस्य दैत्यानाञ्च महान् सङ्ग्रामोऽभूत्। तस्मिन् समये बहवो राक्षसा दैत्याश्च निपातिताः, केचन पलाय्य गताः। युद्धावसाने देवेन्द्रेण सप्रसादम् (ज) अहं भणितः,—'भो नायक! त्वया अद्य प्रभृति भूलोकं प्रति न गन्तव्यं, तव शापस्यावसानं जातम्। तवाहं प्रसन्नोऽस्मि, गृहाणेदं वलयम्'

(घ) श्रीखण्डादिभिः,—धवलचन्दनप्रभृतिभि दहनोपयोगिद्रव्यैः। चिता—चिति, शवदाहार्थं चुल्लीमित्यर्थः। विरचय्य—सज्जीकृत्य, रचयित्वेत्यर्थः, [ वि+रचि—ल्यप् "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इति णेः अयादेशः ]।

(ङ) समम्—सह [ अव्ययमेतत् ]।

(च) कल्पेति।—कल्पतरौ कल्पवृक्षात्, उद्भूतेन सञ्जातेन, कमलेन पद्मेन, ग्रथिता निबद्धाम्। (कल्पतरौ ईप्सितवस्तुप्रदत्वेन तत्सन्निधौ कमललाभो नायौक्तिकः)। परिमलेति।—परिमलेषु सौरभेषु, लुब्धाः लोलुपाः, मुग्धाः मूढाः, लोभोपहतचेतसः इति यावत्, ये मधुकराः भृङ्गाः, तेषां निकुरम्बैः समूहैः, नि. नास्ति, अन्तरम् अवकाशः यत्र ता तथाविधाम्। माला—मालिकाम्।

(छ) नानाविधयुद्धगोष्ठीं—युद्धविषयिणीं विविधवार्त्ताम्।

(ज) सप्रसाद—सानुग्रहम्।

इति रत्नखचितं स्वकरात् मुक्तावलयं मम हस्ते अदात्। पुनर्मया भणितं,—"भोः स्वामिन्। अत्रागमनसमये मया भार्य्या विक्रमार्कसमीपे निक्षिप्ता। तां गृहीत्वा झटिति पुनरागमिष्यामि इति पुरन्दरम् उक्त्वा समागतोऽस्मि। त्वं धार्म्मिकचूडामणिः, सा मम भार्य्या दातव्या, तया सह पुनः स्वर्लोकं गमिष्यामि" इति।

तद्वचनं श्रुत्वा राजा सर्वैः सह सभायां तटस्थो (झ) जातः, परं विस्मयं गत्वा तूष्णीञ्च स्थितः। पुनस्तेन गदितं,—"भोः राजन्! किमिति जोषम् (ञ) आस्यते?" राज्ञः समीपस्थै-र्भणितं,—"तव भार्य्या अग्निं प्रविष्टा"। तेनोक्तं,—"किमर्थम्?" ते तु निरुत्तरीभूताः आसन्। तदा तेन भणितं,—"राज-शिरोमणे! परनारीसहोदर! लोककल्पद्रुम! (ट) विक्रम-भूमिपाल! किमिदम् अकार्य्यम् अनुष्ठीयते? देहि मे मत्पत्नीम्"। ततो राज्ञोक्तं,—"भो नायक। खड्गबाहुभ्यां पतितं भवच्छिरः कलेवरञ्च दृष्ट्वा भवन्तं युद्धनिहतं मत्वा सभासदां मम च अनुमतिं गृहीत्वा भवच्छरीरैः सह तव पत्नी अनलं प्रविष्टवती"। नायकेनोक्तं,—"राजन्! सुरूपां युवतीञ्च पर-

---

(झ) तटस्थः,—उदासीन इव, पक्षापक्षमनाश्रितः उदासीनो यथा सदसत् किमपि न वक्ति, तथा किमपि न उवाच, तूष्णीं स्थितः इत्यर्थः, यद्वा—तटस्थः,—नदीकूलस्थ इव सन्त्रस्तः, नदीतीरस्थो यथा कदाचित् तटभङ्गे पतनाशङ्कया भीत-भीत इव सदा वर्त्तते, तद्वत् राजाऽपि भीतभीत इव स्थित इत्यर्थः।

(ञ) जोषं—तूष्णीं, मौनमिति यावत्।

(ट) राजेति।—राज्ञां शिरसि धार्य्यः मणिरिव तत्सम्बोधने, राजचूडामणे! परेति।—परनार्य्याः परस्त्रियाः, सहोदरः भ्राता इव तत्सम्बोधने, [ एतेन श्याल-सम्बोधनरूपचातुर्य्यमपि व्यज्यते ]। लोके—जगति, लोकेषु जनेषु वा, कल्पद्रुम इव वाञ्छापूरकत्वात् तत्सम्बोधने।

ललनाम् अपि लोलुपदृशा (ठ) दृष्ट्वा भवतैव गृहान्तरे गोपायिता सा ; यतः मयि मृते अनलम् अप्रविश्य तया स्वर्ग एव तच्छरीरेण गन्तव्यः इति नियमः (ड) आसीत्"। तदा सकलसभासदैरुक्तं,—"भोः। सत्यमेव अस्माकं समक्षं सा अनलं प्रविष्टा"। ततः "न हि न हि" इत्युक्त्वा नायकः त्वरितमुत्थाय, सिंहासनपश्चाद्वर्त्तिगृहाभ्यन्तरात् तामेव नायिकां करे धृत्वा राजसभामध्यमानीय, तदङ्गावरणञ्च उन्मोच्य प्रदर्शितवान्। ततः सर्वे एव लज्जानम्राननाः परं विस्मयं जग्मुः।

अथ स सहासं राजानं गदितवान्—"महाराज! सकलगुणगणैकभाजन! ब्रह्मायुर्भव ; अहं स महैन्द्रजालिकः, तव पुरतः मया इन्द्रजालविद्यालाघवं दर्शितम्"। राजाऽपि विस्मयं गतः प्रसन्नोऽभूत्।

तस्मिन्नवसरे भाण्डारिकेणागत्य उक्तं,—"भो महाराज! पाण्ड्यराजेन स्वामिने करः प्रेषितः"। राज्ञोक्तं,—"किं किं प्रेषितम्?" तेनोक्तं,—"स्वामिन्। अवहितं (ढ) शृणु,—

अष्टौ हाटककोटयः, त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मधुगन्धलुब्धमधुपैः संक्षोभिताः सिन्धुराः।
अश्वानां त्रिशतञ्च वै सुचतुरं पण्याङ्गनानां शतं
श्रीमद्विक्रमभूमिपाल! भवतः श्रीपाण्ड्यराट् प्रेषितम्" ॥३००॥

---

(ठ) लोलुपदृशा—लालसदृष्ट्या, सानुरागवीक्षणेनेत्यर्थः।

(ड) नियमः,—अङ्गीकार.।

(ढ) अवहितं—सावधान, मन.संयोगपूर्व्वकमित्यर्थः।

पाण्ड्यराजप्रेरिताना वस्तूनां सङ्ख्यां वर्णयति, अष्टाविति।—अष्टौ हाटककोटयः अष्टकोटिसङ्ख्यकस्वर्णमुद्राः, मुक्ताफलाना त्रिनवतिः तुलाः त्रिनवतितुलापरिमितानि, सार्द्धद्विषष्ट्यधिकैकादशशत-शरावपरिमितानीत्यर्थं, मुक्ताफलानि, मधुगन्धेन मदजलगन्धेन, लुब्धैः लोभाकृष्टैः, मधुपैः भ्रमरैः, संक्षोभिताः, सिन्धुराः गजाः, पञ्चाशत् पञ्चाशत्सङ्ख्यकाः, तथा अश्वानां घोटकानां, त्रिशतं शतत्रयं, तथा सुचतुरं सुनिपुणं, पण्याङ्गनानां वेश्यानां,

ततो राज्ञा भणितम्,—"एतत् सर्वम् ऐन्द्रजालिकाय देहि"। ततो भाण्डारिकेण तत् सर्वं तस्मै दत्तम्"।

इमां कथां कथयित्वा पुत्तलिका भोजराजमवदत्,—"भो राजन्। त्वयि एवम् औदार्य्यं विद्यते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा अधोमुखो बभूव।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरो-भोजसंवादे इन्द्रजाल-प्रदर्शनं नाम त्रिंशोपाख्यानम् ] ॥ ३० ॥

---

## अथ वैतालसिद्धिलाभो नाम एकत्रिंशोपाख्यानम्।

अथ राजा सिंहासने पुनः यावत् समुपविशति, तावदन्या पुत्तलिका वदति स्म,—"भो राजन्! सिंहासने स एव उपवेष्टुं क्षमः, यस्य विक्रमस्येव औदार्य्यादयो गुणा भवन्ति"। राज्ञोक्तं,—"भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्य-वृत्तान्तम्"।

सा कथयति,—"भो राजन्! श्रूयतां, विक्रमार्के राज्यं कुर्वति एकदा कश्चिद्दिगम्बरः (ण) समागत्य राज्ञो हस्ते फलं दत्त्वा आशिषं प्रयुज्य भणति,—"भो राजन्! अहं मार्गशीर्षे कृष्णचतुर्दशीदिवसे महाश्मशाने हवनं करिष्यामि।

---

अतश्च, हे श्रीमन्! विक्रमभूमिपाल! भवतः त्वदर्थं श्रीपाण्ड्यराट्प्रेषितं पाण्ड्यराजेन एतत् सर्वं प्रेरितम्। शार्दूलविक्रीडितं वृत्तम्॥ ३०० ॥

इति त्रिंशोपाख्यानम्॥३०॥

---

(ण) दिगम्बरः,—दिक् शून्यमेव, अम्बरं वस्त्रं यस्य सः, नग्नक्षपणकभेदः।

भवान् परोपकारी सत्त्वाधिकः इति मे विदितं, तत्र ममोत्तरसाधकेन (त) त्वया भवितव्यम् । तस्य महाश्मशानस्य नातिदूरे शमीपादपः अस्ति, तत्र कश्चिद्वेतालः (थ) लग्नस्तिष्ठति, स त्वया मौनेन एव नेतव्यः, अन्यथा मे कार्य्यसिद्धिः न भविष्यति" । राज्ञा "तथा करिष्यामि" इति प्रतिज्ञातम् ।

अथ क्षपणकः सहःकृष्णचतुर्दशीदिवसे(द) महाश्मशाने होमसाधनद्रव्याणि गृहीत्वा स्थितः । अथ तेन दर्शितं शमीपादपस्थितं वेतालं दृष्ट्वा, स्कन्धे गृहीत्वा राजा यावत् मार्गे आगच्छति, तावत् वेतालेनोक्तं,—"भो राजन् ! मार्गश्रमापनोदनाय (ध) कामपि कथां कथय" । राजा मौनभङ्गभयात् (न) तूष्णीं स्थितः । पुनर्वेतालेनोक्तं,—"त्वं मौनभङ्गभयात् कथां न कथयसि, अहं तावत् कथयिष्यामि । कथाऽवसाने मौनभङ्गभयान्न कथयिष्यसि चेत्, तव शिरः सहस्रधा भविष्यति" इति भणित्वा कथाम् आरभते,—

"राजन् ! श्रूयतां—हिमवतो दक्षिणपार्श्वे विन्ध्यवती नाम्नी नगरी आसीत् । तत्र सुविचारको नाम राजा प्रतिवसति स्म । तस्य पुत्रः मयसेनः । स एकदा आखेटनार्थं (प) वनं गतः, वने हरिणमेकं दृष्ट्वा तदनुगतो महारण्यं प्रविष्टः । ततः कञ्चिन्नगरमार्गमासाद्य (फ) एकाकी यावदागच्छति,

(त) उत्तरसाधकेन—पृष्ठपोषकेण; साहाय्यकारिणेत्यर्थः ।

(थ) वेतालः,—भूताधिष्ठितशवविशेष. ।

(द) सह इति ।—सहा—मार्गशीर्षः, ("मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः" इत्यमरः) मार्गशीर्षकृष्णपक्षीयचतुर्द्दश्यां तिथौ ।

(ध) मार्गश्रमापनोदनाय—पथक्लान्तिदूरीकरणाय ।

(न) मौनभङ्गभयात्—वाक्संयमव्रतनाशशङ्कातः ।

(प) आखेटनार्थं—मृगयानिमित्तम् ।

(फ) आसाद्य—प्राप्य ।

तावन्मध्ये एका नदी दृष्टा। तत्र नदीतटे कश्चित् ब्राह्मणः अनुष्ठानं (ब) करोति। राजपुत्रः तस्य समीपं गत्वा तमवदत्,—"भो ब्राह्मण! यावत् जलं पास्यामि, तावत् मम अश्वं गृहाण"। ब्राह्मणेनोक्तम्,—"अहं किं तव प्रेष्यः,(भ) यदश्वं धारयिष्यामि?" ततस्तेन कशया (म) ताड़ितः ब्राह्मणः रुदन् राजसमीपमागत्य तं वृत्तान्तं निवेदयामास। तच्छ्रुत्वा राजा क्रोधात् अरुणलोचनः (य) सन् पुत्रं स्वदेशात् निर्वासयितुम् (र) आदिदेश। तस्मिन्नवसरे मन्त्रिणा भणितम्,—"अयं राज्यभोगे योग्यः कुमारो हि स्वदेशात् न निर्वासनीयः, एतदुचितं (ल) न भवति"। राज्ञोक्तं,—"भो मन्त्रिन्! एतदुचितम् एव, यतः अनेन ब्राह्मणशरीरं कशया ताड़ितं, तस्मादयं समीचीनदण्डः, (व) हस्तच्छेदश्च करणीयः। बुद्धिमता ब्रह्मद्वेषो न कर्त्तव्यः।

भो मन्त्रिन्! किं त्वया पुराणानि न श्रुतानि? पुरा ब्राह्मणस्य शापात् ईश्वरस्य लिङ्गपातः (श) जातः, नृगस्य कृकलास-

(ब) अनुष्ठानं—शास्त्रविहिताचरणम्।

(भ) प्रेष्यः,—परिचारकः, भृत्य इति यावत्।

(म) कशया—अश्वताडन्या। ("अश्वादेः ताडनी कशा" इत्यमरः)

(य) अरुणलोचनः,—अरुणे लोचने यस्य, आरक्तनयन इत्यर्थः।

(र) निर्वासयितुं—दूरीकर्त्तुम्।

(ल) उचितं—युक्तियुक्तम्।

(व) समीचीनदण्डः,—उपयुक्तशास्तिः, न्याय्यदण्डः इत्यर्थः।

(श) ईश्वरस्य—हरस्य। लिङ्गपातः,—लिङ्गपतनम्। [पुरा किल स्ववशीकर्त्तुकामेन स्मरेणानुसृतो भीतः शङ्करः दिशि दिशि परिभ्रम्य सपत्नीकभार्गवात्रेयाद्यध्युषितदारुवनं प्रविश्य ऋषिवृन्दं कामादभयं ययाचे। मौनव्रतिनस्ते व्रतभङ्गभयात् तूष्णीं तस्थुः। हरं दृष्ट्वा ऋते अरुन्धत्यनुसूये सर्व्वाः भार्गवात्रेयादियोषितः कामार्त्ताः मदविह्वलितेन्द्रियाः आश्रमं त्यक्त्वा महेश्वरमनुजग्मुः। तत् दृष्ट्वा भार्गवादिभिः क्रुद्धैः "लिङ्गोऽस्य पततां भुवि" इति शापो दत्तः। ततो देवस्य लिङ्गं पतित्वा पृथिवीं विदार्य्य रसातलं विवेश। इति वामनपुराणीयषष्ठाध्यायोक्तकथाऽत्रानुसन्धेया]।

त्वम्, इन्द्रस्य दारिद्र्ययोगः, नहुषस्य महोरगत्वम्; (व) स्वयं सम्पन्नोऽपि पूज्यान् न तिरस्कुर्य्यात् (स)। उक्तञ्च,—

अत्युन्नतपदं प्राप्तः पूज्यान् नैवावमानयेत्।
नहुषः सर्पतां प्राप्तश्चाऽगस्त्यावमाननात्॥
अतस्ते ब्राह्मणाः सर्वे पूजनीयाश्च सर्वदा॥ २०१॥

(व) नृगस्य—तदाख्यस्य सूर्य्यवंशीयनृपभेदस्य। कृकलासत्व—सरटत्वं तदाख्य-शरीरूपविशेषत्वम्। [उशीनरतनयः नृगो नाम सूर्य्यवंशीयः नरपतिः अज्ञानात् स्वकीयधेनुबुद्ध्या ब्राह्मणधेनुं विप्राय दत्त्वा ब्रह्मशापात् कृकलासत्वम् अवाप। इति महाभारतीयानुशासनपर्व्वणि ७० अध्यायोक्तकथा]। इन्द्रस्य—पुरन्दरस्य। दारिद्र्ययोग—लक्ष्मीभ्रंशः। [अत्रेदं पुरावृत्तम्,—पुरा किल शचीनाथः कदाचित् कामुकः कस्मिंश्चित् महारण्ये रम्भया रममाणः कैलासं यान्तं सशिष्यं दुर्व्वाससमालोक्य ससम्भ्रमं तमुपेत्य च शिरसा ननाम, तेन चातिप्रसन्नो मुनिः आशीर्वचनपुरःसरं विष्णुप्रसादं मोक्षप्रदं पारिजातकुसुममेकं तस्मै ददौ। धनमदेनातिप्रमत्तं तं तत्पुष्पमनादृत्य हस्तिमस्तके स्थापयन्तमालोक्यातिक्रुद्धो मुनिः "श्रीभ्रष्टो भव" इति शशाप। तद्यथा ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे ३६ अध्याये,—"शक्रः पुष्पं गृहीत्वा च प्रमत्तो राज-सम्पदा। भ्रमेण स्थापयामास तदेव हस्तिमस्तके॥ * * * * तत् पुष्पं त्यक्तवन्तञ्च दृष्ट्वा शक्रं मुनीश्वरः। तमुवाच महारुष्टः शशाप स रुषान्वितः॥ मुनिरुवाच,—अरे। श्रिया प्रमत्तस्त्वं कथं मामवमन्यसे?। * * * * यस्मात् संस्थापितं पुष्पं गर्व्वेण हस्तिमस्तके। तस्मात् युष्मान् परित्यज्य यातु लक्ष्मीर्हरेः पदम्॥" इति]। नहुषस्य—तदाख्यचन्द्रवंशीयनृपविशेषस्य। महोरगत्वम्—अजगरत्वम्। [पुरा किल चन्द्रवंशीयो नहुषो नाम राजा इन्द्रत्वं प्राप्य शचीं कामयाञ्चक्रे, ततः "सप्तर्षिवाहित-यानमध्यास्य यदि आगन्तुं शक्नोषि, तदा त्वां भजामि, नान्यथा" इति शचीवाक्यं निशम्य तथा कृत्वा, शिविकास्कन्धान् असममन्दगामिनः अगस्त्यप्रमुखान् सप्तर्षीन् झटितिगमनाय "सर्प सर्प" इति नहुषेण उच्चारिते "त्वं सर्पो भव" इति अगस्त्य शशाप। इति महाभारतवनपर्व्वणि १८१ अध्यायोक्तवार्त्ता]।

(स) सम्पन्नोऽपि—सम्पद्युक्तोऽपि धनवान् अपीत्यर्थः। पूज्यान्—मान्यान् जनान्। न तिरस्कुर्य्यात्—नावमानयेत्।

महताऽपि पूज्यावमाननं न कार्य्यमित्यर्थे सदृष्टान्तं श्लोकमाह, अत्युन्नतेति।—अत्युन्नतपदम् उच्चपदं, प्राप्तः लब्धवान् अपि जनः, पूज्यान् मान्यान् जनान्, नैव अव-

तथा च,—

> यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः।
> क्षयैश्चाध्यासितश्चन्द्रः को न नश्येत् प्रकोप्य तान्? ॥३०२॥

किञ्च,—

> यद्धस्तेन सदाऽश्नन्ति हव्यानि त्रिदिवौकसः।
> कव्यानि चैव पितरः को भवेदधिकस्ततः? ॥ ३०३ ॥

तथा च,—

> ये पूजिताः सुरैः सर्वैर्मनुष्यैश्चैव भारत!।
> तपोव्रतधरा ये च तांस्तान् विप्रान् समर्चयेत् ॥ ३०४ ॥

---

मानयेत् मान्यानामपमान न कुर्य्यात्, नहुष. राजा अगस्त्यावमाननात् अगस्त्यस्याप-मानकरणात्, सर्पता प्राप्त सर्परूपो भूत्वा, च्युतः स्वर्गात् पतित। अत. ब्राह्मणाव-माननायाः अपराधहेतुकत्वात्, ते पूज्याः, सर्वे समस्ता., ब्राह्मणा., सर्वदा पूजनीयाश्च अर्च्चनीया एव, जनैरिति शेषः। इतः ३०४ सङ्ख्याकश्लोकपर्य्यन्तं पथ्यावक्त्रं वृत्तम् ॥ ३०१ ॥

ब्राह्मणमाहात्म्यवर्णनमुखेन तदवमानने दोषमाह. यैरिति।—यै. ब्राह्मणै., अग्निः पावकः, सर्व्वभक्ष्यः सर्वं भक्ष्यं यस्य स तादृशः, महोदधिश्च समुद्रश्च, अपेयः लवणमयत्वात् पानायोग्यः, कृतः विहितः; चन्द्रः शशी, क्षयैः क्षयकररोग-समूहैः, यक्ष्मणा इति यावत्, अध्यासितश्च आक्रान्तिश्च, [पुरा किल रोहिण्यामेव रममाणस्य चन्द्रस्य अश्विन्यादयः षड्विंशतिः पत्न्यः पितरं दक्षं पत्युरनय विज्ञापया-मासुः, ततो दक्षेण दाक्षिण्यार्थमुपदिष्टोऽपि चन्द्रः तद्वाक्यस्य अप्रतिपालनात् "त्व क्षयरोगग्रस्तो भव" इत्यभिशप्तः। इति पद्मपुराणस्वर्गखण्डोक्तगाथा] तान् तादृशान् विप्रान्, प्रकोप्य प्रकर्षेण कोपयित्वा, को जनः, न नश्येत्? नाशं नाप्नुयात्? अपि तु सर्व्व एव ब्राह्मणकोपेन नश्येदित्यर्थः ॥ ३०२ ॥

अपरमपि ब्राह्मणोत्कर्षप्रतिपादक श्लोकमाह, यद्धिति।—तृतीया द्यौ. इति त्रिदिवः स्वर्गः, स एव ओकः स्थानं येषा ते त्रिदिवौकसः देवाः, यद्धस्तेन येषा ब्राह्मणानां हस्तेन, सदा नित्य, हव्यानि होमसाधनद्रव्याणि घृतादीनि, तथा पितरः पितृगणाश्च, कव्यानि श्राद्धीयद्रव्याणि, अश्नन्ति भुञ्जते, ततः तेभ्य. ब्राह्मणेभ्यः, अधिकः को भवेत्? न कोऽपि ततोऽधिक इत्यर्थः ॥ ३०३ ॥

ब्राह्मणस्य सर्व्वपूजनीयतां प्रतिपादयति, ये इति।—ये ब्राह्मणाः, सर्वैः सकलैः,

तथा च, हारावल्यां स्वयं कृष्णेनाप्युक्तम्,—

'शतं शपन्तं परुषं वदन्तं
यो ब्राह्मणं नार्चयते यथाऽहम्।
स पापकृत् ब्रह्मदवाग्निमध्ये
बध्यश्च दण्ड्यश्च सदाऽस्मदीयः॥ २०५॥

किञ्च,—

यश्च मां परया भक्त्या आराधयितुमिच्छति।
तेन विप्राः सदा पूज्या एवं तुष्टो भवाम्यहम्'॥ २०६॥

भो मन्त्रिन्। येन हस्तेन ताड़ितो ब्राह्मणः, तस्य हस्तस्य छेदः कार्य्यः" इत्युक्त्वा यावत् तस्य हस्तं छेदयति, तावत् स ब्राह्मणः समागत्य भणति,—"भो राजन्! तदा अज्ञानवशात् (छ) तथा कृतम्, अद्य प्रभृति एवमनुचितमयं न करिष्यति। मम अनुरोधात् राजपुत्रो रक्षणीयः, अहं प्रसन्नो जातोऽस्मि"। राजा

---

सुरैः देवैः, मनुष्यैश्च पूजिताः समादृताः, ये च ब्राह्मणाः, तपोव्रतधराः तपोनिष्ठाः, व्रतपरायणाश्च, हे भारत। तान् तान् तादृशान्, विप्रान् ब्राह्मणान्, समर्चयेत् अवश्यमेव तेषां पूजां कुर्य्यात्॥ २०४॥

अपकारिब्राह्मणापूजकस्यापि दण्डनीयतामाह भगवदुक्तिद्वारा, शतमिति।— अस्मदीयः अस्मत्सम्बन्धी, यो जनः, शतं बहु, शपन्तं शापं ददानं, परुषं कठोरं, वदन्त कथयन्तमपि. ब्राह्मणं विप्र, यथाऽहम् अहमिव नार्चयते न पूजयति, पापकृत् पापी, स जनः, सदा सर्व्वदा, दण्ड्यः दण्डनीयः, तथा ब्रह्मदवाग्निमध्ये ब्रह्मतेजोरूपदावानलमध्ये, बध्यः बधार्हश्च, भवति। वृत्तमुपजातिः॥ २०५॥

ब्राह्मणार्चनेनैव भगवदर्चनं भवति इत्याह, यः इति।—यश्च जनः, परया उत्तमया, भक्त्या अनुरागेण, माम् आराधयितुं सेवितुम्, इच्छति, तेन जनेन, विप्राः ब्राह्मणाः, सदा सर्व्वकालं, पूज्याः पूजनीयाः, एवं सति अहं तुष्टो भवामि, ब्राह्मणपूजयैवाहं तुष्टो भवामीत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २०६॥

(छ) अज्ञानवशात्—ज्ञानाभावात्, अज्ञताहेतोरित्यर्थः।

च तस्य वचनं श्रुत्वा स्वपुत्रं विससर्ज्ज (क)। ब्राह्मणोऽपि निजनिलयम् अगात्" (ख)।

इमां कथां कथयित्वा वेतालो वदति,—"भो राजन्! एतयोः मध्ये गुणाधिकः कः?" राज्ञा विक्रमेण भणितं,—"राजा एव गुणाधिकः"। तत् श्रुत्वा मौनभङ्गात् वेतालः शमीपादपं जगाम। राजाऽपि पुनस्तत्र गत्वा तं स्कन्धे समारोप्य यावत् आगच्छति, तावत् स पुनरपि कथां कथयति। एवं कथानां पञ्चविंशतिः कथिता वेतालेन। राजाऽपि सर्व्वासामेव यथायथं प्रत्युत्तरमदात् (ग)।

तस्य सूक्ष्मबुद्धिवैदग्ध्येन (घ) वेतालः प्रसन्नो जातः विक्रमं जगाद,—"भो राजन्! अयं दिगम्बरः त्वां निहन्तुं प्रयत्नं करोति"। राज्ञोक्तं,—"तत् कथम्?" वेतालेनोक्तं,—"त्वया मयि तत्र उपस्थापिते, 'त्वं श्रान्तोऽसि, इदानीमग्निकुण्डं प्रदक्षिणीकृत्य दण्डवत् प्रणम्य निजस्थानं गच्छ' इति दिगम्बरवचनमाकर्ण्य त्वयि दण्डवत् प्रणते सति सः खड्गेन त्वां निहत्य तव मांसेन होमं करिष्यति। एवं क्रियमाणे अणिमादयोऽष्टौ सिद्धयः तस्य वशीभूताः भवेयुः"। विक्रमेणोक्तम्,—"अधुना किं क्रियते?" वेतालेनोक्तं,—"त्वमेवं कुरु,—दिगम्बरेण 'त्वं दण्डवत् प्रणम्य निजस्थानं गच्छ' इति उक्ते सति, त्वया एवं वक्तव्यम्,—'अहं सार्व्वभौमः (ङ) सर्व्वे राजानः

(क) विससर्ज्ज—मुमोच।

(ख) निजनिलय—स्वावासं, स्वगृहमित्यर्थः। अगात्—अगमत् [इणधातोर्लुङ्]।

(ग) तत्प्रसङ्गस्तु अस्मदीयवेतालपञ्चविंशत्याख्यग्रन्थे द्रष्टव्यः।

(घ) सूक्ष्मेति।—सूक्ष्मबुद्धि' कुशाग्रवत तीक्ष्णबुद्धि', "सर्व्वतोमुखी प्रतिभा इत्यर्थ', तस्या, वैदग्ध्येन नैपुण्येन।

(ङ) सार्व्वभौम,—चक्रवर्त्तिनृपः, सम्राट् इत्यर्थः।

मामेव प्रणामं कुर्व्वन्ति. मया कदाऽपि कस्यापि प्रणामो न कृतः, अतोऽहं प्रणामं कर्त्तुं न जानामि, त्वं प्रथमं प्रणामं कृत्वा दर्शय, तत् दृष्ट्वा पश्चादहं नंस्यामि'। ततः स यदा प्रणामं कर्त्तुं नम्रो भविष्यति, तदा त्वं तस्य शिरः छिन्धि (च), तेन तवैव अष्टौ सिद्धयः करतलगताः भविष्यन्ति"।

एवं वेतालेन उपदिष्टे राजा विक्रमस्तथैव अकरोत्। राज्ञोऽष्टौ महासिद्धयः जाताः। अथ वेतालेनोक्तं,—"भोः राजन्। तवाहं प्रसन्नोऽस्मि, वरं वृणीष्व"। राज्ञोक्तं,—"यदि मम प्रसन्नोऽसि, तर्हि यदाऽहं स्मरिष्यामि, तदा त्वया मत्समीपे आगन्तव्यम्"। स "तथाऽस्तु" इति प्रतिज्ञाय (छ) निजस्थान गतः। राजाऽपि निजनगरीं विवेश"।

इमां कथां कथयित्वा पुत्तलिका अवदत्,—"भो राजन्! त्वयि एवमौदार्य्यादयो गुणा विद्यन्ते चेत्, तर्हि अस्मिन् सिंहासने समुपविश"। राजा तूष्णीमासीत्।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे वेताल-सिद्धिलाभो नाम एकविंशोपाख्यानम् ]॥ २१ ॥

---

## अथ पुत्तलिका-शापमोचनं नाम द्वात्रिंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावदुपविशति, तावदन्या पुत्तलिका भणति,—"भो राजन्! अस्मिन् सिंहासने विक्रमार्क एव

(च) छिन्धि—त्रोटय, छेदन कुरु इत्यर्थः।

(छ) प्रतिज्ञाय—अङ्गीकृत्य।

इति एकविंशोपाख्यानम् ॥२१॥

उपवेष्टुं क्षमः, नान्यः; तस्य विक्रमस्य सदृशो राजा भूमण्डले नास्ति। यः काष्ठमयेन (ञ) खड्गेन पृथिवीमध्ये भ्रमन् सर्वान् पृथ्वीधरान् विजित्य एकच्छत्रेण (झ) राज्यमकरोत्; यो हि अन्येषां शङ्कां निराकृत्य आत्मनः शङ्कां प्रावर्त्तयत्। (ञ) भूमण्डले यावन्तो राजानः सन्ति, तेषां सर्वेषां वशीकरण-मन्त्रः (ट) प्रयुक्तः। समस्तान् दुर्जनजनान् निष्काश्य (ठ) याचकानां दारिद्र्यं मोचयित्वा, दुर्भिक्षदुःखादीन् निवार्य्य च विक्रमेण पृथिवी पालिता। अतो विक्रमसदृशो राजा नास्ति। एवम् औदार्य्यादयो गुणास्त्वयि विद्यन्ते यदि, तर्हि अस्मिन् सिंहासने समुपविश"। तत् श्रुत्वा राजा भोज-स्तूष्णीमासीत्।

पुनरपि द्वात्रिंशत्पुत्तलिका भोजराजमब्रवीत्,—"भो भोज-राज! विक्रमादित्यो राजा तथाविधः, त्वमपि सामान्यो

---

(ञ) काष्ठमयेन—काष्ठनिर्म्मितेन। राज्ञः प्रभावातिशय्यख्यापिकोक्तिरियं, स्वप्रभावेणैव सर्वान् राज्ञः विजयते, खड्गस्तु राजचिह्नमात्रम्। तस्य किमपि प्रयोजनं नास्ति इति काष्ठमयत्वेन निर्द्देशः कृतः।

(झ) पृथ्वीधरान्—भूपालान्। विजित्य—पराभूय। एकच्छत्रेण—एकम् अद्वितीयं, छत्रं सार्व्वभौमनृपचिह्नम् आतपत्रं, तेन उपलक्षितः [उपलक्षणे तृतीया] एकच्छत्री, सम्राट् इत्यर्थः।

(ञ) यः इति।—अन्येषाम्—अन्यराजतः, इतरेभ्यो वा, शङ्का—भीति, निराकृत्य—निवार्य्य, आत्मनः,—स्वस्मात्, शङ्का-त्रास, प्रावर्त्तयत्—प्रवर्त्तनामकारयत्, उद्पादयदित्यर्थः, जनाः अन्येभ्यः पराभवशङ्कां विहाय दुष्टदमकत्वेन तस्मादेव बिभ्यति इति भावः।

(ट) वशीकरणमन्त्रः—अवशः प्रागनायत्तः, वश आयत्तः, क्रियते अनेन इति वशीकरणं तदर्थं मन्त्रः,—मन्त्रणा, वशक्रियासम्पादनार्थमन्त्रणाविशेष। सर्पादयो यथा मन्त्रेण वशीभूताः नम्रशिरसश्च भवन्ति, तद्वत् तस्य मन्त्रणाकौशलेन सर्वे राजानः अधीनीभूताः प्रणमितमौलयश्च आसन् इति भावः।

(ठ) निष्काश्य—निःसार्य्य दूरीकृत्य इत्यर्थः।

न, युवां द्वौ नरनारायणावतारधारिणौ (ड); तस्मात् त्वत्तः (ढ) परमपवित्रचरित्रः, सकलकलाप्रवीणः, औदार्य्य-गुणविशिष्टो राजा वर्त्तमानसमये नास्ति। तव प्रसादात् अस्माकं द्वात्रिंशत्पुत्तलिकानां पापक्षयो जातः, शापात् विमुक्तिरपि जाता"। भोजेनोक्तं,—"तत् कथम्? कथय शापस्य वृत्तान्तम्"।

पुत्तलिका अवदत्,—"श्रूयतां राजन्! द्वात्रिंशत् सुराङ्गनाः पार्वत्याः नर्त्तक्यः, तस्याः परमप्रेमास्पदीभूताश्च (ण) आसन्। प्रत्येकं नामधेयानि श्रूयन्ताम्;—मिश्रकेशी १, प्रभावती २, सुप्रभा ३, इन्द्रसेना ४, सुदती ५, अनङ्गनयना ६, कुरङ्ग-नयना ७, लावण्यवती ८, कामकलिका ९, चण्डिका १०, विद्याधरी ११, प्रज्ञावती १२, जनमोहिनी १३ विद्यावती १४, निरुपमा १५, हरिमध्या १६, मदनसुन्दरी १७, विलास-रसिका १८, शृङ्गारकलिका १९, मन्मथसञ्जीवनी २०, रति-लीला २१, मदनवती २२, चित्ररेखा २३, सुरतगह्वरा २४, प्रियदर्शना २५, कामोन्मादिनी २६, सुखसागरा २७, शशि-कला २८, चन्द्ररेखा २९, हंसगामिनी ३०, कामरसिका ३१, उन्मादिनी ३२ च।

एकदा परमप्रेम्णा विलासेन (त) च अन्योऽन्यम् ईक्ष-माणौ (थ) विहारमन्दिरस्थौ शङ्करौ दुर्बुद्धिवशात् नारीजनसुलभ-

(ड) नरेति।—नरश्च नारायणश्च नरनारायणौ तयोः अवतारम् अंशम्, अंशरूपेण प्रादुर्भावमिति यावत्, धारयति बिभर्त्ति तौ नरनारायणावतारधारिणौ नरनारायणांशरूपिणौ इत्यर्थः।

(ढ) त्वत्तः,—त्वदपेक्षया इत्यर्थः।

(ण) परमप्रेमास्पदीभूता—अनुत्तमस्नेहभागिन्यः।

(त) विलासेन—विभ्रमेण, साभिलाषभावविशेषेण।

(थ) ईक्षमाणौ—पश्यन्तौ।

कौतुकाभिः अस्माभिः दृष्टौ। तत् दृष्ट्वा देवी पार्वती सकोपमस्मान् अशपत्,—'भवत्यो निर्जीवाः पुत्तलिका भूत्वा इन्द्रस्य सिंहासने लगन्तु'। ततोऽस्माभिश्च सप्रणिपातं शापावसानं (द) याचितम्। अथ सा देवी समवदत्,—'यदा तत् सिंहासनं विक्रमेण अधिष्ठितं भूत्वा पुनः भोजस्य हस्तगतं भविष्यति, यदा च विक्रमचरितं भोजराजा युष्मत् श्रोष्यति, तदैव शापावसानं भविष्यति' इति। सुचिरकालादनन्तरम् अद्य भवत्प्रसादात् वयं पार्व्वतीशचरणौ दृष्ट्वा मोदिष्यामः (ध)। त्वमपि एतत्सिंहासनस्योपरि देवालयं कारयित्वा, तत्र अष्टदले (न) उमामहेश्वरमूर्त्तिं प्रतिष्ठाप्य, प्रतिदिनं षोड़शोपचारैः पूजां कारयतु, वर्णाश्रमधर्म्मनिरतान् (प) लोकांश्च परिपालयन् उर्वीं (फ) भुनक्तु, तेन तौ तवोपरि प्रसन्नौ भूत्वा सर्वाभीष्टं पूरयिष्यतः" इति।

[ इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरी-भोजसंवादे पुत्तलिका-शापमोचन नाम द्वात्रिंशोपाख्यानम् ] ॥ ३२ ॥

---

(द) शापेति।—शापस्य अवसानं विरामः, शापात् मुक्तिरित्यर्थः।

(ध) मोदिष्यामः,—प्रीतिमनुभविष्यामः।

(न) अष्टदले—अष्टपत्रविशिष्टपद्मे।

(प) वर्णेति।—वर्णानां चतुर्वर्णानां, ये आश्रमाः ब्रह्मचर्य्यादयः, तेषु विहिते धर्म्मे अनुष्ठेये, निरतान् प्रवृत्तान्, स्थितानित्यर्थः।

(फ) उर्वीं—पृथिवीम्।

इति द्वात्रिंशोपाख्यानम् ॥ ३२ ॥

## उपसंहारः ।

एवमवसिते पुत्तलिकाऽऽख्याने "तव नर्त्तक्यस्ताः राज्ञः सकाशादनुज्ञां गृहीत्वा अत्रैव आगच्छन्ति, पश्य पश्य ॥"। पार्व्वत्यै एवमुक्त्वा विरत एव परमेश्वरे ताः द्वात्रिंशत् कैलासशिखरं समागत्य उमा-महेश्वरयोः चरणौ प्रणेमुः। देवी अपि ताः दृष्ट्वा सहर्षम आशिषा संवर्द्ध्य परमेशं प्राह,—"भो नाथ! तदा क्रोधवेगं निरोद्धुमक्षमया मया यः शापः आभ्यः (ब) दत्तः, तन्मूलिका (भ) सकललोकचित्तचमत्कारिणी, दयापरोपकारादि-गुणेषु च प्रवृत्तिविधायिनी, तव मुखविनिर्गता इयं विक्रमकथा सर्व्वप्राणिनां परोपकारादिषु उत्सववर्द्धिनी भूत्वा जगद्धिताय वर्त्तताम्; इमा अपि भवदनुग्रहात् नृत्यगीतादिकलासु सर्व्वत्रैव विजयन्ताम्" (म)। देवोऽपि सस्मितमाह,—

'तथोम्'

---

(ब) आभ्यः,—एताभ्यः अप्सरोभ्यः इत्यर्थः।

(भ) तन्मूलिका—शापजन्या इत्यर्थः।

(म) विजयन्ता—सर्व्वोत्कर्षेण वर्त्तन्ताम्।

